# रामायणम्।

## उत्तरकाण्डम्।

महर्षिवाल्मीकिप्रणीतम्।

रामानुज-कृत-टीका-समेतम्।

श्रीयुक्तद्वारकानाथभञ्जमहानुभावस्याभ्यनुज्ञया

श्रीहेमचन्द्रभट्टाचार्य्येण

संशोधितं, भाषान्तरितं, प्रकाशितञ्च।

कलिकाताराजधान्याम्।

वाल्मीकि यन्त्रे

श्रीविश्वनाथ नन्दिना मुद्रितम्।

शकाब्दाः १८०६।

# रामायणम्।

## उत्तरकाण्डम्।

### प्रथमः सर्गः।

प्राप्तराज्यस्य रामस्य राक्षसानां वधे कृते।
आजग्मुर्मुनयः सर्वे राघवं प्रतिनन्दितुम्॥ १॥

उत्तरे पूत्तरं काण्डं कतकोऽस्यां निजे पदे।
स्थापयित्वा ययं देवे रामो नः कुलदैवतम्॥ १॥

[illegible] रामस्य प्रथमानुपसंवर्धवैभवप्रतिपादनद्वारा तज्जेतृत्वेन [illegible] परात्परातिशयं प्रतिपादयितुं तदन्वयवैभवं तद्वैरिपरकंसमिति [illegible] कौतुकाय भ्रामता इत्याह;—प्राप्तेति। राक्षसानां

कौशिकोऽथ यवक्रीतो गार्ग्यो गालव एव च।
कण्वो मेधातिथेः पुत्रः पूर्वस्यां दिशि ये श्रिताः॥ २॥
स्वस्त्यात्रेयश्च भगवान्नमुचिः प्रमुचिस्तथा।
अगस्त्योऽत्रिश्च भगवान् सुमुखो विमुखस्तथा॥ ३॥
आजग्मुस्ते सहागस्त्या ये श्रिता दक्षिणां दिशम्।
नृषङ्गुः कहषी धौम्यः कौषेयश्च महानृषिः॥ ४॥
तेऽप्याजग्मुः सशिष्या वै ये श्रिताः पश्चिमां दिशम्।
वशिष्ठः कश्यपोऽथात्रिर्विश्वामित्रः सगौतमः॥ ५॥
जमदग्निर्भरद्वाजस्तेऽपि सप्तर्षयस्तथा।
उदीच्यां दिशि सप्तैते नित्यमेव निवासिनः॥ ६॥

वधे कृते अनन्तरं प्राप्तराज्यस्य प्राप्तराज्याभिषेकस्य समीपं मुनय आजग्मुः। किमर्थम्। राघवं प्रतिनन्दितुम्। तद्वैभवमभिष्टोतुमित्यर्थः॥ १॥

पूर्वस्यां दिशि ये श्रिताः पूर्वदिशि प्रधानतया ये स्थिता इत्यर्थः॥ २॥

स्वस्तिकर आत्रेयः स्वस्त्यात्रेयः॥ ३॥ ४॥ ५॥

तेऽपि उक्तवसिष्ठादिरूपाः सप्तर्षयोऽप्यागता इत्यर्थः। तेषां स्वरूपकथनमुदीच्यां दिशीत्यादि। ननु पुरोहितो वसिष्ठो नित्यं समीप एव वर्त्तते। को नामासौ वसिष्ठो य उत्तरदिशः कश्यपादिभिः सहागत इति चेत् शृणु। यथागस्त्यस्तेजोमयत्वेन स्वमये नित्यस्थितोऽपि

सम्प्राप्यैते महात्मानो राघवस्य निवेशनम् ।
विष्ठिताः प्रतिहारार्थं हुताशनसमप्रभाः ॥ ७ ॥
वेदवेदाङ्गविदुषो नानाशास्त्रविशारदाः ।
द्वाःस्थं प्रोवाच धर्मात्मा अगस्त्यो मुनिसत्तमः ॥ ८ ॥
निवेद्यतां दाशरथेर्ऋषयो वयमागताः ।
प्रतीहारस्ततस्तूर्णमगस्त्यवचनाद्द्रुतम् ॥ ९ ॥
समीपं राघवस्याशु प्रविवेश महात्मनः ।
नयेङ्गितज्ञः सद्वृत्तो दक्षो धैर्य्यसमन्वितः ॥ १० ॥
स रामं दृश्य सहसा पूर्णचन्द्रसमद्युतिम् ।
अगस्त्यं कथयामास सम्प्राप्तमृषिसत्तमम् ॥ ११ ॥
श्रुत्वा प्राप्तान्मुनींस्तांस्तु बालसूर्य्यसमप्रभान् ॥
प्रत्युवाच ततो द्वाःस्थं प्रवेशय यथासुखम् ॥ १२ ॥

योगवैभवात् भूलोके स्वाश्रमस्थोऽपि । तथा वसिष्ठोऽपि ज्योतिर्मण्डले सप्तर्षिमध्यगोऽप्यस्ति भूलोके च । तत्र सप्तर्षिमण्डलस्थस्तैः सहागत इत्युच्यते इति वदन्ति ॥ ६ ॥

प्रतिहारो द्वाःस्थस्तदर्थं तन्मुखेन रामाय स्वागमननिवेदनार्थम् । विष्ठिता द्वारि स्थिता इत्यर्थः ॥ ७ ॥

अवस्थानानन्तरं सर्वानुमत्याऽगस्त्यो द्वाःस्थमुवाच ॥ ८ ॥

किमुवाच तदाह,—निवेद्यतामिति । तूर्णमिति मानसी त्वरा । द्रुतमिति कायिकी उक्ता ॥ ९ ॥

दृष्ट्वा प्राप्तान् मुनींस्तांस्तु प्रत्युत्थाय कृताञ्जलिः।
पाद्यार्घ्यादिभिरानर्च्च गां निवेद्य च सादरम् ॥ १३ ॥
रामोऽभिवाद्य प्रयत आसनान्यादिदेश ह।
तेषु काञ्चनचित्रेषु महत्सु च वरेषु च ॥ १४ ॥
कुशान्तर्धानदत्तेषु मृगचर्मयुतेषु च।
यथार्हमुपविष्टास्ते आसनेष्वृषिपुङ्गवाः ॥ १५ ॥
रामेण कुशलं पृष्टाः सशिष्याः सपुरोगमाः।
महर्षयो वेदविदो रामं वचनमब्रुवन्।
कुशलं नो महाबाहो सर्वत्र रघुनन्दन ! ॥ १६ ॥
त्वान्तु दिष्ट्या कुशलिनं पश्यामो हतशात्रवम्।
दिष्ट्या त्वया हतो राजन् ! रावणो लोकरावणः ॥ १७ ॥

आश्वित्यनेन राजावसरपरीक्षाभावो विवक्षितः ॥ १० ॥ ११ ॥ ॥ १२ ॥

निवेद्य। प्रत्येकमिति शेषः ॥ १३ ॥

वरेषु बहुमूल्येषु ॥ १४ ॥

कुशान्तर्धानदत्तेषु कुशैरन्तर्धानं दत्तं कृतं येषु। कुशास्तृतेष्वित्यर्थः ॥ १५ ॥

सपुरोगमाः पुरोगमैः प्रधानैः सहिताः ॥ १६ ॥

हतशात्रवं हतशत्रुसमूहम्। त्वां भाग्येन कुशलिनं पश्यामस्तेन नः कुशलमेव। यत्त्वया शत्रुर्हतस्तेनैवास्माकं कुशलमित्यर्थः ॥ १७ ॥

नहि भार: स ते राम ! रावण: पुत्रपौत्रवान्।
अधनुस्त्वं हि लोकांस्त्रीन् विजयेथा न संशय: ॥ १८ ॥
दिष्ट्या त्वया हतो राम ! रावण: पुत्रपौत्रवान्।
दिष्ट्या विजयिनं त्वाद्य पश्याम: सह सीतया ॥ १९ ॥
लक्ष्मणेन च धर्मात्मन् ! भ्रात्रा त्वद्धितकारिणा।
मातृभिर्भ्रातृसहितं पश्यामोऽद्य वयं नृप ! ॥ २० ॥
दिष्ट्या प्रहस्तो विकटो विरूपाक्षो महोदर:।
अकम्पनश्च दुर्धर्षो निहतास्ते निशाचरा: ॥ २१ ॥
यस्य प्रमाणाद्विपुलं प्रमाणं नेह विद्यते।
दिष्ट्या ते समरे राम ! कुम्भकर्णो निपातित: ॥ २२ ॥
त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ।
दिष्ट्या ते निहता राम ! महावीर्या निशाचरा: ॥ २३ ॥
दिष्ट्या त्वं राक्षसेन्द्रेण द्वन्द्वयुद्धमुपागत:।
देवतानामवध्येन विजयं प्राप्तवानसि ॥ २४ ॥

दिष्ट्या त्वया हत इत्युक्त्वा पुनर्विचार्य्याह:। पुत्रपौत्रवानपि रावणस्ते न भार:। तद्वधस्तवेषत्कर इत्यर्थ:। तदेव दर्शयति। स धनुरिति। विजयेथा:। विपराभ्यां जेरिति तङ्॥ १८ ॥ १९ ॥

लक्ष्मणेन चेति। अस्यार्धस्थे दिष्ट्या राक्षसा हता इति शेष:। मातृभिरित्यस्य दिष्ट्येत्यादि: युक्तमिति शेष: ॥ २० ॥ २१ ॥

यस्य प्रमाणादाकारप्रमाणात् ॥ २२ ॥ २३ ॥ २४ ॥

संख्ये तस्य न किञ्चित्तु रावणस्य पराभवः।
द्वन्द्वयुद्धमनुप्राप्तो दिष्ट्या ते रावणिर्हतः॥ २५ ॥
दिष्ट्या तस्य महाबाहो! कालस्येवाभिधावतः।
मुक्तः सुररिपोर्वीर! प्राप्तश्च विजयस्त्वया॥ २६ ॥
अभिनन्दाम ते सर्वे संश्रुत्येन्द्रजितो वधम्।
अवध्यः सर्वभूतानां महामायाधरो युधि॥ २७ ॥
विस्मयस्त्वेष चास्माकं तं श्रुत्वेन्द्रजितं हतम्।
दत्वा पुण्यामिमां वीर! सौम्यामभयदक्षिणाम्।
दिष्ट्या वर्धसि काकुत्स्थ! जयेनामित्रकर्शन!॥ २८ ॥

दुष्टरावणवधे न तव भारस्तिरोहितरावणिवध एव तु दुष्कर इत्याहुः। संख्ये तस्येति। संख्ये तस्य रावणस्य। त्वत्कर्तृकः पराभव आक्रमणमिति यत्तन्न किञ्चिदपि तु दिष्ट्या तिरोधानसाधनयागभङ्गेन द्वन्द्वयुद्धमनुप्राप्तोऽवएव हतो रावणिरिति यदिदमेव बह्विति शेषः। २५ ॥

कालस्येवालक्ष्यमभिधावतस्तस्य मुक्तः। शरबन्धादिकृतपरमकष्टा-दिति शेषः। २६ ॥

विस्मयहेतुरवध्य इति। यतः सोऽवध्यत्वादिगुणोऽत एष च एष एव इन्द्रजिद्वधोऽस्माकं विस्मयो विस्मयकर इत्यन्वयः। तत्तस्मादिन्द्र-जितं हतं श्रुत्वा वयन्तुष्टा इति शेषः। २७ ॥

अभयदक्षिणाम् अभयदानं दत्वा। स्थविभ्य इति शेषः। वर्धसि वर्धसे। २८ ॥

श्रुत्वा तु वचनं तेषां मुनीनां भावितात्मनाम् ।
विस्मयं परमं गत्वा रामः प्राञ्जलिरब्रवीत् ॥ २९ ॥
भगवन्तः कुम्भकर्णं रावणञ्च निशाचरम् ।
अतिक्रम्य महावीर्य्यौ किं प्रशंसथ रावणिम् ॥ ३० ॥
महोदरं प्रहस्तञ्च विरूपाक्षञ्च राक्षसम् ।
मत्तोन्मत्तौ च दुर्धर्षौ देवान्तकनरान्तकौ ।
अतिक्रम्य महावीरान् किं प्रशंसथ रावणिम् ॥ ३१ ॥
अतिकायं त्रिशिरसं धूम्राक्षञ्च निशाचरम् ।
अतिक्रम्य महावीर्य्यान् किं प्रशंसथ रावणिम् ॥ ३२ ॥
कीदृशो वै प्रभावोऽस्य किं बलं कः पराक्रमः ।
केन वा कारणेनैष रावणादतिरिच्यते ॥ ३३ ॥
शक्यं यदि मया श्रोतुं न खल्वाज्ञापयामि वः ।
यद्यगुह्यं न चेद्वक्तुं श्रोतुमिच्छामि कथ्यताम् ॥ ३४ ॥

विस्मयं गत्वा । राघवेणोक्तविषयवाक्येनेति शेषः ॥ २९ ॥
तदेवाह,—भगवन्त इति सम्बोधनम् ॥ ३० ॥ ३१ ॥ ३२ ॥
कीदृशोऽस्य प्रभावादिः । यतो युष्माभिः प्रशस्यत इति शेषः ।
प्रभावस्तपःप्रभावः । बलं शारीरम् ॥ ३३ ॥
शक्यमिति । यदि गुह्यं न भवति । यदि युष्माभिर्वक्तुं शक्यम् ।
यदि च मया श्रोतुं शक्यम् । तदा कथ्यताम् । श्रोतुमिच्छामि केवलं
न खलु वक्तुमाज्ञापयामि ॥ ३४ ॥

शक्रोऽपि विजितस्तेन कथं लब्धवरश्च सः।
कथञ्च बलवान् पुत्रो न पिता तस्य रावणः॥ १५ ॥
कथं पितुश्चाप्यधिको महाहवे
शक्रस्य जेताहि कथं स राक्षसः।
वराश्च लब्धाः कथयस्व मेऽद्य
पाप्रच्छतश्चास्य मुनीन्द्र! सर्वम्॥ १६ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
प्रथमः सर्गः॥ १ ॥

पिता रावणो न बलवान् पुत्रापेक्षयेति च कथम्॥ १४॥ १६॥

इति रामाभिरामे श्रीरामीये रामायणटीके
उत्तरकाण्डे प्रथमः सर्गः॥ १ ॥

## द्वितीयः सर्गः ।



तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः ।
कुम्भयोनिर्महातेजा वाक्यमेतदुवाच ह ॥ १ ॥
शृणु राम ! तथावृत्तं तस्य तेजो बलं महत् ।
जघान शत्रून्येनासौ न च वध्यः स शत्रुभिः ॥ २ ॥
तावत्ते रावणस्येदं कुलं जन्म च राघव ! ।
वरप्रदानञ्च तथा तस्मै दत्तं ब्रवीमि ते ॥ ३ ॥
पुरा कृतयुगे राम ! प्रजापतिसुतः प्रभुः ।
पुलस्त्यो नाम ब्रह्मर्षिः साक्षादिव पितामहः ॥ ४ ॥

अथ रावणाद्युत्पत्तिशेषतया तत्कूटस्थपौलस्त्योत्पत्तिमाह,—तस्य तद्वचनमिति ॥ १ ॥

तस्य तेज आद्युद्दिश्य तथावृत्तं वृत्तकथां ब्रवीमि त्वं शृणु । असौ रावणः येन कारणेन शत्रून् जघान स च शत्रुभिर्न वध्यस्तत्कारणं शृणु ॥ २ ॥

तावत्प्रथमं रावणस्य कुलादि ब्रवीमि । पश्चाद्रावणस्य वक्ष्यामीति [illegible]ः । तावत्ते रावणस्येति पाठः ॥ ३ ॥

नानुकीर्त्या गुणास्तस्य धर्मतः शीलतस्तथा।
प्रजापतेः पुत्र इति वक्तुं शक्यं हि नामतः॥ ५॥
प्रजापतिसुतत्वेन देवानां वल्लभो हि सः।
इष्टः सर्वस्य लोकस्य गुणैः शुभ्रैर्महामतिः॥ ६॥
स तु धर्मप्रसङ्गेन मेरोः पार्श्वे महागिरेः।
तृणबिन्द्वाश्रमं गत्वा न्यवसन् मुनिपुङ्गवः॥ ७॥
तपस्तेपे स धर्मात्मा स्वाध्यायनियतेन्द्रियः।
गत्वाश्रमपदं तस्य विघ्नं कुर्वन्ति कन्यकाः॥ ८॥
ऋषिपन्नगकन्याश्च राजर्षितनयाश्च याः।
क्रीड़न्त्योऽप्सरसश्चैव तं देशमुपपेदिरे॥ ९॥
सर्वर्त्तुषूपभोग्यत्वाद्रम्यत्वात् काननस्य च।

तत्र कुलमाह,—पुरेति। पुलस्त्यो दशप्रजापतिष्वेकः पितामह इव। तपोवैभवजनितनिग्रहानुग्रहसामर्थ्यैरिति भावः॥ ४॥

तदेवाह,—नानुकीर्त्या इति। विविच्य वर्णयितुमशक्यत्वादित्यर्थः। धर्मतः शीलतश्चोत्पन्ना गुणा इत्यन्वयः। अथ प्रकारान्तरेण तद्वैभवं बोधयति। प्रजापतेरिति। प्रजापतेः पुत्र इति नामत एव तस्यकीर्त्तनत एव तद्गुणाधिक्यं वक्तुं शक्यम्। प्रजापतिपुत्रत्वोक्त्या तस्यैवाराध्य-गम्यकल्याणगुणत्वमुक्तं भवतीत्यर्थः॥ ५॥ ६॥

धर्मप्रसङ्गेन तपःसम्पादनेच्छया॥ ७॥

विघ्नं कुर्वन्ति इच्छाभिप्रायेण न तु बुद्धिपूर्वम्॥ ८॥ ९॥

नित्यशस्तास्तु तं देशं गत्वा क्रीड़न्ति कन्यकाः ॥ १० ॥
देशस्य रमणीयत्वात् पुलस्त्यो यत्र स द्विजः ।
गायन्त्यो वादयन्त्यश्च लासयन्त्यस्तथैव च ॥ ११ ॥
मुनेस्तपस्विनस्तस्य विघ्नञ्चक्रुरनिन्दिताः ।
अथ रुष्टो महातेजा व्याजहार महामुनिः ॥ १२ ॥
या मे दर्शनमागच्छेत् सा गर्भं धारयिष्यति ।
तास्तु सर्वाः प्रतिश्रुत्य तस्य वाक्यं महात्मनः ॥ १३ ॥
ब्रह्मशापभयाद्भीतास्तं देशं नोपचक्रमुः ।
तृणविन्दोस्तु राजर्षेस्तनया न शृणोति तत् ॥ १४ ॥
गत्वाश्रमपदं तत्र विचचार सुनिर्भया ।
न चापश्यच्च सा तत्र काञ्चिदभ्यागतां सखीम् ॥ १५ ॥
तस्मिन् काले महातेजाः प्राजापत्यो महानृषिः ।
स्वाध्यायमकरोत्तत्र तपसा भावितः स्वयम् ॥ १६ ॥
सा तु वेदश्रुतिं श्रुत्वा दृष्ट्वा वै तपसो निधिम् ।

तदेवाह,—सर्वत्त्विति । तं देशमाश्रमदेशम् ॥ १० ॥
वादयन्त्यो वीणादिकमिति शेषः । लासयन्त्यो नृत्यन्त्यः ॥ ११ ॥
॥ १२ ॥ १३ ॥
तदिति । शापवाक्यमित्यर्थः । न शृणोति न सुश्राव ॥ १४ ॥ १५ ॥
स्वाध्यायं वेदाध्ययनम् ॥ १६ ॥
वेदश्रुतिं वेदध्वनिं श्रुत्वा कोऽधीत इति गत्वा तपसोनिधिं दृष्ट्वा

अभवत्पाण्डुदेहा सा सुव्यञ्जितशरीरजा ॥ १७ ॥
बभूव च समुद्विग्ना दृष्ट्वा तद्दोषमात्मनः।
इदं मे किन्त्विति ज्ञात्वा पितुर्गत्वाश्रमे स्थिता ॥ १८ ॥
तान्तु दृष्ट्वा तथाभूतां तृणबिन्दुरथाब्रवीत्।
किन्त्वमेतत्त्वसदृशं धारयस्यात्मनो वपुः ॥ १९ ॥
सा तु कृत्वाञ्जलिं दीना कन्योवाच तपोधनम्।
न जाने कारणं तात ! येन मे रूपमीदृशम् ॥ २० ॥
किन्तु पूर्वं गतास्म्येका महर्षेर्भावितात्मनः।
पुलस्त्यस्याश्रमं दिव्यमन्वेष्टुं स्वसखीजनम् ॥ २१ ॥
न च पश्याम्यहं तत्र काश्चिदभ्यागतां सखीम्।
रूपस्य तु विपर्य्यासं दृष्ट्वा त्रासादिहागता ॥ २२ ॥
तृणबिन्दुस्तु राजर्षिस्तपसा द्योतितप्रभः।
ध्यानं विवेश तत्रापि अपश्यदृषिकर्मजम् ॥ २३ ॥

च पाण्डुदेहागर्भोत्पत्त्या सुव्यञ्जितशरीरजा शरीराज्जायत इति शरीरजो गर्भः सुप्रकाशितो यस्याः सा ॥ १७ ॥

तद्दोषं गर्भसम्भवरूपदोषं दृष्ट्वोद्विग्ना बभूव। किन्त्विति। दोषस्वरूपमिति। ज्ञात्वेत्यर्थः ॥ १८ ॥

असदृशं कन्यात्वस्यायुक्तम् ॥ १९ ॥ २० ॥

पूर्वं गता प्रथमं गता ॥ २१ ॥ २२ ॥

तत्रापि। गर्भकारणमित्यर्थः ॥ २३ ॥

स तु विज्ञाय तं शापं महर्षेर्भावितात्मनः ।
गृहीत्वा तनयां गत्वा पुलस्त्यमिदमब्रवीत् ॥ २४ ॥
भगवंस्तनयां मे त्वं गुणैः स्वैरेव भूषिताम् ।
भिक्षां प्रतिगृहाणेमां महर्षे ! स्वयमुद्यताम् ॥ २५ ॥
तपश्चरणयुक्तस्य श्राम्यमाणेन्द्रियस्य ते ।
शुश्रूषणपरा नित्यं भविष्यति न संशयः ॥ २६ ॥
तं ब्रुवाणन्तु तद्वाक्यं राजर्षिं धार्मिकं तदा ।
जिघृक्षुरब्रवीत् कन्यां बाढमित्येव स द्विजः ॥ २७ ॥
दत्वा तु तनयां राजा स्वमाश्रमपदं गतः ।
सापि तत्रावसत् कन्या तोषयन्ती पतिं गुणैः ॥ २८ ॥
तस्यास्तु शीलवृत्ताभ्यां तुतोष मुनिपुङ्गवः ।
प्रीतः स तु महातेजा वाक्यमेतदुवाच ह ॥ २९ ॥

तनयां गृहीत्वा पुलस्त्यं गत्वा ॥ २४ ॥

इमां भिक्षां प्रतिगृहाण भिक्षात्वेन स्वीकुर्वित्यब्रवीत्। ननूर्द्ध्वरेतसो मम नानया प्रयोजनं तत्राह,—स्वयमुद्यतामिति। उद्यतामाहृतां भिक्षां पुरस्तादप्रवेदिताम्। भोज्यां मने प्रजानाथो अपि दुष्कृतकर्मण इत्युक्तेः। स्वयमुद्यतेयं ग्राह्यैवेत्यर्थः ॥ २५ ॥

तत्प्रतिग्रहफलमाह,—शुश्रूषणपरेति ॥ २६ ॥

जिघृक्षुः यथान्यायं पाणिग्रहणपूर्वकमिति शेषः ॥ २७ ॥

तदेवोक्तम्। तोषयन्ती पतिमिति ॥ २८ ॥ २९ ॥

परितुष्टोऽस्मि सुश्रोणि ! गुणानां सम्पदा भृशम् ।
तस्माद्देवि ! ददाम्यद्य पुत्रमात्मसमं तव ।
उभयोर्वंशकर्त्तारं पौलस्त्य इति विश्रुतम् ॥ ३० ॥
यस्मात्तु विश्रुतो वेदस्त्वयेहाध्ययतो मम ।
तस्मात् स विश्रवा नाम भविष्यति न संशयः ॥ ३१ ॥
एवमुक्ता तु सा देवी प्रहृष्टेनान्तरात्मना ।
अचिरेणैव कालेनासूतविश्रवसं सुतम् ।
त्रिषु लोकेषु विख्यातं यशोधर्मसमन्वितम् ॥ ३२ ॥
श्रुतिमान् समदर्शी च व्रताचाररतस्तथा ।
पितेव तपसायुक्तो ह्यभवद्विश्रवा मुनिः ॥ ३३ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
द्वितीयः सर्गः ॥ २ ॥

उभयोः । मातुः पितुश्चेत्यर्थः ॥ ३० ॥
अध्ययतः अधीयानस्य । वेदो विश्रुतो गर्भहेतुरिति शेषः ॥ ३१ ॥
॥ ३२ ॥ ३३ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे द्वितीयः सर्गः ॥ २ ॥

## तृतीयः सर्गः ।



अथ पुत्रः पुलस्त्यस्य विश्रवा मुनिपुङ्गवः ।
अचिरेणैव कालेन पितेव तपसि स्थितः ॥ १ ॥
सत्यवान् शीलवान् दान्तः स्वाध्यायनिरतः शुचिः ।
सर्वभोगेष्वसंसक्तो नित्यं धर्मपरायणः ॥ २ ॥
ज्ञात्वा तस्य तु तद्वृत्तं भरद्वाजो महामुनिः ।
ददौ विश्रवसे भार्य्यां स्वसुतां देववर्णिनीम् ॥ ३ ॥
प्रतिगृह्य तु धर्मेण भरद्वाजसुतां तदा ।
प्रजान् वीक्षिकया बुद्ध्या श्रेयो ह्यस्य विचिन्तयन् ॥ ४ ॥
मुदा परमया युक्तो विश्रवा मुनिपुङ्गवः ।

अथ पौलस्त्याद्विश्रवसः कुबेरोत्पत्तिः । अथेति ॥ १ ॥ २ ॥

तस्य तद्वृत्तम् । विश्रवसस्तादृशचरित्रमित्यर्थः । देववर्णिनीं देवसमानरूपां तन्नाम्नीञ्च ॥ ३ ॥

प्रजान् वीक्षिकया प्रजानां शुभाशुभवीक्षणरूपया बुद्ध्या ज्योतिःशास्त्रसिद्धया । अस्योत्पादयिष्यमाणपुत्रस्य श्रेयो गुणं चिन्तयन् ॥ ४ ॥

स तस्यां वीर्य्यसम्पन्नमपत्यं परमाद्भुतम् ॥ ५ ॥
जनयामास धर्मज्ञः सर्वैर्ब्रह्मगुणैर्वृतम् ।
तस्मिन् जाते तु संहृष्टः स बभूव पितामहः ॥ ६ ॥
दृष्ट्वा श्रेयस्करीं बुद्धिं धनाध्यक्षो भविष्यति ।
नाम चास्याकरोत्प्रीतः सार्धं देवर्षिभिस्तदा ॥ ७ ॥
यस्माद्विश्रवसोऽपत्यं सादृश्याद्विश्रवा इव ।
तस्माद्वैश्रवणो नाम भविष्यत्येष विश्रुतः ॥ ८ ॥
स तु वैश्रवणस्तत्र तपोवनगतस्तदा ।
अवर्धताहुतिहुतो महातेजा यथाऽनलः ॥ ९ ॥
तस्याश्रमपदस्थस्य बुद्धिर्जज्ञे महात्मनः ।

तस्यां भार्य्यायाम् ॥ ५ ॥

सर्वैर्ब्रह्मगुणैः शमतपःशौचादिगुणैर्युक्तमपत्यं जनयामास । पितामहः वैश्रवणपितामहः । पुलस्त्य इत्यर्थः । अत्र स्थाने प्रजान्वेषिकयेत्यर्थमिति कतकस्वरसः । प्रजामन्विच्छति प्रजान्वेषिका तद्गुणागुणपर्य्यालोचिका ज्योतिः शास्त्रविषया बुद्धिस्तया अस्य वैश्रवणस्य श्रेयो विचिन्तयन् पुलस्त्यस्तस्मिन् विश्रवसः पुत्रे जाते तुष्टो बभूवेति तेन व्याख्यानात् ॥ ६ ॥

श्रेयस्करीं धनेशत्वरूपश्रेयःप्राप्तिहेतुभूतां तपोविषयां तस्य बुद्धिं दृष्ट्वा । जन्मलग्नपर्य्यालोचनयेति शेषः । धनाध्यक्षो भविष्यति इति संहृष्टो बभूवेत्यन्वयः । ७ ॥

चरिष्ये परमं धर्मं धर्मो हि परमा गतिः ॥ १० ॥
स तु वर्षसहस्राणि तपस्तप्त्वा महावने ।
यन्त्रितो नियमैरुग्रैश्चकार सुमहत्तपः ॥ ११ ॥
पूर्णे वर्षसहस्रान्ते तं तं विधिमकल्पयत् ।
जलाशी मारुताहारो निराहारस्तथैव च ।
एवं वर्षसहस्राणि जग्मुस्तान्येकवर्षवत् ॥ १२ ॥
अथ प्रीतो महातेजाः सेन्द्रैः सुरगणैः सह ।
गत्वा तस्याश्रमपदं ब्रह्मेदं वाक्यमब्रवीत् ॥ १३ ॥
परितुष्टोऽस्मि ते वत्स ! कर्मणानेन सुव्रत ! ।
वरं वृणीष्व भद्रन्ते वरार्हस्त्वं महामते ! ॥ १४ ॥
अथाब्रवीद्वैश्रवणः पितामहमुपस्थितम् ।
भगवन् लोकपालत्वमिच्छेयं लोकरक्षणम् ॥ १५ ॥
अथाब्रवीद्वैश्रवणं परितुष्टेन चेतसा ।
ब्रह्मा सुरगणैः सार्धं वाढमित्येव हृष्टवत् ॥ १६ ॥

यतो विश्रवसोऽपत्यं रूपसादृश्याद्विश्रवा इव स इवेति अवहार-विषयस्तस्माद्वैश्रवण इति विश्रुतः प्रसिद्धो भविष्यति नाम। अपत्य-प्रत्ययसन्नियोगे न विश्रवसो विश्रवणादेशः ॥ ८ ॥ ९ ॥ १० ॥

तपःतप्त्वा आलोच्य नियमैर्यन्त्रितः। सञ्जातनियम इत्यर्थः ॥ ११ ॥

तं तं विधिं वक्ष्यमाणजलाशित्वादिविधिमित्यर्थः ॥ १२ ॥

अथ भगवत्प्रसादवैभवमाह,—अथ प्रीत इति ॥ १३ ॥ १४ ॥

अहं वै लोकपालानां चतुर्थं स्रष्टुमुद्यतः ।
यमेन्द्रवरुणानाञ्च पदं यत्तव चेप्सितम् ॥ १७ ॥
तद्गच्छ बत धर्मज्ञ ! निधीशत्वमवाप्नुहि ।
शक्राम्बुपयमानाञ्च चतुर्थस्त्वं भविष्यसि ॥ १८ ॥
एतच्च पुष्पकं नाम विमानं सूर्य्यसन्निभम् ।
प्रतिगृह्णीष्व यानार्थं त्रिदशैः समतां व्रज ॥ १९ ॥
स्वस्ति तेऽस्तु गमिष्यामः सर्व एव यथागतम् ।
कृतकृत्या वयं तात ! दत्वा तव वरद्वयम् ॥ २० ॥
इत्युक्त्वा स गतो ब्रह्मा स्वस्थानं त्रिदशैः सह ।
गतेषु ब्रह्मपूर्वेषु देवेष्वथ नभस्तलम् ॥ २१ ॥
धनेशः पितरं प्राह प्राञ्जलिः प्रयतात्मवान् ।
भगवन् ! लब्धवानस्मि वरमिष्टं पितामहात् ॥ २२ ॥
निवासनं न मे देवो विदधे स प्रजापतिः ।
तं पश्य भगवन् ! कञ्चिन्निवासं साधु मे प्रभो ! ।

लोकपालत्वं विस्तरत्वां वैराजविधिनाथत्वम् ॥ १५ ॥ १६ ॥

चतुर्थं चतुर्णां पूरणम् । यमादित्रयस्य यत्पदं लोकपालपदम् । यत्तवेप्सितं त्वं तद्गच्छ निधीशत्वमवाप्नुहि । एवं सति त्वं शक्रादीनां चतुर्थो भविष्यसीति सम्बन्धः ॥ १७ ॥ १८ ॥

त्रिदशैः समतां व्रज । मत्सृष्टिपुत्रत्वेनैव तिष्ठेत्यर्थः ॥ १९ ॥

वरद्वयं निधीशत्वपुष्पकदानरूपम् ॥ २० ॥ २१ ॥ २२ ॥

न च पीड़ा भवेद्यत्र प्राणिनो यस्य कस्यचित् ॥ २३ ॥
एवमुक्तस्तु पुत्रेण विश्रवा मुनिपुङ्गवः।
वचनं प्राह धर्मज्ञ! श्रूयतामिति सत्तम! ॥ २४ ॥
दक्षिणस्योदधेस्तीरे त्रिकूटो नाम पर्वतः।
तस्याग्रे तु विशाला सा महेन्द्रस्य पुरी यथा ॥ २५ ॥
लङ्का नाम पुरी रम्या निर्मिता विश्वकर्मणा।
राक्षसानां निवासार्थं यथेन्द्रस्यामरावती ॥ २६ ॥
तत्र त्वं वस भद्रन्ते लङ्कायां नात्र संशयः।
हेमप्राकारपरिखायन्त्रशस्त्रसमावृता ॥ २७ ॥
रमणीया पुरी सा हि रुक्मवैदूर्यतोरणा।
राक्षसैः सा परित्यक्ता पुरा विष्णुभयार्दितैः ॥ २८ ॥
शून्या रक्षोगणैः सर्वैं रसातलतलं गतैः।
शून्या सम्प्रति लङ्का सा प्रभुस्तस्या न विद्यते ॥ २९ ॥
स त्वं तत्र निवासाय गच्छ पुत्र! यथासुखम्।
निर्दोषस्तत्र ते वासो न बाधस्तत्र कस्यचित् ॥ ३० ॥
एतच्छ्रुत्वा स धर्मात्मा धर्मिष्ठं वचनं पितुः।
निवासयामास तदा लङ्कां पर्वतमूर्धनि ॥ ३१ ॥

निवासनं निवासमित्यर्थः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥
यन्त्ररूपैः शस्त्रैः समावृता ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥
निवेशयामास निवासमकरोदित्यर्थः ॥ ३१ ॥

नैर्ऋतानां सहस्रैस्तु हृष्टैः प्रमुदितैः सदा।
अचिरेणैव कालेन सम्पूर्णा तस्य शासनात्॥ ३२॥
स तु तत्रावसत् प्रीतो धर्मात्मा नैर्ऋतर्षभः।
समुद्रपरिखायां स लङ्कायां विश्रवात्मजः॥ ३३॥
काले काले तु धर्मात्मा पुष्पकेण धनेश्वरः।
अभ्यागच्छद्विनीतात्मा पितरं मातरञ्च हि॥ ३४॥
स देवगन्धर्वगणैरभिष्टुत-
स्तथाप्सरोनृत्यविभूषितालयः।
गभस्तिभिः सूर्य्य इवावभासन्।
पितुः समीपं प्रययौ स वित्तपः॥ ३५॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
तृतीयः सर्गः॥ ३॥

प्रमुदितैर्नैर्ऋतानां सहस्रैः सह निवेशयामासेति सम्बन्धः। सम्पूर्णा धनधान्यादिसर्वैश्वर्य्यपूर्णा। शासनात् पालनात्॥ ३२॥ ३३॥ ३४॥

अवभासन् शोभमानः। अप्सरोनृत्यैर्विभूषितमालयं पुष्पकं यस्य सः॥ ३५॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे तृतीयः सर्गः॥ ३॥

## चतुर्थः सर्गः ।



श्रुत्वागस्त्येरितं वाक्यं रामो विस्मयमागतः ।
कथमासीत्तु लङ्कायां सम्भवो रक्षसां पुरा ॥ १ ॥
ततः शिरः कम्पयित्वा त्रेताग्निसमविग्रहम् ।
तमगस्त्यं मुहुर्दृष्ट्वा स्मयमानोऽभ्यभाषत ॥ २ ॥
भगवन् ! पूर्वमप्येषा लङ्कासीत्पिशिताशिनाम् ।
श्रुत्वेदं भगवद्वाक्यं जातो मे विस्मयः परः ॥ ३ ॥
पुलस्त्यवंशादुद्भूता राक्षसा इति नः श्रुतम् ।

लङ्कायां पूर्वमपि रक्षःस्थितिं श्रुत्वा विस्मितेन रामेण तेषामुत्पत्त्यादिप्रश्ने अगस्त्येन तत्प्रतिपादनं श्रुत्वेति विस्मयमागत इत्युक्तं तच्च किं विषयक श्रवणाद्विस्मयप्राप्तिस्तत्राह—कथमिति । पुरा धनदावस्थितेः पूर्वमपि रक्षसां सम्भवोऽवस्थानादिसम्भव इति यदुक्तं तत्तु कथमासीदिति विस्मयमागतः ॥ १ ॥

ततो विस्मयप्राप्त्यनन्तरम् । मुहुः स्मयमानो विस्मयं कुर्वन् ॥ २ ॥

तदेवाह,—भगवन्निति । पूर्वमपि विश्रवःपुत्रवैश्रवणरावणयोः पूर्वमपि लङ्का पिशिताशिनामावास आसीदिति भगवद्वाक्यमन्यतोऽपि रक्षःसम्भवपरं श्रुत्वा मे विस्मयो जातः ॥ ३ ॥

इदानीमन्यतश्चापि सम्भवः कीर्त्तितस्त्वया ॥ ४ ॥
रावणात् कुम्भकर्णाच्च प्रहस्ताद्विकटादपि।
रावणस्य च पुत्रेभ्यः, किन्नु ते बलवत्तराः ॥ ५ ॥
क एषां पूर्वको ब्रह्मन्! किं नामा च बलोत्कटः।
अपराधञ्च कं प्राप्य विष्णुना द्राविताः कथम् ॥ ६ ॥
एतद्विस्तरतः सर्वं कथयस्व ममानघ!।
कौतूहलमिदं मह्यं नुद भानुर्यथा तमः ॥ ७ ॥
राघवस्य वचः, श्रुत्वा संस्कारालङ्कृतं शुभम्।
अथ विस्मयमानस्तमगस्त्यः प्राह राघवम् ॥ ८ ॥

तदेवाह,—पुलस्त्येति। सोऽस्माकम्। अन्यतश्चापि सम्भवः कीर्त्तितः। लङ्का राक्षसानां निवासार्थं निर्मितेति विश्रवोवाक्यानुवादेनेत्यर्थः ॥ ४ ॥

रावणपुत्रा इन्द्रजिदतिकायादयः। तेभ्यस्ते बलवत्तराः किम्नु यतो विष्णुना तद्विद्रावणेयतितर्मिति भावः ॥ ५ ॥

पूर्वकः कूटस्थः। तद्वंश्याश्च राक्षसाः कमपराधं प्राप्य विष्णुना द्राविताः कथञ्च द्राविताः ॥ ६ ॥

प्राचीनरक्षःकथनेन मह्यं जातमिदं कुतूहलं भानुर्यथा तमो नुदति तथा नुद ॥ ७ ॥

संस्कारालङ्कृतं पदवाक्यार्थसंस्कारयुतम्। विस्मयमानः सर्वोऽप्येवं नाटयतीति विस्मयः ॥ ८ ॥

प्रजापतिः पुरा सृष्ट्वा अपः सलिलसम्भवः ।
तासां गोपायने सत्त्वानसृजत् पद्मसम्भवः ॥ ९ ॥
ते सत्त्वाः सत्त्वकर्त्तारं विनीतवदुपस्थिताः ।
किं कुर्म इति भाषन्तः क्षुत्पिपासाभयार्दिताः ॥ १० ॥
प्रजापतिस्तु तान् सर्वान् प्रत्याह प्रहसन्निव ।
आभाष्य वाचा यत्नेन रक्षध्वमिति मानवाः ॥ ११ ॥
रक्षाम इति तत्रान्यैर्यक्षाम इति चापरैः ।

अपः सृष्ट्वा । भूमेरधोभाववर्त्तिनीरपः सृष्ट्वेत्यर्थः । तत्र सलिलसम्भवः प्रजापतिरभूदित्यन्वयः । अतएव ससर्जादौ तासु वीर्य्यमवासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामह इति मनूक्तेः । आपो वा इदमग्र आसन् । स प्रजापतिः पुष्करपर्णे समभवत् । तथा । आपो वा इदमग्रे सलिलमासीत्तस्मिन् प्रजापतिर्वायुर्भूत्वा चरत्स इमामपश्यत्तां वराहो भूत्वा हरदिति श्रुतेश्च । तदेव पद्मसम्भव इत्यनेन दर्शितम् । तासां स्वसृष्टानामपां गोपायने रक्षणनिमित्तं सत्वान् भूतानि जन्तूनित्यर्थः ॥ ९ ॥

विनीतवत् पितरि विनीताः सन्तः । क्षुत्पिपासाजनितभयेनार्दिताः ॥ १० ॥

प्रहसन्निव । उक्तभयखिद्यमानस्वप्रजाविषयकदयावशात् प्रहासः । मानवा इत्यनेन तेषामुभयरक्षणानुग्रहः सूचितः । वाचा हे सत्वानीति वाचा । आभाष्य सम्बोध्य । यत्नेनेमा आपो रक्षध्वमिति तानि सत्वान्याह ॥ ११ ॥

भुक्षिता भुक्षितैरुक्तास्ततस्तानाह भूतकृत् ॥ १२ ॥
रक्षाम इति यैरुक्तं राक्षसास्ते भवन्तु वः।
यक्षाम इति यैरुक्तं यक्षा एव भवन्तु वः ॥ १३ ॥
तत्र हेतिः प्रहेतिश्च भ्रातरौ राक्षसाधिपौ।
मधुकैटभसङ्काशौ बभूवतुररिन्दमौ ॥ १४ ॥
प्रहेतिर्धार्मिकस्तत्र तपोवनगतस्तदा।
हेतिर्दारक्रियार्थं तु परं यत्नमथाकरोत् ॥ १५ ॥
स कालभगिनीं कन्यां भयां नाम महाभयाम्।
उदावहदमेयात्मा स्वयमेव महामतिः ॥ १६ ॥
स तस्यां जनयामास हेती राक्षसपुङ्गवः।

तत्र तेषु भगवन्नियुक्तभूतेषु मध्ये। भगवत्प्रयुक्तरक्ष्यमिति पदस्याविनाशेनावस्थापनमर्थ इति केचन प्रपन्ना उत्तरोत्तराभिवर्धनरूपपूजनमर्थ इति परे प्रपन्नाः। तत्राद्या रक्षामेति प्रतिवचनं दत्तवन्तः। परे यक्षामेति। यक्षपूजायाम्। उभयमपि लोडुत्तमबहुवचनम्। बुभुक्षिता बुभुक्षितैरित्यस्य स्थाने भुक्षिता भुक्षितैरित्यार्षमभ्यासलोपाभ्यां। अबुभुक्षिताः पिपासिताः ॥ १२ ॥

वो युष्माकं मध्ये ॥ १३ ॥

तत्र भगवत्सृष्टभगवद्विभक्तजातिभेदरक्षो मध्ये। मधुकैटभावसुरौ ॥ १४ ॥

तपोवनगतः विरक्तः सन्निति शेषः ॥ १५ ॥

पुत्रं पुत्रवतां श्रेष्ठो विद्युत्केशमिति श्रुतम् ॥ १७ ॥
विद्युत्केशो हेतिपुत्रः स दीप्तार्कसमप्रभः।
व्यवर्धत महातेजास्तोयमध्य इवाम्बुजम् ॥ १८ ॥
स यदा यौवनं भद्रमनुप्राप्तो निशाचरः।
ततो दारक्रियान्तस्य कर्तुं व्यवसितः पिता ॥ १९ ॥
सन्ध्यादुहितरं सोऽथ सन्ध्यातुल्यां प्रभावतः।
वरयामास पुत्रार्थं हेती राक्षसपुङ्गवः ॥ २० ॥
अवश्यमेव दातव्या परस्मै सेति सन्ध्यया।
चिन्तयित्वा सुता दत्ता विद्युत्केशाय राघव ! ॥ २१ ॥
सन्ध्यायास्तनयां लब्ध्वा विद्युत्केशो निशाचरः।
रमते स तया सार्धं पौलोम्या मघवानिव ॥ २२ ॥
केनचित्त्वथ कालेन राम ! सालकटङ्कटा।
विद्युत्केशाद्गर्भमाप घनराजिरिवार्णवात् ॥ २३ ॥
ततः सा राक्षसी गर्भं घनगर्भसमप्रभम्।

परं यत्नमेव दर्शयति। स इति। कालो वैवस्वतः। स्वयमेवेति। गत्वा प्रार्थनां कृत्वेति शेषः ॥ १६ ॥ १७ ॥ १८ ॥

पिता हेतिः ॥ १९ ॥

प्रभावतः सन्ध्यातुल्यामिति सम्बन्धः। सन्ध्यादुहिता सालकटङ्कटाख्या। इयञ्च रक्षःप्राधान्येन भगवत्सृष्टत्वाद्राक्षसी ॥ २० ॥ २१ ॥ ॥ २२ ॥ २३ ॥

प्रसूता मन्दरं गत्वा गङ्गा गर्भमिवाग्निजम्।
समुत्सृज्य तु सा गर्भं विद्युत्केशरतार्थिनी ॥ २४ ॥
रेमे तु सार्धं पतिना विसृज्य सुतमात्मजम्।
उत्सृष्टस्तु तदा गर्भो घनशब्दसमस्वनः ॥ २५ ॥
तयोत्सृष्टः स तु शिशुः शरदर्कसमद्युतिः।
निधायास्ये स्वयं मुष्टिं रुरोद शनकैस्तदा ॥ २६ ॥
ततो वृषभमास्थाय पार्वत्या सहितः शिवः।
वायुमार्गेण गच्छन्वै शुश्राव रुदितस्वनम् ॥ २७ ॥
अपश्यदुमया सार्धं रुदन्तं राक्षसात्मजम्।
कारुण्यभावात् पार्वत्या भवस्त्रिपुरसूदनः ॥ २८ ॥
तं राक्षसात्मजं चक्रे मातुरेव वयःसमम्।
अमरञ्चैव तं कृत्वा महादेवोऽक्षरो व्ययः ॥ २९ ॥

घनगर्भसमप्रभं जलगर्भमेघसमकान्तिम्। प्रसूता प्रसूतवती। अग्निजं गर्भम् अग्निविसृष्टं माहेश्वरं गर्भमित्यर्थः। विद्युत्केशरतार्थिनी विद्युत्केशेन सह रतं क्रीडामर्थयति तादृशी बभूवेति शेषः ॥ २४ ॥

तत आत्मनः सकाशाज्जातं सुतं विसृज्य पतिना रेमे ॥ २५ ॥
॥ २६ ॥ २७ ॥

कारुण्यभावात् कारुण्ययुक्तो भावश्चित्तं तस्मात् पार्वत्या प्रेरित इति शेषः ॥ २८ ॥

पुरमाकाशगं प्रादात् पार्वत्याः प्रियकाम्यया ।
उमयापि वरो दत्तो राक्षसीनां नृपात्मज ! ॥ ३० ॥
सद्योपलब्धिर्गर्भस्य प्रसूतिः सद्य एव च ।
सद्य एव वयःप्राप्तिं मातुरेव वयःसमम् ॥ ३१ ॥
ततः सुकेशो वरदानगर्वितः
श्रियं प्रभोः प्राप्य हरस्य पार्श्वतः ।
चचार सर्वत्र महान् महामतिः
खगं पुरं प्राप्य पुरन्दरो यथा ॥ ३२ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
चतुर्थः सर्गः ॥ ४ ॥

मातुरेव वयःसमं मातृवयस्कमित्यर्थः ॥ २९ ॥
तदाह,—पार्वत्याः प्रियकाम्ययेति ॥ ३० ॥
सद्योपलब्धिरित्यार्षः सन्धिः ॥ ३१ ॥
सुकेश इत्यनुवादात्तन्नामकत्वमस्य बोध्यम् । खगमाकाशगम् ॥ ३२ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे चतुर्थः सर्गः ॥ ४ ॥

---

## पञ्चमः सर्गः ।



सुकेशं धार्मिकं दृष्ट्वा वरलब्धञ्च राक्षसम् ।
ग्रामणीर्नाम गन्धर्वो विश्वावसुसमप्रभः ॥ १ ॥
तस्य देववती नाम द्वितीया श्रीरिवात्मजा ।
त्रिषु लोकेषु विख्याता रूपयौवनशालिनी ॥ २ ॥
तां सुकेशाय धर्मात्मा ददौ रक्षःश्रियं यथा ।
वरदानकृतैश्वर्य्यं सा तं प्राप्य पतिं प्रियम् ॥ ३ ॥
आसीद्देववती तुष्टा धनं प्राप्येव निर्धनः ।
स तया सह संयुक्तो रराज रजनीचरः ॥ ४ ॥
अञ्जनादभिनिष्क्रान्तः करेण्वेव महागजः ।
ततः काले सुकेशस्तु जनयामास राघव ! ।
त्रीन् पुत्रान् जनयामास त्रेताग्निसमविग्रहान् ॥ ५ ॥
माल्यवन्तं सुमालिञ्च मालिञ्च बलिनाम्वरम् ।
त्रींस्त्रिनेत्रसमान् पुत्रान् राक्षसान् राक्षसाधिपः ॥ ६ ॥

वरलब्धं लब्धवरम् ॥ १ ॥ २ ॥
वरदानेन कृतमैश्वर्य्यं यस्य तम् ॥ ३ ॥ ४ ॥
अञ्जनादञ्जनाख्यदिग्गजात् । अभिनिष्क्रान्त उत्पन्नः । किं जनया-

त्रयो लोका इवा व्यग्राः स्थितास्त्रय इवाग्नयः ।
त्रयो मन्त्रा इवात्युग्रास्त्रयो घोरा इवामयाः ॥ ७ ॥
त्रयः सुकेशस्य सुतास्त्रेताग्निसमतेजसः ।
विवृद्धिमगमंस्तत्र व्याधयोपेक्षिता इव ॥ ८ ॥
वरप्राप्तिं पितुस्ते तु ज्ञात्वैश्वर्य्यं तपोबलात् ।
तपस्तप्तुङ्गता मेरुं भ्रातरः कृतनिश्चयाः ॥ ९ ॥
प्रगृह्य नियमान् घोरान् राक्षसा नृपसत्तम ! ।
विचेरुस्ते तपो घोरं सर्वभूतभयावहम् ॥ १० ॥
सत्यार्जवशमोपेतैस्तपोभिर्भुवि दुर्लभैः ।
सन्तापयन्तस्त्रीन् लोकान् सदेवासुरमानुषान् ॥ ११ ॥
ततो विभुश्चतुर्वक्त्रो विमानवरमाश्रितः ।
सुकेशपुत्रानामन्त्र्य वरदोऽस्मीत्यभाषत ॥ १२ ॥
ब्रह्माणं वरदं ज्ञात्वा सेन्द्रैर्देवगणैर्वृतम् ।
ऊचुः प्राञ्जलयः सर्वे वेपमाना इव द्रुमाः ॥ १३ ॥
तपसाराधितो देव ! यदि नो दिशसे वरम् ।

मासेत्यत्राह,—त्रीन् पुत्रान् जनयामासेति तान् पुत्रानिति पाठान्तरम् । तान् प्रसिद्धान् वक्ष्यमाणान्नित्यर्थः ॥ ५ ॥ ६ ॥

मन्त्रा इव उत्साहप्रभुमन्त्रशक्तिमयास्त्रिमन्त्राः । त्रिवेदाश्च । आमयत्रयं वातपित्तश्लेष्मरूपम् । अत्रोपमात्रतुल्ये स्थिरत्वतेजस्वित्वापरिमितसामर्थ्यहिंसकत्वानि साधारणधर्माः ॥ ७ ॥

अजेयाः शत्रुहन्तारस्तथैव चिरजीविनः।
प्रभविष्णवोभवामेति परस्परमनुव्रताः ॥ १४ ॥
एवं भविष्यथेत्युक्त्वा सुकेशतनयान् विभुः।
स ययौ ब्रह्मलोकाय ब्रह्मा ब्राह्मणवत्सलः ॥ १५ ॥
वरं लब्ध्वा तु ते सर्वे राम ! रात्रिञ्चरास्तदा।
सुरासुरान् प्रबाधन्ते वरदानसुनिर्भयाः ॥ १६ ॥
तैर्बाध्यमानास्त्रिदशाः सर्षिसङ्घाः सचारणाः।
त्रातारं नाधिगच्छन्ति निरयस्था यथा नराः ॥ १७ ॥
अथ तं विश्वकर्माणं शिल्पिनाम्वरमव्ययम्।
ऊचुः समेत्य संहृष्टा राक्षसा रघुसत्तम ! ॥ १८ ॥
ओजस्तेजोबलवतां महतामात्मतेजसा।
गृहकर्त्ता भवानेव देवानां हृदयेप्सितम् ॥ १९ ॥

व्याधयोपेक्षिता इव। उपेक्षिता अचिकित्सिता व्याधय इवेत्यर्थः सन्धिरार्षः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

दिशसे ददासि। अजेया जेतुमनर्हाः। प्रभविष्णवः। यथार्थः। प्रभव इति यावत्। परस्परमनुव्रता अनुरक्ताश्च भवामेत्यनुकर्षः ॥१४॥

ब्रह्मलोकाय तं प्राप्तुम्। ब्राह्मणवत्सलः। तेषां स्वमुखजत्वात् ज्येष्ठत्वाच्च तेषु वात्सल्यम् ॥ १५ ॥ १६ ॥ १७ ॥

अथ ते माल्यवदादयः। अव्ययं चिरजीविनम् ॥ १८ ॥

ओजस्तेजोबलवतामतएव महतां देवानाम्। भवानेवात्मतेजसा

अस्माकमपि तावत्त्वं गृहं कुरु महामते ! ।
हिमवन्तमुपाश्रित्य मेरुमन्दरमेव वा ॥ २० ॥
महेश्वरगृहप्रख्यं गृहं नः क्रियतां महत् ।
विश्वकर्मा ततस्तेषां राक्षसानां महाभुजः ॥ २१ ॥
निवासं कथयामास शक्रस्येवामरावतीम् ।
दक्षिणस्योदधेस्तीरे त्रिकूटो नाम पर्वतः ॥ २२ ॥
सुवेल इति चाप्यन्यो द्वितीयो राक्षसेश्वराः ।
शिखरे तस्य शैलस्य मध्यमेऽम्बुदसन्निभे ॥ २३ ॥
शकुनैरपि दुष्प्रापे टङ्कच्छिन्नचतुर्दिशि ।
त्रिंशद्योजनविस्तीर्णा शतयोजनमायता ॥ २४ ॥
स्वर्णप्राकारसंवीता हेमतोरणसंवृता ।
मया लङ्केति नगरी शक्राज्ञप्तेन निर्मिता ॥ २५ ॥
तस्यां वसत दुर्धर्षा ! यूयं राक्षसपुङ्गवाः ।
अमरावतीं समासाद्य सेन्द्रा इव दिवौकसः ॥ २६ ॥
लङ्कादुर्गं समासाद्य राक्षसैर्बहुभिर्वृताः ।

आत्मसामर्थ्येन गृहकर्त्ता स त्वमस्माकमपि हृदयेप्सितं गृहं कुर्विति सम्बन्धः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

द्वितीयस्तत्सदृश इत्यर्थः । मध्यमे शिखर इति सम्बन्धः ॥ २३ ॥

शकुनैरपि दुष्प्रापे इत्यत्र हेतुष्टङ्कच्छिन्नचतुर्दिशि ॥ २४ ॥ २५ ॥

भविष्यथ दुराधर्षाः शत्रूणां शत्रुसूदनाः ॥ २७ ॥
विश्वकर्मवचः श्रुत्वा ततस्ते राक्षसोत्तमाः ।
सहस्रानुचरा भूत्वा गत्वा तामवसन् पुरीम् ॥ २८ ॥
दृढ़प्राकारपरिखां हैमैर्गृहशतैर्वृताम् ।
लङ्कामवाप्य ते हृष्टा न्यवसन् रजनीचराः ॥ २९ ॥
एतस्मिन्नेव काले तु यथाकामञ्च राघव ! ।
नर्मदा नाम गन्धर्वी बभूव रघुनन्दन ! ॥ ३० ॥
तस्याः कन्यात्रयं ह्यासीत् ह्रीश्रीकीर्त्तिसमद्युति ।
ज्येष्ठक्रमेण सा तेषां राक्षसानामराक्षसी ॥ ३१ ॥
कन्यास्ताः प्रददौ हृष्टा पूर्णचन्द्रनिभाननाः ।
त्रयाणां राक्षसेन्द्राणां तिस्रो गन्धर्वकन्यकाः ॥ ३२ ॥
दत्ता मात्रा महाभागा नक्षत्रे भगदैवते ।
कृतदारास्तु ते राम ! सुकेशतनयास्तदा ॥ ३३ ॥
चिक्रीडुः सह भार्य्याभिरप्सरोभिरिवामराः ।
ततो माल्यवतो भार्य्या सुन्दरी नाम सुन्दरी ॥ ३४ ॥
स तस्यां जनयामास यदपत्यन्निबोध तत् ।

अमरावतीं समासाद्येति गवाक्षरपादतार्थः ॥ २६ ॥ २७ ॥
सहस्रमनेकोऽनुचरा येषान्ते सहस्रानुचराः ॥ २८ ॥ २९ ॥ ३० ॥
अराक्षसी राक्षसजातिभिन्ना ॥ ३१ ॥ ३२ ॥

वज्रमुष्टिर्विरूपाक्षो दुर्मुखश्चैव राक्षसः ॥ ३५ ॥
सुप्तघ्नो यज्ञकोपश्च मत्तोन्मत्तौ तथैव च ।
अनला चाभवत् कन्या सुन्दर्य्यां राम ! सुन्दरी ॥ ३६ ॥
सुमालिनोऽपि भार्य्यासीत् पूर्णचन्द्रनिभानना ।
नाम्ना केतुमती राम ! प्राणेभ्योऽपि गरीयसी ॥ ३७ ॥
सुमाली जनयामास यदपत्यं निशाचरः ।
केतुमत्यां महाराज ! तन्निबोधानुपूर्वशः ॥ ३८ ॥
प्रहस्तो कम्पनश्चैव विकटः कालिकामुखः ।
धूम्राक्षश्चैव दण्डश्च सुपार्श्वश्च महाबलः ॥ ३९ ॥
संह्रादिः प्रघसश्चैव भासकर्णश्च राक्षसः ।
राका पुष्पोत्कटा चैव कैकसी च शुचिस्मिता ।
कुम्भीनसी च इत्येते सुमालेः प्रसवाः स्मृताः ॥ ४० ॥
मालेस्तु वसुदा नाम गन्धर्वी रूपशालिनी ।
भार्य्यासीत्पद्मपत्राक्षी स्वक्षी यक्षीवरोपमा ॥ ४१ ॥
सुमालेरनुजस्तस्यां जनयामास यत्प्रभो ! ।
अपत्यं कथ्यमानन्तु मया त्वं शृणु राघव ! ॥ ४२ ॥

माचा दत्ता मार्चा नर्मदयेच्छया दत्ता इत्यर्थः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥

स्वक्षी मधुरदृग्युताक्षी । यक्षीवरा यक्षीश्रेष्ठा तयोपमीयते सा यक्षीवरोपमा ॥ ४१ ॥ ४२ ॥

अनलस्य निलश्चैव हरः सम्पातिरेव च ।
एते विभीषणामात्या मालेयास्ते निशाचराः ॥ ४३ ॥

ततस्तु ते राक्षसपुङ्गवास्त्रयो
निशाचरैः पुत्रशतैश्च संवृताः ।
सुरान् सहेन्द्रानृषिनागयक्षान्
बबाधिरे तान् बहुवीर्यदर्पिताः ॥ ४४ ॥

जगद्भ्रमन्तोऽनिलवद्दुरासदा
रणेषु मृत्युप्रतिमानतेजसः ।
वरप्रदानादपि गर्विता भृशं
क्रतुक्रियाणां प्रशमङ्कराः सदा ॥ ४५ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
पञ्चमः सर्गः ॥ ५ ॥

मालेयाः । इतश्चानिल इति छक् ॥ ४३ ॥ ४४ ॥
प्रशमङ्कराः इत्यार्षः खच् ॥ ४५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे पञ्चमः सर्गः ॥ ५ ॥

---

## षष्ठः सर्गः ।

तैर्बध्यमानाः देवाश्च ऋषयश्च तपोधनाः ।
भयार्त्ताः शरणं जग्मुर्देवदेवं महेश्वरम् ॥ १ ॥
जगत्सृष्ट्यन्तकर्त्तारमजमव्यक्तरूपिणम् ।
आधारं सर्वलोकानामाराध्यं परमं गुरुम् ॥ २ ॥
ते समेत्य तु कामारिं त्रिपुरारिं त्रिलोचनम् ।
ऊचुः प्राञ्जलयो देवा भयगद्गदभाषिणः ॥ ३ ॥
सुकेशपुत्रैर्भगवन् ! पितामहवरोद्धतैः ।
प्रजाध्यक्षप्रजाः सर्वा बाध्यन्ते रिपुबाधनैः ॥ ४ ॥
शरणान्यशरण्यानि आश्रमाणि कृतानि नः ।
स्वर्गाच्च देवान् प्रच्याव्य स्वर्गे क्रीड़न्ति देववत् ॥ ५ ॥
अहं विष्णुरहं रुद्रो ब्रह्माहं देवराड़हम् ।

अथ माल्यवदादिपीड़ितदेवगणस्य विष्णुनाऽभयदानं श्रुत्वा नारायणप्रेरकदेवगणवधे तेषां प्रवृत्तिः । तैर्बध्यमाना इति ॥ १ ॥ २ ॥ ३ ॥

प्रजाध्यक्षस्य भगवतः प्रजापतेः प्रजादेवनरतिर्य्यगादिरूपाः । रिपुबाधनैः रिपूणां बाधनं बाधस्तैर्हेतुभिरित्यर्थः ॥ ४ ॥

अहं यमश्च वरुणश्चन्द्रोऽहं रविरप्यहम् ॥ ६ ॥
इति माली सुमाली च माल्यवांश्चैव राक्षसः ।
बाधन्ते समरोद्धर्षा ये च तेषां पुरःसराः ॥ ७ ॥
तन्नो देव ! भयार्त्तानामभयं दातुमर्हसि ।
अशिवं वपुरास्थाय जहि वै देवकण्टकान् ॥ ८ ॥
इत्युक्तस्तु सुरैः सर्वैः कपर्दी नीललोहितः ।
सुकेशं प्रति सापेक्षः प्राह देवगणान् प्रभुः ॥ ९ ॥
अहं तान्न हनिष्यामि ममावध्या हि ते सुराः ।
किन्तु मन्त्रं प्रदास्यामि यो वै तान्निहनिष्यति ॥ १० ॥
एतमेवसमुद्योगं पुरस्कृत्य महर्षयः ।
गच्छध्वं शरणं विष्णुं हनिष्यति स तान् प्रभुः ॥ ११ ॥
ततस्तु जयशब्देन प्रतिनन्द्य महेश्वरम् ।

शरण्यानि शरणार्हाणि देवपितृतिथिपशुपक्ष्यादिरक्षणार्हाणि । देवान् प्रधाष्य ये सर्वे स्वर्गे देववत्क्रीड़न्ति ॥ ५ ॥ ६ ॥

समरे संग्रामे उद्धर्ष उत्साहो येषान्ते ॥ ७ ॥

अशिवमसौम्यं रौद्रमिति यावत् । रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोरान्याशिवान्येति श्रुतेः ॥ ८ ॥

सुकेशं प्रति सापेक्षः सुकेशस्य स्नेहोर्ज्जितत्वान्माल्यवदादीनां तत्पुत्रत्वात् स्वकर्तृकतत्संहारस्यानौचित्यं मन्वान इत्यर्थः ॥ ९ ॥

मयाऽवध्याः उक्तहेतोर्वधानर्हाः । मन्त्रमुपायम् ॥ १० ॥

विष्णोः समीपमाजग्मुर्निशाचरभयार्दिताः ॥ १२ ॥
शङ्खचक्रधरं देवं प्रणम्य बहुमान्य च ।
ऊचुः सम्भ्रान्तवद्वाक्यं सुकेशतनयान् प्रति ॥ १३ ॥
सुकेशतनयैर्देव ! त्रिभिस्त्रेताग्निसन्निभैः ।
आक्रम्य वरदानेन स्थानान्यपहृतानि नः ॥ १४ ॥
लङ्का नाम पुरी दुर्गा त्रिकूटशिखरे स्थिता ।
तत्र स्थिताः प्रबाधन्ते सर्वान्नः क्षणदाचराः ॥ १५ ॥
स त्वमस्मद्धितार्थाय जहि तान् मधुसूदन ! ।
शरणं त्वां वयं प्राप्ता गतिर्भव सुरेश्वर ! ॥ १६ ॥
चक्रकृत्तास्यकमलान्निवेदय यमाय वै ।
भयेष्वभयदोऽस्माकं नान्योऽस्ति भवता विना ॥ १७ ॥
राक्षसान् समरे हृष्टान् सानुबन्धान्मदोद्धतान् ।
नुद त्वन्नो भयं देव ! नीहारमिव भास्करः ॥ १८ ॥
इत्येवं दैवतैरुक्तो देवदेवो जनार्दनः ।
अभयं भयदोऽरीणां दत्त्वा देवानुवाच ह ॥ १९ ॥
सुकेशं राक्षसं जाने ईशानवरदर्पितम् ।

एतमेवसमुद्योगं नतु कालान्तरीयमित्यर्थः ॥ ११ ॥ १२ ॥

सम्भ्रान्तवत्सम्भ्रान्ताईम् । सुकेशतनयान् प्रति तानुद्दिश्येत्यर्थः ॥ १३ ॥
॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

तांश्चास्य तनयान् जाने येषां ज्येष्ठः स माल्यवान् ॥ २० ॥
तानहं समतिक्रान्तमर्य्यादान् राक्षसाधमान्।
निहनिष्यामि संक्रुद्धः सुरा ! भवत विज्वराः ॥ २१ ॥
इत्युक्तास्ते सुराः सर्व्वे विष्णुना प्रभविष्णुना।
यथावासं ययुर्हृष्टाः प्रशंसन्तो जनार्द्दनम् ॥ २२ ॥
विबुधानां समुद्योगं माल्यवांस्तु निशाचरः।
श्रुत्वा तौ भ्रातरौ वीराविदं वचनमब्रवीत् ॥ २३ ॥
अमरा ऋषयश्चैव सङ्गम्य किल शङ्करम्।
अस्मद्वधं परीप्सन्त इदं वचनमब्रवीत् ॥ २४ ॥
सुकेशतनया देव ! वरदानबलोद्धताः।
बाधन्तेऽस्मान् समुद्दृप्ता घोररूपाः पदे पदे ॥ २५ ॥
राक्षसैरभिभूताः स्मो न शक्ताः स्म प्रजापते !।
स्वेषु सद्मसु संस्थातुं भयात्तेषां दुरात्मनाम् ॥ २६ ॥
तदस्माकं हितार्थाय जहि तांश्च त्रिलोचन !।

सानुबन्धान् सानुचरान् राक्षसान् जहीति शेषः। नो भयघ्न नुद ॥ १८ ॥ १९ ॥ २० ॥

अतिक्रान्तमर्य्यादान्मर्य्यादा वध्यावध्यव्यवस्था ॥ २१ ॥ २२ ॥

तौ भ्रातरौ सुमालिमालिनौ ॥ २३ ॥

परीप्सन्तः इच्छन्तः ॥ २४ ॥

पदे पदे प्रतिक्षणम् ॥ २५ ॥

राक्षसान् हुङ्कृतेनैव दह प्रदहतां वर ! ॥ २७ ॥
इत्येवं त्रिदशैरुक्तो निशम्यान्धकसूदनः ।
शिरः करञ्च धुन्वान इदं वचनमब्रवीत् ॥ २८ ॥
अवध्या मम ते देवाः ! सुकेशतनया रणे ।
मन्त्रन्तु वः प्रदास्यामि यस्तान् वै निहनिष्यति ॥ २९ ॥
योऽसौ चक्रगदापाणिः पीतवासा जनार्दनः ।
हरिर्नारायणः श्रीमान् शरणं तं प्रपद्यथ ॥ ३० ॥
हरादवाप्य ते मन्त्रं कामारिमभिवाद्य च ।
नारायणालयं प्राप्य तस्मै सर्वं न्यवेदयन् ॥ ३१ ॥
ततो नारायणेनोक्ता देवा इन्द्रपुरोगमाः ।
सुरारींस्तान् हनिष्यामि सुरा ! भवत निर्भयाः ॥ ३२ ॥
देवानां भयभीतानां हरिणा राक्षसर्षभौ ! ।
प्रतिज्ञातो वधोऽस्माकं चिन्त्यतां यदिह क्षमम् ॥ ३३ ॥
हिरण्यकशिपोर्मृत्युरन्येषाञ्च सुरद्विषाम् ।

प्रजापते दुष्टनिग्रहद्वारा प्रजारक्षक ॥ २६ ॥ २७ ॥

शिरः करञ्च धुन्वानः विषयत्वेऽप्येतिन्यायेन स्ववधानर्हा इत्या-शयेनेति भावः ॥ २८ ॥

तदेवाह,—अवध्या इति ॥ २९ ॥ ३० ॥

ते देवाः मन्त्रमवाप्येत्यन्वयः ॥ ३१ ॥ ३२ ॥ ३३ ॥

नमुचिः कालनेमिश्च संह्रादो वीरसत्तमः ॥ ३४ ॥
राधेयो बहुमायी च लोकपालोऽथ धार्मिकः।
यमलार्जुनौ च हार्दिक्यः शुम्भश्चैवं निशुम्भकः ॥ ३५ ॥
असुरा दानवाश्चैव सत्ववन्तो महाबलाः।
सर्वे समरमासाद्य न श्रूयन्तेऽपराजिताः ॥ ३६ ॥
सर्वैः क्रतुशतैरिष्टं सर्वे मायाविदस्तथा।
सर्वे सर्वास्त्रकुशलाः सर्वे शत्रुभयङ्कराः ॥ ३७ ॥
नारायणेन निहताः शतशोऽथ सहस्रशः।
एतज्ज्ञात्वा तु सर्वेषां क्षमं कर्त्तुमिहार्हथ।
दुःखं नारायणं जेतुं यो नो हन्तुमिहेच्छति ॥ ३८ ॥
ततः सुमाली माली च श्रुत्वा माल्यवतो वचः।
ऊचतुर्भ्रातरं ज्येष्ठमश्विनाविव वासवम् ॥ ३९ ॥
स्वधीतं दत्तमिष्टञ्च ऐश्वर्य्यं परिपालितम्।
आयुर्निरामयं प्राप्तं सुधर्मः स्थापितः पथि ॥ ४० ॥

चिन्ताहेत्वं दर्शयति। हिरण्येत्यादि ॥ ३४ ॥ ३५ ॥

अपराजिता इति च्छेदः ॥ ३६ ॥ ३७ ॥ ३८ ॥

अश्विनाविव वासवमिति। भगांशाविवेति पाठे। भगसहंशोऽर्थमा ताविवेत्यर्थः ॥ ३९ ॥

निरामयं नीरोगम्। सुधर्मः शोभनो धर्मः पथि स्थापितः प्राक्

देवसागरमक्षोभ्यं शस्त्रैः समवगाह्य च ।
जिता द्विषोऽह्यप्रतिमास्तन्नो मृत्युकृतं भयम् ॥ ४१ ॥
नारायणश्च रुद्रश्च शक्रश्चापि यमस्तथा ।
अस्माकं प्रमुखे स्थातुं सर्वे बिभ्यति सर्वदा ॥ ४२ ॥
विष्णोर्द्वेषस्य नास्त्येव कारणं राक्षसेश्वर ! ।
देवानामेव दोषेण विष्णोः प्रचलितं मनः ॥ ४३ ॥
तस्मादद्यैव सहिताः सर्वेऽन्योन्यसमावृताः ।
देवानेव जिघांसामो येभ्यो दोषः समुत्थितः ॥ ४४ ॥
एवं सम्मन्त्र्य बलिनः सर्वसैन्यसुपासिताः ।
उद्योगं घोषयित्वा तु सर्वे नैर्ऋतपुङ्गवाः ॥ ४५ ॥
युद्धाय निर्ययुः क्रुद्धा जम्भवृत्रादयो यथा ।
इति ते राम ! सम्मन्त्र्य सर्वोद्योगेन राक्षसाः ॥ ४६ ॥

सम्यगनुष्ठितैरध्ययनादिभिरिति शेषः । यतो द्विषो देवा जितास्तस्मादस्माकं मृत्युकृतं भयं नास्तीत्यर्थः । कर्त्तव्यावशेषाभावान्मृत्यावपि न क्षतिरिति भावः ॥ ४० ॥ ४१ ॥ ४२ ॥

विष्णोर्द्वेषस्य कारणं नास्ति । अस्माभिस्तदपराधाकरणादिति भावः । विष्णोर्द्वेषस्य नास्त्यत्र कारणं राक्षसेश्वरेति पाठे विष्णोरस्मद्वधप्रतिज्ञायां यः कारणं स्यात्तादृशो विष्णोः सहजो दोषो नास्तीत्यर्थः । कथं तर्हीदानीमस्मासु द्वेषो विष्णोरत आह,—देवानामिति । दोषेणोपजापेन ॥ ४३ ॥

युद्धाय निर्ययुः सर्वे महाकाया महाबलाः।
स्यन्दनैर्वारणैश्चैव हयैश्च करिसन्निभैः॥ ४७॥
खरैर्गोभिरथोष्ट्रैश्च शिशुमारैर्भुजङ्गमैः।
मकरैः कच्छपैर्मीनैर्विहङ्गैर्गरुड़ोपमैः॥ ४८॥
सिंहैर्व्याघ्रैर्वराहैश्च सृमरैश्चमरैरपि।
त्यक्त्वा लङ्कां गताः सर्वे राक्षसा बलगर्विताः॥ ४९॥
प्रयाता देवलोकाय योद्धुं दैवतशत्रवः।
लङ्काविपर्य्ययं दृष्ट्वा यानि लङ्कालयान्यथ॥ ५०॥
भूतानि भयदर्शीनि विमनस्कानि सर्वशः।
रथोत्तमैरुह्यमानाः शतशोऽथ सहस्रशः॥ ५१॥
प्रयाता राक्षसास्तूर्णं देवलोकं प्रयत्नतः।
रक्षसामेव मार्गेण दैवतान्यपचक्रमुः॥ ५२॥

जिघांसामः। स्वार्थे सनार्थः। छद्म इत्यर्थः॥ ४४॥ ४५॥ ४६॥
॥ ४७॥

खरादयो वाहनानि॥ ४८॥

सृमरो गवयः। सृमरचमरयोर्नीलश्वेतपुच्छयोर्गोह्रद इति तीर्थः॥ ४९॥

लङ्काविपर्य्ययं लङ्कानाशम्। लङ्कालयानि भूतानि तत्रत्यानि देवतानि विमनस्कान्यासन्॥ ५०॥ ५१॥

रक्षसामेव मार्गेण तद्यात्रया सहैवापचक्रमुरपगताः॥ ५२॥

भौमाश्चैवान्तरिक्षाश्च कालाज्ञप्ता भयावहाः ।
उत्पाता राक्षसेन्द्राणामभावाय समुत्थिताः ॥ ५३ ॥
अस्थीनि मेघा ववृषुरुष्णं शोणितमेव च ।
वेलां समुद्राश्चोत्क्रान्ताश्चेलुश्चाप्यथ भूधराः ॥ ५४ ॥
अट्टहासान् विमुञ्चन्तो घननादसमस्वनाः ।
वाश्यन्तश्च शिवास्तत्र दारुणं घोरदर्शनाः ॥ ५५ ॥
सम्पतन्त्यथ भूतानि दृश्यन्ते च यथाक्रमम् ।
गृध्रचक्रं महच्चात्र प्रज्वालोद्गारिभिर्मुखैः ॥ ५६ ॥
रक्षोगणस्योपरिष्टात्परिभ्रमति कालवत् ।
कपोता रक्तपादाश्च सारिका विद्रुता ययुः ॥ ५७ ॥
काका वाश्यन्ति तत्रैव बिडाला वै द्विपादिकाः ।
उत्पातांस्ताननादृत्य राक्षसा बलदर्पिताः ॥ ५८ ॥
यान्त्येव न निवर्त्तन्ते मृत्युपाशावपाशिताः ।
माल्यवांश्च सुमाली च माली च सुमहाबलः ॥ ५९ ॥
पुरःसरा राक्षसानां ज्वलिता इव पावकाः ।

कालाज्ञप्ताः कालप्रेरिता भौमादय उत्पाताः ॥ ५३ ॥ ५४ ॥
घननादेन मेघस्वनेन समः स्वनो येषां ते । विमुञ्चत इत्यस्य आता इति शेषः । एवं वाश्यन्त्य इत्यस्यापि ॥ ५५ ॥
गृध्रचक्रं गृध्रसमूहः ॥ ५६ ॥ ५७ ॥ ५८ ॥
मृत्युपाशैरवपाशिताः सञ्जातबन्धनाः ॥ ५९ ॥

माल्यवन्तन्तु ते सर्वे माल्यवन्तमिवाचलम् ॥ ६० ॥
निशाचरा आश्रयन्ति धातारमिव देवता: ।
तद्बलं राक्षसेन्द्राणां महाभ्रघननादितम् ॥ ६१ ॥
जयेप्सया देवलोकं ययौ मालिवशे स्थितम् ।
राक्षसानां समुद्योगं तन्तु नारायण: प्रभु: ॥ ६२ ॥
देवदूतादुपश्रुत्य चक्रे युद्धे तदा मन: ।
सज्जायुधतूणीरो वैनतेयोपरि स्थित: ॥ ६३ ॥
आसाद्य कवचं दिव्यं सहस्रार्कसमद्युति ।
आबध्य शरसम्पूर्णे इषुधी विमले तदा ॥ ६४ ॥
श्रोणिसूत्रञ्च खड्गञ्च विमलं कमलेक्षण: ।
शङ्खचक्रगदाशार्ङ्गखड्गांश्चैव वरायुधान् ॥ ६५ ॥
सम्पूर्णं गिरिसङ्काशं वैनतेयमथास्थित: ।
राक्षसानामभावाय ययौ तूर्णतरं प्रभु: ॥ ६६ ॥
सुपर्णपृष्ठे स बभौ श्याम: पीताम्बरो हरि: ।
काञ्चनस्य गिरे: शृङ्गे सतड़ित्तोयदो यथा ॥ ६७ ॥

स सिद्धदेवर्षिमहोरगैश्च
गन्धर्वयक्षैरुपगीयमान: ।

माल्यवन्तमचलं माल्यवदाख्यकुलपर्वतम् ॥ ६० ॥
महाभ्रघननादितं महामेघसमूहसन्नादितं सञ्जातनादम् ॥ ६१ ॥
॥ ६२ ॥ ६३ ॥ ६४ ॥

समासमादासुरसैन्यशत्रु-
श्चक्रासिशार्ङ्गायुधशङ्खपाणिः ॥ ६८ ॥
सुपर्णपक्षानिलनुन्नपक्षं
भ्रमत्पताकं प्रविकीर्णशस्त्रम् ।
चचाल तद्राक्षसराजसैन्यं
चलोपलं नीलमिवाचलाग्रम् ॥ ६९ ॥
ततः शितैः शोणितमांसरूषितै-
र्युगान्तवैश्वानरतुल्यविग्रहैः ।
निशाचराः सम्परिवार्य्य माधवं
वरायुधैर्निर्बिभिदुः सहस्रशः ॥ ७० ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
षष्ठः सर्गः ॥ ६ ॥

श्रोणिसूत्रं खड्गबन्धनभूतम् ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥
सुपर्णपक्षानिले ननुन्नपक्षं क्षोभितबलम् । चलोपलश्चला उपला यस्य तत् ॥ ६९ ॥
विग्रह आकारः ॥ ७० ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे षष्ठः सर्गः ॥ ६ ॥

---

## सप्तमः सर्गः ।



नारायणगिरिं ते तु गर्जन्तो राक्षसाम्बुदाः ।
अर्दयन्तोऽस्त्रवर्षेण वर्षेणेवाद्रिमम्बुदाः ॥ १ ॥
श्यामावदातस्तैर्विष्णुर्नीलैर्नक्तञ्चरोत्तमैः ।
वृतोऽञ्जनगिरीवायं वर्षमाणैः पयोधरैः ॥ २ ॥
शलभा इव केदारं मशका इव पावकम् ।
यथामृतघटं दंशा मकरा इव चार्णवम् ॥ ३ ॥
तथा रक्षोधनुर्मुक्ता वज्रानिलमनोजवाः ।
हरिं विशन्ति स्म शरा लोका इव विपर्यये ॥ ४ ॥

अथ राक्षसोपमर्द्देन हरिणा तद्विद्रावणम् । नारायणगिरिमिति । रूपकमिदम् ॥ १ ॥

श्यामः सन्नवदातो निर्मलः । अञ्जनगिरीवेति विभक्तिलोप आर्षस्ततः सन्धिः ॥ २ ॥

अमृतघटं क्षौद्रघटम् । दंशा वनमक्षिका इत्यर्थः ॥ ३ ॥

वज्रानिलमनोजवाः वज्रसारा अनिलमनोवत् जवो वेगो येषां ते । विपर्य्यये प्रलयकाले लोका यथा हरिं विशन्ति तद्वत् ॥ ४ ॥

स्यन्दनैः स्यन्दनगता गजैश्च गजमूर्धगाः।
अश्वारोहास्तथाश्वैश्च पादाताश्चाम्बरे स्थिताः ॥ ५ ॥
राक्षसेन्द्रा गिरिनिभाः शरैः शक्त्यृष्टितोमरैः।
निरुच्छ्वासं हरिश्चक्रुः प्राणायामा इव द्विजम् ॥ ६ ॥
निशाचरैस्ताड्यमानो मीनैरिव महोदधिः।
शार्ङ्गमायम्य दुर्धर्षो राक्षसेभ्योऽसृजच्छरान् ॥ ७ ॥
शरैः पूर्णायतोत्सृष्टैर्वज्रकल्पैर्मनोजवैः।
चिच्छेद विष्णुर्निशितैः शतशोऽथ सहस्रशः ॥ ८ ॥
विद्राव्य शरवर्षेण वर्षं वायुरिवोत्थितम्।
पाञ्चजन्यं महाशङ्खं प्रदध्मौ पुरुषोत्तमः ॥ ९ ॥
सोऽम्बुजो हरिणाध्मातः सर्वप्राणेन शङ्खराट्।
ररास भीमनिर्ह्रादस्त्रैलोक्यं व्यथयन्निव ॥ १० ॥
शङ्खराजरवः सोऽथ त्रासयामास राक्षसान्।
मृगराज इवारण्ये समदानिव कुञ्जरान् ॥ ११ ॥

स्यन्दनादिभिः सह। अम्बरे स्थितास्तद्गताः ॥ ५ ॥
हरिं निरुच्छ्वासमक्रुः ॥ ६ ॥ ७ ॥
पूर्णायतोत्सृष्टैः। वज्रकल्पैर्वज्रवद्दुःसहैः ॥ ८ ॥ ९ ॥
अम्बुजः शङ्खः सर्वप्राणेन सर्वबलेन शङ्खराडिति विशेषणम्।
ध्मातो वादितः ॥ १० ॥ ११ ॥

न शेकुरश्वाः संस्थातुं विमदाः कुञ्जरा भवन्।
स्यन्दनेभ्यश्च्युता वीराः शङ्खरावितदुर्बलाः॥ १२॥
शार्ङ्गचापविनिर्मुक्ता वज्रतुल्याननाः शराः।
विदार्य्य तानि रक्षांसि सुपुङ्खा विविशुः क्षितिम्॥ १३॥
विध्यमानाः शरैः संख्ये नारायणकरच्युतैः।
निपेतू राक्षसा भूमौ शैला वज्राहता इव॥ १४॥
व्रणानि परगात्रेभ्यो विष्णुचक्रकृतानि हि।
असृक् क्षरन्ति धाराभिः स्वर्णधारा इवाचलाः॥ १५॥
शङ्खराजरवश्चापि शार्ङ्गचापरवस्तथा।
राक्षसानां रवांश्चापि ग्रसते वैष्णवो रवः॥ १६॥
तेषां शिरोधरान् धूतान् शरध्वजधनूंषि च।
रथान् पताकास्तूणीरांश्चिच्छेद स हरिः शरैः॥ १७॥
सूर्य्यादिव करा घोरा वार्य्योघा इव सागरात्।
पर्वतादिव नागेन्द्रा धारौघा इव चाम्बुदात्॥ १८॥

भवन् अभवन्। शङ्खरावितेन शङ्खशब्देन दुर्बलाः क्षीणबलाः। स्वार्थे णिः॥ १२॥ १३॥ १४॥

स्वर्णधाराः गैरिकधाराः। गैरिकेऽपि सुवर्णं स्यात्॥ १५॥

रवांश्चापि अपिना प्राणांश्च। वर्णनो विष्णुत्पादितः॥ १६॥

शिरोधरान् कण्ठान् धूतान् कम्पितान्॥ १७॥ १८॥

तथा शार्ङ्गविनिर्मुक्ताः शरा नारायणेरितात्।
निर्धावन्तीषवस्तूर्णं शतशोऽथ सहस्रशः॥ १९॥
शरभेण यथा सिंहाः सिंहेन द्विरदा यथा।
द्विरदेन यथा व्याघ्रा व्याघ्रेण द्वीपिनो यथा॥ २०॥
द्वीपिनेव यथा श्वानः शुना मार्जारका यथा।
मार्जारेण यथा सर्पाः सर्पेण च यथाखवः॥ २१॥
तथा ते राक्षसाः सर्वे विष्णुना प्रभविष्णुना।
द्रवन्ति द्राविताश्चान्ये शायिताश्च महीतले॥ २२॥
राक्षसानां सहस्राणि निहत्य मधुसूदनः।
वारिजं पूरयामास तोयदं सुरराड़िव॥ २३॥
नारायणशरत्रस्तं शङ्खनादसुविक्लवम्।
ययौ लङ्कामभिमुखं प्रभग्नं राक्षसं बलम्॥ २४॥
प्रभग्ने राक्षसबले नारायणशराहते।

विनिर्मुक्ताः विनिर्मोक्तुं प्रक्रान्ताः शरा आसन्निति एषयोऽन्वयम्। अथ नारायणेरितान् नारायणव्यापारत इषवो निर्धावन्ति। सहस्रशः शतशः॥ १९॥ २०॥

द्वीपी क्षुद्रव्याघ्रः। आखवो मूषिकाः॥ २१॥

महीतले शायिताः। अनुकृष्येति शेषः॥ २२॥ २३॥

राक्षसं रक्षःसम्बन्धि॥ २४॥

सुमाली शरवर्षेण निववार रणे हरिम् ॥ २५ ॥
स तु तच्छादयामास नीहार इव भास्करम् ।
राक्षसाः सत्वसम्पन्नाः पुनर्धैर्य्यं समादधुः ॥ २६ ॥
अथ सोऽभ्यपतद्रोषाद्राक्षसो बलदर्पितः ।
महानादं प्रकुर्वाणो राक्षसान् जीवयन्निव ॥ २७ ॥
उत्क्षिप्य लम्बाभरणं धुन्वन् करमिव द्विपः ।
ररास राक्षसो हर्षात्सतड़ित्तोयदो यथा ॥ २८ ॥
सुमालेर्नर्दतस्तस्य शिरोज्ज्वलितकुण्डलम् ।
चिच्छेद यन्तुरश्वाश्च भ्रान्तास्तस्य तु रक्षसः ॥ २९ ॥
तैरश्वैर्भ्राम्यते भ्रान्तैः सुमाली राक्षसेश्वरः ।
इन्द्रियाश्वैः परिभ्रान्तैर्धृतिहीनो यथा नरः ॥ ३० ॥
ततो विष्णुं महाबाहुं प्रपतन्तं रणाजिरे ।
हृते सुमालेरश्वैश्च रथे विष्णुरथम्प्रति ।

निववार वारयामास ॥ २५ ॥ २६ ॥ २७ ॥

लम्बाभरणं लम्बमानमाभरणम् । उत्क्षिप्य विमुच्य । द्विपः करमिव शुण्डादण्डमिव ॥ २८ ॥

यन्तुः शिरश्चिच्छेद । ततस्तस्याश्वा नष्टसारथित्वादनवस्थितगतिका आसन्नित्यर्थः ॥ २९ ॥

भ्राम्यते भ्राम्यते स्म ॥ ३० ॥

माली चाभ्यद्रवद्युक्तः प्रगृह्य स शरासनम् ॥ ३१ ॥
मालेर्धनुश्च्युता बाणाः कार्त्तस्वरविभूषिताः।
विविशुर्हरिमासाद्य क्रौञ्चं पत्ररथा इव ॥ ३२ ॥
अर्द्यमानः शरैः सोऽथ मालिमुक्तैः सहस्रशः।
चुक्षुभे न रणे विष्णुर्जितेन्द्रिय इवाधिभिः ॥ ३३ ॥
अथ मौर्वीस्वनं कृत्वा भगवान् भूतभावनः।
मालिनं प्रति बाणौघान् ससर्जासिगदाधरः ॥ ३४ ॥
ते मालिदेहमासाद्य वज्रविद्युत्प्रभाः शराः।
पिबन्ति रुधिरं तस्य नागा इव सुधारसम् ॥ ३५ ॥
मालिनं विमुखं कृत्वा शङ्खचक्रगदाधरः।
मालिमौलिं ध्वजञ्चाप वाजिनश्चाप्यपातयत् ॥ ३६ ॥
विरथस्तु गदां गृह्य माली नक्तञ्चरोत्तमः।
आपुप्लुवे गदापाणिर्गिर्य्यग्रादिव केसरी ॥ ३७ ॥
गदया गरुडेशानमीशानमिव चान्तकः।

सुमालिरथेऽश्वैर्हृते इतस्ततोऽपकृष्यमाणे सति रथादवप्लुत्य विष्णुरथम्प्रति धनुः प्रगृह्य युक्तोऽभ्यद्रवत् ॥ ३१ ॥

क्रौञ्चं क्रौञ्चाद्रिम्। पत्ररथाः पक्षिणः ॥ ३२ ॥ ३३ ॥ ३४ ॥

नागाः सर्पाः ॥ ३५ ॥

मालिमौलिं मालिमुकुटम् ॥ ३६ ॥ ३७ ॥

ललाटदेशेऽभ्यहनद्वज्रेणेन्द्रो यथाचलम् ॥ ३८ ॥
गदयाभिहतस्तेन मालिना गरुड़ो भृशम् ।
रणात्पराङ्मुखं देवं कृतवान् वेदनातुरः ॥ ३९ ॥
पराङ्मुखे कृते देवे मालिना गरुड़ेन वै ।
उदतिष्ठन् महान् शब्दो रक्षसामभिनर्दताम् ॥ ४० ॥
रक्षसां रुवतां रावं श्रुत्वा हरिहयानुजः ।
तिर्य्यगास्थाय संक्रुद्धः पक्षीशे भगवान् हरिः ॥ ४१ ॥
पराङ्मुखोऽप्युत्ससर्ज मालेश्चक्रं जिघांसया ।
तत्सूर्य्यमण्डलाभासं स्वभासा भासयन्नभः ॥ ४२ ॥
कालचक्रनिभं चक्रं मालेः शीर्षमपातयत् ।
तच्छिरो राक्षसेन्द्रस्य चक्रोत्कृत्तं विभीषणम् ।

गरुड़ायां पक्षिणामीशानं गरुड़ं ईशानमन्तक इव । श्वेतारण्ये मार्कण्डेयरक्षणार्थं कस्यचिद्राज्ञो रक्षणार्थञ्च ईशानान्तकयोर्युद्धमभूत्तदान्तकेन रुद्रोपरि आयुधप्रक्षेपः कृत इति पुराणप्रसिद्धेयं कथा ॥ ॥ ३८ ॥ ३९ ॥

मालिना गरुड़ेन मालिताड़नपरांमुखगरुड़ेन देवे परांमुखे कृत इत्यन्वयः ॥ ४० ॥

हरिहयानुजः इन्द्रानुजः । तिर्य्यगिति । विमुखे पक्षीशे तिर्य्यक् वलितग्रीवमास्थाय स्थित्वा ॥ ४१ ॥

पपात रुधिरोद्गारि पुरा राहुशिरो यथा ॥ ४३ ॥
ततः सुरैः सम्प्रहृष्टैः सर्वप्राणसमीरितः ।
सिंहनादरवो मुक्तः साधुदेवेतिवादिभिः ॥ ४४ ॥
मालिनं निहतं दृष्ट्वा सुमाली माल्यवानपि ।
सबलौ शोकसन्तप्तौ लङ्कामेव प्रधावितौ ॥ ४५ ॥
गरुड़स्तु समाश्वस्तः सन्निवृत्य यथा पुरा ।
राक्षसान् द्रावयामास पक्षवातेन कोपितः ॥ ४६ ॥
चक्रकृत्तास्यकमला गदासञ्चूर्णितोरसः ।
लाङ्गलग्लापितग्रीवा मुसलैर्भिन्नमस्तकाः ॥ ४७ ॥
केचिच्चैवासिना छिन्नास्तथान्ये शरताड़िताः ।
निपेतुरम्बरात्तूर्णं राक्षसाः सागराम्भसि ॥ ४८ ॥
नारायणोऽपीषुवराशनीभि-
र्विदारयामास धनुर्विमुक्तैः ।
नक्तञ्चरान् मुक्तविधूतकेशान्
यथाशनीभिः सतड़िन् महाभ्रः ॥ ४९ ॥

मालेर्जिघांसया चक्रमुत्ससर्ज । कालचक्रनिभं दिनमासादिरूपेण परिवर्त्तमानकालचक्रसदृशं तेनाप्रतिघातित्वमुक्तम् ॥ ४२ ॥ ४३ ॥
सर्वप्राणसमीरितः सर्वबलेन प्रवर्त्तितः ॥ ४४ ॥ ४५ ॥ ४६ ॥
लाङ्गलेन हलेन ग्लपिता हता ग्रीवा येषां ते ॥ ४७ ॥ ४८ ॥

भिन्नातपत्रं पतमानशस्त्रं
शरैरपध्वस्तविनीतवेषम्।
विनिःसृतां चक्षयलोलनेत्रं
बलं तदुन्मत्ततरं बभूव ॥ ५० ॥
सिंहार्दितानामिव कुञ्जराणां
निशाचराणां सह कुञ्जराणाम्।
रवाश्च वेगाश्च समं बभूवुः
पुराणसिंहेन विमर्दितानाम् ॥ ५१ ॥
ते वार्य्यमाणा हरिबाणजालैः
स्वबाणजालानि समुत्सृजन्तः।
धावन्ति नक्तञ्चरकालमेघा
वायुप्रणुन्ना इव कालमेघाः ॥ ५२ ॥
चक्रप्रहारैर्विनिकृत्तशीर्षाः
सञ्चूर्णिताङ्गाश्च गदाप्रहारैः।

अशनीभिरिति दीर्घ आर्षः। मुक्तविधूतकेशान् मुक्तकेशान् विधूतकेशांश्च ॥ ४९ ॥

शरैरपध्वस्तो दूरीकृतो विनीतवेषः सौम्यवेषो यस्य तत्। उन्मत्ततरम् अतिशयेन विस्मृतस्वपरविवेकम् ॥ ५० ॥

पुराणसिंहेन नृसिंहेन ॥ ५१ ॥

समुत्सृजन्तस्त्यजन्तः ॥ ५२ ॥

ह्यसिप्रहारैर्द्विविधा विभिन्नाः
पतन्ति शैला इव राक्षसेन्द्राः ॥ ५३ ॥
विलम्बमानैर्मणिहारकुण्डलै
र्निशाचरैर्नीलबलाहकोपमैः ।
निपात्यमानैर्ददृशे निरन्तरं
निपात्यमानैरिव नीलपर्वतैः ॥ ५४ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
सप्तमः सर्गः ॥ ७ ॥

द्विविधा विभिन्नाः द्विविधया प्रकारद्वयेन विभिन्नाः खण्डिताः ॥ ॥ ५३ ॥

भूमण्डलमिति शेषः । तन्निरन्तरं व्याप्तं ददृशे ॥ ५४ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे सप्तमः सर्गः ॥ ७ ॥

# अष्टमः सर्गः ।



हन्यमाने बले तस्मिन् पद्मनाभेन पृष्ठतः ।
माल्यवान् सन्निवृत्तोऽथ वेलामेत्य इवार्णवः ॥ १ ॥
संरक्तनयनः क्रोधाच्चलन्मौलिर्निशाचरः ।
पद्मनाभमिदं प्राह वचनं पुरुषोत्तमम् ॥ २ ॥
नारायण ! न जानीषे क्षात्त्रधर्मं पुरातनम् ।
अयुद्धमनसो भीतानस्मान् हंसि यथेतरः ॥ ३ ॥
पराङ्मुखवधं पापं यः करोति सुरेश्वर ! ।
स हन्ता न गतः स्वर्गं लभते पुण्यकर्मणाम् ॥ ४ ॥

अथ सुमालिमाल्यवतोः पराजितयोर्लङ्कां विहाय पातालप्रवेशः। हन्यमाने इति। पृष्ठत इति। अनुद्रुत्येति शेषः। एत्य इवेत्यसन्धिरार्षः। अर्णवो वेलामेत्य यथा निवर्त्तते तथा निवृत्त इत्यर्थः॥ १ ॥ २ ॥

योऽस्मान् हंसि स त्वं न जानीषे इत्यन्वयः। यथेतरः प्राकृतजन इव॥ ३ ॥

परांमुखवधरूपं पापम्। स हन्ता हतो देहाद्गतः सन् स्वर्गं न लभते। स हन्ता न हत इति पाठे हतो देवहत इत्यर्थः॥ ४ ॥

युद्धश्रद्धाथवा तेऽस्ति शङ्खचक्रगदाधर!।
अहं स्थितोऽस्मि पश्यामि बलं दर्शय यत्तव ॥ ५ ॥
माल्यवन्तं स्थितं दृष्ट्वा माल्यवन्तमिवाचलम्।
उवाच राक्षसेन्द्रं तं देवराजानुजो बली ॥ ६ ॥
युष्मत्तो भयभीतानां देवानां वै मयाऽभयम्।
राक्षसोत्सादनं दत्तं तदेतदनुपाल्यते ॥ ७ ॥
प्राणैरपि प्रियं कार्य्यं देवानां हि सदा मया।
सोऽहं वो निहनिष्यामि रसातलगतानपि ॥ ८ ॥
देवदेवं ब्रुवाणन्तं रक्ताम्बुरुहलोचनम्।
शक्त्या बिभेद संक्रुद्धो राक्षसेन्द्रो भुजान्तरे ॥ ९ ॥
माल्यवद्भुजनिर्मुक्ता शक्तिर्घण्टाकृतस्वना।
हरेरुरसि बभ्राज मेघस्थेव शतह्रदा ॥ १० ॥
ततस्तामेव चोत्कृष्य शक्तिं शक्तिधरप्रियः।
माल्यवन्तं समुद्दिश्य चिक्षेपाम्बुरुहेक्षणः ॥ ११ ॥

तत्तव बलमहं यथा पश्यामि तथा दर्शयेत्यर्थः ॥ ५ ॥

अथ परांमुखवधदोषः स्वप्रतिज्ञापालनप्रवृत्तस्य नास्तीत्याह,—उवाचेत्यादि ॥ ६ ॥

मया भयभीतानां देवानामभयं वै दत्तं तदेतदभयदानं राक्षसोत्सादनं कुर्वता मयाऽनुपाल्यते ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

स्कन्दोत्सृष्टेव सा शक्तिर्गोविन्दकरनिःसृता ।
काङ्क्षन्ती राक्षसं प्रायान्महोल्केवाञ्जनाचलम् ॥ १२ ॥
सा तस्योरसि विस्तीर्णे हारभारावभासिते ।
आपतद्राक्षसेन्द्रस्य गिरिकूट इवाशनिः ॥ १३ ॥
तया भिन्नतनुत्राणः प्राविशद्विपुलं तमः ।
माल्यवान् पुनराश्वस्तस्तस्थौ गिरिरिवाचलः ॥ १४ ॥
ततः कालायसं शूलं कण्टकैर्बहुभिश्चितम् ।
प्रगृह्याभ्यहनद्देवं स्तनयोरन्तरे दृढम् ॥ १५ ॥
तथैव रणरक्तस्तु मुष्टिना वासवानुजम् ।
ताड़यित्वा धनुर्मात्रमपक्रान्तो निशाचरः ॥ १६ ॥
ततोऽम्बरे महाञ्छब्दः साधु साध्विति चोत्थितः ।
आहत्य राक्षसो विष्णुं गरुड़ञ्चाप्यताड़यत् ॥ १७ ॥
वैनतेयस्ततः क्रुद्धः पक्षवातेन राक्षसम् ।
व्यपोहद्बलवान् वायुः शुष्कपर्णचयं यथा ॥ १८ ॥
द्विजेन्द्रपक्षवातेन द्रावितं दृश्य पूर्वजम् ।

शक्तिधरो गुहः स प्रियो यस्य तस्य प्रियो वा ॥ ११ ॥ १२ ॥
हारभारो हारसमूहस्तेनावभासिते । गिरिकूटे गिरिशृङ्गे ॥ १३ ॥
तमः मोहम् ॥ १४ ॥ १५ ॥
रणरक्तो रणप्रियः । अपक्रान्तः पृष्ठतः परावृत्तः ॥ १६ ॥ १७ ॥

सुमाली स्वबलैः सार्धं लङ्कामभिमुखो ययौ ॥ १९ ॥
पञ्चशातबलोद्धूतो माल्यवानपि राक्षसः ।
स्वबलेन समागम्य ययौ लङ्कां ह्रियावृतः ॥ २० ॥
एवं ते राक्षसा राम ! हरिणा कमलेक्षण ! ।
बहुशः संयुगे भग्ना हतप्रवरनायकाः ॥ २१ ॥
अशक्नुवन्तस्ते विष्णुं प्रतियोद्धुं बलार्दिताः ।
त्यक्त्वा लङ्कां गता वस्तुं पातालं सहपत्नयः ॥ २२ ॥
सुमालिनं समासाद्य राक्षसं रघुसत्तम ! ।
स्थिताः प्रख्यातवीर्य्यास्ते वंशे सालकटङ्कटे ॥ २३ ॥
ये त्वया निहतास्ते तु पौलस्त्या नाम राक्षसाः ।
सुमाली माल्यवान् माली ये च तेषां पुरःसराः ।
सर्वे एते महाभागा रावणाद्बलवत्तराः ॥ २४ ॥

वायुः शुष्कपर्णचयं यथा व्यपोहति तथा राक्षसं पक्षवातेन व्यपोहयत् ॥ १८ ॥

दृश्य दृष्ट्वा ॥ १९ ॥ २० ॥ २१ ॥

सहपत्नयः सस्त्रीकाः ॥ २२ ॥

सालकटङ्कटे सालकटङ्कटा माल्यवदादेः पितामही विद्युत्केशपत्नी तदीये वंशे । वृद्धाच्छाभाव आर्षः । सुमालिनं समासाद्याश्रित्य राक्षसाः स्थिताः ॥ २३ ॥

कस्यासि किमिदं भद्रे ! कश्च भर्त्ता वरानने ! ।
येन सम्भुज्यसे भीरु ! स नरः पुण्यभाक् भुवि ॥ ६ ॥
पृच्छतः शंस मे सर्वं कस्य हेतोः परिश्रमः ।
एवमुक्ता तु सा कन्या रावणेन यशस्विनी ॥ ७ ॥
अब्रवीद्विधिवत् कृत्वा तस्यातिथ्यं तपोधना ।
कुशध्वजो नाम पिता ब्रह्मर्षिरमितप्रभः ।
बृहस्पतिसुतः श्रीमान् बुद्ध्या तुल्यो बृहस्पतेः ॥ ८ ॥
तस्याहं कुर्वतो नित्यं वेदाभ्यासं महात्मनः ।
सम्भूता वाङ्मयी कन्या नाम्ना वेदवती स्मृता ॥ ९ ॥
ततो देवाः सगन्धर्वा यक्षराक्षसपन्नगाः ।
ते चापि गत्वा पितरं वरणं रोचयन्ति मे ॥ १० ॥
न च मां स पिता तेभ्यो दत्तवान् राक्षसेश्वर ! ।
कारणं तद्वदिष्यामि निशामय महाभुज ! ॥ ११ ॥

कस्यासि । दुहितेति शेषः । किमिदं व्रतमित्यर्थः ॥ ६ ॥
कस्य हेतोः किं फलनिमित्तम् ॥ ७ ॥ ८ ॥

वेदाभ्यासं कुर्वतो महात्मनस्तस्य सकाशात् । वाङ्मयी वाङ्मयवेदमूर्त्तिः कन्याहं सम्भूताऽतएवाहं पित्रा नाम्ना वेदवतीति स्मृता । भगवतः शक्तिर्लक्ष्मीरेव रावणवधाय रावणं प्रमुमुक्षावतीर्णा । अस्या वाङ्मयीत्वं सार्वात्म्यात् । अतएव वक्ष्यति ' पितुर्मे विष्णुर्जामाताऽभिप्रेत इति ॥ ९ ॥

पितुस्तु मम जामाता विष्णुः किल सुरेश्वरः ।
अभिप्रेतस्त्रिलोकेशस्तस्मान्नान्यस्य मे पिता ॥ १२ ॥
दातुमिच्छति तस्मै तु तच्छ्रुत्वा बलदर्पितः ।
शम्भुर्नाम ततो राजा दैत्यानां कुपितोऽभवत् ॥ १३ ॥
तेन रात्रौ शयानो मे पिता पापेन हिंसितः ॥ १४ ॥
ततो मे जननी दीना तच्छरीरं पितुर्मम ।
परिष्वज्य महाभागा प्रविष्टा हव्यवाहनम् ॥ १५ ॥
ततो मनोरथं सत्यं पितुर्नारायणम्प्रति ।
करोमीति तमेवाहं हृदयेन समुद्वहे ॥ १६ ॥
इति प्रतिज्ञामारूह्य चरामि विपुलं तपः ।
एतत्ते सर्वमाख्यातं मया राक्षसपुङ्गव ! ॥ १७ ॥
नारायणो मम पतिर्नत्वन्यः पुरुषोत्तमात् ।
आश्रये नियमं घोरं नारायणपरीप्सया ॥ १८ ॥

ते देवादयः वरणं रोचयन्ति । रुचिः क्रियासामान्ये । वरणं कुर्वन्ति स्मेत्यर्थः ॥ १० ॥ ११ ॥

अन्यस्य । अन्यस्मै इत्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

नारायणं नारस्य जीवसमूहस्यायनम् । नारा आपोऽयनं यस्येति वा । तं प्रतिगतं पितुर्मनोरथं सत्यं करोमीति इच्छया तं नारायणमेव हृदयेनोद्वहे ॥ १६ ॥

इति प्रतिज्ञां प्रागुक्तेच्छाविषयविषयाम् । आरुह्य कृत्वा ॥१७॥१८॥

विज्ञातस्त्वं हि मे राजन् गच्छ पौलस्त्यनन्दन !।
जानामि तपसा सर्वं त्रैलोक्ये यद्धि वर्त्तते ॥ १९ ॥




सोऽब्रवीद्रावणो भूयस्तां कन्यां सुमहाव्रताम् !
अवरुह्य विमानाग्रात् कन्दर्पशरपीड़ितः ॥ २० ॥
अवलिप्ताऽसि सुश्रोणि ! यस्यास्ते मतिरीदृशी।
वृद्धानां मृगशावाक्षि ! भ्राजते पुण्यसञ्चयः ॥ २१ ॥
त्वं सर्वगुणसम्पन्ना नार्हसे वक्तुमीदृशम्।
त्रैलोक्यसुन्दरी भीरु ! यौवनं तेऽतिवर्त्तते।
अहं लङ्कापतिर्भद्रे ! दशग्रीव इतिश्रुतः ॥ २२ ॥
तस्य मे भव भार्य्या त्वं भुंक्ष्व भोगान् यथासुखम् ॥ २३ ॥
कश्च तावदसौ यं त्वं विष्णुरित्यभिभाषसे।
वीर्य्येण तपसा चैव भोगेन च बलेन च।
स मया नो समो भद्रे ! यं त्वं कामयसेऽङ्गने ॥ २४ ॥
इत्युक्तवति तस्मिंस्तु वेदवत्यथ साब्रवीत्।
मामैवमिति सा कन्या तमुवाच निशाचरम् ॥ २५ ॥
त्रैलोक्याधिपतिं विष्णुं सर्वलोकनमस्कृतम्।

कथं विज्ञातस्तत्राह,—जानामीति ॥ १९ ॥ २० ॥

पुण्यसञ्चयः]पुण्यसंग्रहस्तां वृद्धानामेव भ्राजते। न तु युवत्या इत्यर्थः ॥ २१ ॥ २२ ॥ २३ ॥

कश्चेति। मदपेक्षयाऽल्पवीर्य्यादियुक्तः ॥ २४ ॥

त्वदृते राक्षसेन्द्रान्यः कोऽवमन्येत बुद्धिमान् ॥ २६ ॥
एवमुक्तस्तया तत्र वेदवत्या निशाचरः।
मूर्धजेषु तदा कन्यां कराग्रेण परामृशत् ॥ २७ ॥
ततो वेदवती क्रुद्धा केशान् हस्तेन साच्छिनत्।
असिर्भूत्वा करस्तस्याः केशांश्छिन्नांस्तदाकरोत् ॥ २८ ॥
सा ज्वलन्तीव रोषेण दहन्तीव निशाचरम्।
उवाचाग्निं समाधाय मरणाय कृतत्वरा ॥ २९ ॥
धर्षितायास्त्वयाऽनार्य्य न मे जीवितमिष्यते।
रक्षस्तस्मात् प्रवेक्ष्यामि पश्यतस्ते हुताशनम ॥ ३० ॥
यस्मात् तु धर्षिता चाहं त्वया पापात्मना वने।
तस्मात् तव बधार्थं हि समुत्पत्स्याम्यहं पुनः ॥ ३१ ॥
न हि शक्यः स्त्रिया हन्तुं पुरुषः पापनिश्चयः।
शापे त्वयि मयोत्सृष्टे तपसश्च व्ययो भवेत् ॥ ३२ ॥
यदि त्वस्ति मया किञ्चित् कृतं दत्तं हुतं तथा।
तस्मात्त्वयोनिजा साध्वी भवेयं धर्मिणः सुता ॥ ३३ ॥

मामेवम्। विष्णुविषये वदेति शेषः ॥ २५ ॥ २६ ॥ २७ ॥
हस्तेन केशच्छेदः कथं तत्राहासिर्भूत्वेति ॥ २८ ॥ २९ ॥
धर्षितायाः केशस्पर्शनेन स्त्रीभावं प्रापितायाः ॥ ३० ॥
पुनः समुत्पत्स्यामि समुत्पत्स्ये इत्यर्थः ॥ ३१ ॥
व्ययः ब्रह्मवरदानादिदानीं तव मरणाभावेन वृथाव्यय इत्यर्थः ॥३२॥

एवमुक्त्वा प्रविष्टा सा ज्वलितं जातवेदसम् ।
पपात च दिवो दिव्या पुष्पवृष्टिः समन्ततः ॥ ३४ ॥
सैषा जनकराजस्य प्रसूता तनया प्रभो ! ।
तव भार्य्या महाबाहो ! विष्णुस्त्वं हि सनातनः ॥ ३५ ॥
पूर्वं क्रोधहतः शत्रुर्ययासौ निहतस्तया ।
उपाश्रयित्वा शैलाभस्तववीर्य्यममानुषम् ॥ ३६ ॥
एवमेषा महाभागा मर्त्येषूत्पत्स्यते पुनः ।
क्षेत्रे हलमुखोत्कृष्टे वेद्यामग्निशिखोपमा ॥ ३७ ॥

अयोनिजा भूत्वा धर्मिणो धर्मिष्ठस्य न्यायतः सुता भवेयम् ॥ ३३ ॥
अत्रापि पुष्पवर्षं रावणनाशनिश्चयजसन्तोषात् ॥ ३४ ॥
सैषा कृतरावणवधप्रतिज्ञा वेदवत्येवेत्यर्थः । विष्णुस्त्वमिति । अनेन सीताया लक्ष्मीत्वं स्फुटमेवोक्तम् । तदुक्तं पराशरेण । राघवत्वे भवत् सीता रुक्मिणी कृष्णजन्मनीति ॥ ३५ ॥
यया वेदवत्या पूर्वं तदवतारे क्रोधहतो यः शत्रुः सोऽसौ शैलाभः पुनस्तयैव यथाप्रतिज्ञं त्वां पतिं प्राप्य पतिभूतस्य तवामानुषं वीर्य्यमुपाश्रयित्वोपाश्रित्य निहतः । अनेन सीतैव रावणवधे मुख्यं कारणम् । रामे तु हन्तृत्वमारोपितमिति सूचितम् ॥ ३६ ॥
भाविकल्पेष्वप्येवमेवावतारादिकल्पेन कल्पो व्याख्येय इति न्यायादित्याह,—एवमिति । एषा महाभागा एवमेव मर्त्येषु भाविषु हलमुखोत्कृष्टे क्षेत्रे पुनः पुनरुत्पत्स्यते । उत्का[illegible]य जनो[illegible]ति [illegible] उत्पत्तिरत्राविर्भावः । एतेन भगवतोऽपि तथावतारः सूचित एव ॥ ३७ ॥

एषा वेदवती नाम पूर्वमासीत् कृते युगे।
त्रेतायुगमनुप्राप्य वधार्थं तस्य रक्षसः।
उत्पन्ना मैथिलकुले जनकस्य महात्मनः॥ ३८॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
सप्तदशः सर्गः॥ १७॥

सीताविर्भावो वैशाखशुक्लनवम्यामिति महासुन्दरीतन्त्रे [redacted]क्तम्।
वैशाखे शुक्लनवम्यामुत्पन्ना सावनीसुता।
सीतामुखात्मा संजाता पालिता जनकेन च॥ १॥
रामपत्नी महाभागा सीतानामेति विश्रुता।
तस्मिन्दिने रामभक्ताः श्रद्धाभक्तिसमन्विताः॥ २॥
महोत्सवपराः सर्वे वित्तशाठ्यविवर्जिताः।
गीतवादित्रनृत्याद्यै रामभक्तिपरायणाः॥ ३॥
वैशाखसितनवम्यां पुराणपठनं तथा।
लक्ष्मीसूक्तं पठंस्तत्र याति रामं सनातनम्॥ ४॥
सौभाग्यं धनधान्यं च पुत्रसन्ततिविस्तृतम्।
रामप्रासादाल्लभते मुच्यते सर्वपातकादिति॥ ५॥

उपसंहरति। एषेति। आसीत् कृते युगे इत्यनन्तरं त्रेतायुग-मिति। जनकस्योत्पन्ना। न्यायतः पुत्रीत्वेनोत्पन्नेत्यर्थः॥ ३८॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे सप्तदशः सर्गः॥ १७॥

# अष्टादशः सर्गः ।



प्रविष्टायां हुताशं तु वेदवत्यां स रावणः ।
पुष्पकं तु समारुह्य परिचक्राम मेदिनीम् ॥ १ ॥
ततो मरुत्तं नृपतिं यजन्तं सह दैवतैः ।
उशीरबीजमासाद्य ददर्श स तु रावणः ॥ २ ॥
संवर्त्तो नाम ब्रह्मर्षिः साक्षात् भ्राता बृहस्पतेः ।
याजयामास धर्मज्ञः सर्वैः देवगणैर्वृतः ॥ ३ ॥
दृष्ट्वा देवास्तु तद्रक्षो वरदानेन दुर्जयम् ।
तिर्यग्योनिं समाविष्टास्तस्य धर्षणभीरवः ॥ ४ ॥
इन्द्रो मयूरः संवृत्तो धर्मराजस्तु वायसः ।
कृकलासो धनाध्यक्षो हंसश्च वरुणोऽभवत् ॥ ५ ॥
अन्येष्वपि गतेष्वेवं देवेष्वरिनिसूदन ! ।

प्रविष्टायामिति ॥ १ ॥
उशीरबीजमिति देशनाम ॥ २ ॥
देवगणैर्वृतः । अपरोक्षतया हविर्भागार्थमवस्थितैरिति शेषः ॥ ३ ॥
॥ ४ ॥ ५ ॥

रावणः प्राविशत् यज्ञं सारमेय इवाशुचिः ॥ ६ ॥
तञ्च राजानमासाद्य रावणो राक्षसाधिपः।
प्राह युद्धं प्रयच्छेति निर्जितोऽस्मीति वा वद ॥ ७ ॥
ततो मरुत्तो नृपतिः को भवानित्युवाच तम्।
अवहासं ततो मुक्त्वा रावणो वाक्यमब्रवीत् ॥ ८ ॥
अकुतूहलभावेन प्रीतोऽस्मि तव पार्थिव !।
धनदस्यानुजं यो मां नावगच्छसि रावणम् ॥ ९ ॥
त्रिषु लोकेषु कोऽन्योऽस्ति यो न जानाति मे बलम्।
भ्रातरं येन निर्जित्य विमानमिदमाहृतम् ॥ १० ॥
ततो मरुत्तः स नृपस्तं रावणमथाब्रवीत्।
धन्यः खलु भवान्येन ज्येष्ठो भ्राता रणे जितः।
न त्वया सदृशः श्लाघ्यस्त्रिषु लोकेषु विद्यते ॥ ११ ॥
नाधर्मसहितं श्लाघ्यं न लोके प्रतिसंहितम्।

अन्येष्वपि देवेष्वेवं गतेषु। तिर्य्यग्योनिस्वरूपं गतेष्वित्यर्थः ॥६॥७॥

मुक्त्वा कृत्वा ॥ ८ ॥

अकुतूहलभावेन मां दृष्ट्वाप्यविस्मयनिर्भयानादरभावेन यो नावगच्छसि तस्य तव प्रीतोऽस्मि ॥ ९ ॥

कोऽन्योऽस्ति न कोऽपि ! सर्वेऽपि जानन्तीत्यर्थः ॥ १० ॥

अथ मरुत्तो व्याजस्तुत्याह,—धन्य इति ॥ ११ ॥

लोकेषु विद्यत इत्युत्तरमेकः श्लोकः प्रक्षिप्तः उक्तार्थत्वादिति कतकः।

कर्म दौरात्म्यकं कृत्वा स्नाघसे भ्रातृनिर्जयात् ।
कत्वं प्राक्केवलं धर्मं चरित्वा लब्धवान् वरम् ।
श्रुतपूर्वं हि न मया भाषसे यादृशं स्वयम् ॥ १२ ॥
तिष्ठेदानीं न मे जीवन् प्रतियास्यसि दुर्मते ! ।
अद्य त्वां निशितैर्बाणैः प्रेषयामि यमक्षयम् ॥ १३ ॥
ततः शरासनं गृह्य सायकांश्च नराधिपः ।
रणाय निर्ययौ क्रुद्धः संवर्त्तो मार्गमावृणोत् ॥ १४ ॥
सोऽब्रवीत् स्नेहसंयुक्तं मरुत्तन्तं महानृषिः ।
श्रोतव्यं यदि मद्वाक्यं संप्रहारो न ते क्षमः ॥ १५ ॥
माहेश्वरमिदं सत्रमसमाप्तं कुलं दहेत् ।
दीक्षितस्य कुतो युद्धं क्रोधित्वं दीक्षिते कुतः ॥ १६ ॥
संशयश्च जये नित्यं राक्षसश्च सुदुर्जयः ।
सनिवृत्तो गुरोर्वाक्यात् मरुत्तः पृथिवीपतिः ।
विसृज्य सशरं चापं स्वस्थो मखमुखोऽभवत् ॥ १७ ॥

कत्त्वमिति। केवलं पज्यपूजारहितं कं धर्मं प्राक् चरित्वा वरं लब्धवानसि। तथाविधोऽपि कश्चिद्धर्म इति चेन्न श्रुतपूर्व इत्याह,—श्रुतेति। यादृशं भाषसे ज्येष्ठपीडारूपं समाचारम् ॥ १२ ॥ १३ ॥

मार्गमावृणोद्रणायागतस्य रावणस्येति भावः ॥ १४ ॥

महानृषिः संवर्त्तः ॥ १५ ॥

माहेश्वरं तद्दैवत्यम्। सत्रं यागः ॥ १६ ॥

ततस्तं निर्जितं मत्वा घोषयामास वै शुकः।
रावणो जयतीत्युच्चैर्हर्षान्नादं विमुक्तवान्॥ १८॥
तान् भक्षयित्वा तत्रस्थान् महर्षीन्यज्ञमागतान्।
वितृप्तो रुधिरैस्तेषां पुनः संप्रययौ महीम्॥ १९॥
रावणे तु गते देवाः सेन्द्राश्चैव दिवौकसः।
ततः स्वां योनिमासाद्य तानि सत्त्वानि चाब्रुवन्॥ २०॥
हर्षात्तदाब्रवीदिन्द्रो मयूरं नीलबर्हिणम्।
प्रीतोऽस्मि तव धर्मज्ञ भुजङ्गाद्धि न ते भयम्॥ २१॥
इदं नेत्रसहस्रं तु यत्तद्बर्हे भविष्यति।
वर्षमाणे मयि मुदं प्राप्स्यसे प्रीतिलक्षणम्॥ २२॥
एवमिन्द्रो वरं प्रादान् मयूरस्य सुरेश्वरः॥ २३॥
नीलाः किल पुरा बर्हा मयूराणां नराधिप!।
सुराधिपाद्वरं प्राप्य गताः सर्वेऽपि बर्हिणः॥ २४॥

मखमुखः मखसमाप्त्युन्मुखः॥ १७॥ १८॥

वितृप्तः विशेषेण तृप्तः॥ १९॥

स्वां योनिं स्वस्वप्रकृतिमासाद्य तानि सत्त्वानि प्राक्कार्य्यवशगृहीत-मूर्त्ति जातीयप्राणिनः॥ २०॥ २१॥

प्रीतिलक्षणं मत्प्रीतिचिह्नम्॥ २२॥ २३॥

नीलाः किलेति। नेत्ररहिताः केवलं नीला इत्यर्थः॥ २४॥

धर्मराजोऽब्रवीद्राम ! प्राग्वंशे वायसं प्रति।
पक्षिंस्तवास्मि सुप्रीतः प्रीतस्य वचनं शृणु ॥ २५ ॥
यथान्ये विविधै रोगैः पीड्यन्ते प्राणिनो मया।
ते न ते प्रभविष्यन्ति मयि प्रीते न संशयः ॥ २६ ॥
मृत्युतस्ते भयं नास्ति वरान्मम विहङ्गम !।
यावत्त्वां न वधिष्यन्ति नरास्तावद्भविष्यसि ॥ २७ ॥
ये च मद्विषयस्था वै मानवाः क्षुधयार्दिताः।
त्वयि भुक्ते सुतृप्तास्ते भविष्यन्ति सबान्धवाः ॥ २८ ॥
वरुणस्त्वब्रवीद्धंसं गङ्गातोयविचारिणम्।
श्रूयतां प्रीतिसंयुक्तं ततः पत्ररथेश्वरम् ॥ २९ ॥
वर्णो मनोरमः सौम्यश्चन्द्रमण्डलसन्निभः।
भविष्यति तवोदग्रः शुद्धफेनसमप्रभः ॥ ३० ॥
मच्छरीरं समासाद्य कान्तो नित्यं भविष्यसि।
प्राप्स्यसे चातुलां प्रीतिमेतन्मे प्रीतिलक्षणम् ॥ ३१ ॥
हंसानां हि पुरा राम ! न वर्णः सर्वपाण्डुरः।

प्राग्वंशे प्राग्यज्ञगृहे ॥ २५ ॥
ते रोगास्ते तव मयि प्रीते सति न प्रभविष्यन्ति ॥ २६ ॥
मत्तोऽन्यस्मात्परिहारत्वादाह। यावदिति ॥ २७ ॥
मद्विषयस्थाः यमलोकस्थाः ॥ २८ ॥ २९ ॥ ३० ॥
मच्छरीरं जलम्। जलमूर्त्तित्वात्तस्य ॥ ३१ ॥

पद्मा नीलाग्रसंवीताः क्रोडाः शष्पाग्रनिर्मलाः ॥ ३२ ॥
अथाब्रवीद्वैश्रवणः कृकलासं गिरौ स्थितम् ।
हैरण्यं संप्रयच्छामि वर्णं प्रीतस्तवाप्यहम् ॥ ३३ ॥
सद्रव्यञ्च शिरो नित्यं भविष्यति तवाव्ययम् ।
एष काञ्चनको वर्णो मत्प्रीत्या ते भविष्यति ॥ ३४ ॥
एवं दत्त्वा वरांस्तेभ्यस्तस्मिन् यज्ञोत्सवे सुराः ।
निवृत्ते सह राज्ञा ते पुनः स्वभवनं गताः ॥ ३५ ॥

## इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे अष्टादशः सर्गः ॥ १८ ॥

नीलेन नीलवर्णेनाग्रेऽग्रदेशे संवीताः प्राप्ताः । शष्पं बालतृणं तदग्रवन्निर्मलाः । कोमलश्यामवर्णा इत्यर्थः । क्रोडं भुजान्तरम् ॥३२॥३३॥

शिरोनित्यं सद्रव्यम् । स्वर्णवर्णमित्यर्थः । तदेवाह । एष काञ्चनक इति । पूर्वं हि कृकलासा अञ्जनवर्णा इत्याहुः ॥ ३४ ॥

मरुत्तेन सह स्वर्गमित्यर्थः ॥ ३५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके उत्तरकाण्डे अष्टादशः सर्गः ॥ १८ ॥

---

# एकोनविंशः सर्गः ।



अथ जित्वा मरुत्तं स प्रययौ राक्षसाधिपः ।
नगराणि नरेन्द्राणां युद्धकाङ्क्षी दशाननः ॥ १ ॥
समासाद्य तु राजेन्द्रान् महेन्द्रवरुणोपमान् ।
अब्रवीद्राक्षसेन्द्रस्तु युद्धं मे दीयतामिति ॥ २ ॥
निर्जिताः स्मेति वा ब्रूत एष मे हि सुनिश्चयः ।
अन्यथा कुर्वतामेवं मोक्षो नैवोपपद्यते ॥ ३ ॥
ततस्त्वभीरवः प्राज्ञाः पार्थिवा धर्मनिश्चयाः ।
मन्त्रयित्वा ततोऽन्योन्यं राजानः सुमहाबलाः ॥ ४ ॥
निर्जिताः स्मेत्यभाषन्त ज्ञात्वा वरबलं रिपोः ।
दुष्मन्तः सुरथो गाधिर्गयो राजा पुरूरवाः ॥ ५ ॥
एते सर्वेऽब्रुवंस्तात ! निर्जितास्मेति पार्थिवाः ।

अथेति ॥ १ ॥ २ ॥

एवमकुर्वतां युद्धम् । निर्जिताः स्मेति वचनं वाऽकुर्वताम् । अन्यथा प्रकारान्तरेण मोक्षो मदुपरोधात् नास्तीत्यर्थः ॥ ३ ॥

अभीरवः सन्तोऽपि राजानः पार्थिवाः एत्यीमतया निर्जिताः स्मेत्यभाषन्त ॥ ४ ॥

अथायोध्यां समासाद्य रावणो राक्षसाधिपः ॥ ६ ॥
स गुप्तामनरण्येन शक्रेणेवामरावतीम्।
स तं पुरुषशार्दूलं पुरन्दरसमं बले ॥ ७ ॥
प्राह राजानमासाद्य युद्धं देहीति रावणः।
निर्जितोऽस्मीति वा ब्रूहि त्वमेवं मम शासनम् ॥ ८ ॥
अयोध्याधिपतिस्तस्य श्रुत्वा पापात्मनो वचः।
अनरण्यस्तु संक्रुद्धो राक्षसेन्द्रमथाब्रवीत् ॥ ९ ॥
दीयते द्वंद्वयुद्धं ते राक्षसाधिपते! मया।
सन्तिष्ठ क्षिप्रमायत्तो भव चैवं भवाम्यहम् ॥ १० ॥
अथ पूर्वं श्रुतार्थेन निर्जितं सुमहद्बलम्।
निष्क्रामत्तन्नरेन्द्रस्य बलं रक्षोवधोद्यतम् ॥ ११ ॥
नागानां दशसाहस्रं वाजिनां नियुतं तथा।
रथानां बहुसाहस्रं पत्तीनाञ्च नरोत्तम! ॥ १२ ॥
महीं सञ्छाद्य निष्क्रान्तं सपदातिरथं रणे।

दुष्मन्त इति। भिन्नभिन्नकालवर्त्तिनोऽपि दुष्मन्तादयः स्व स्व काले रावणं प्रति जितस्त्ववादं वरदानादुक्तवन्तः ॥ ५। ६ ॥७॥८ ॥ ९॥

भवाम्यहमेवं भवामि। आयत्तो भवामीत्यर्थः ॥ १० ॥

पूर्वं श्रुतार्थेन श्रुतरावणवृत्तान्तेन। निर्जितम्। भावे क्तः। निर्जयं प्रति यत् सुमहद्बलं नियुक्तं तन्नरेन्द्रस्य बलं रक्षोवधोद्यतं निष्क्रामत् ॥ ११ ॥ १२ ॥ १३ ॥

ततः प्रवृत्तं सुमहत् युद्धं युद्धविशारद ! ॥ १३ ॥
अनरण्यस्य नृपते राक्षसेन्द्रस्य चाद्भुतम् ।
तद्रावणबलं प्राप्य बलं तस्य महीपतेः ॥ १४ ॥
प्राणश्यत तदा सर्वं हव्यं हुतमिवानले ।
युद्धा च सुचिरं कालं कृत्वा विक्रममुत्तमम् ॥ १५ ॥
प्रज्वलन्तं तमासाद्य चिप्रमेवावशेषितम् ।
प्राविशत् संकुलं तत्र शलभा इव पावकम् ॥ १६ ॥
सोऽपश्यत् तन्नरेन्द्रस्तु नश्यमानं महाबलम् ।
महार्णवं समासाद्य वनापगशतं यथा ॥ १७ ॥
ततः शक्रधनुःप्रख्यं धनुर्विस्फारयन् स्वयम् ।
आससाद नरेन्द्रस्तं रावणं क्रोधमूर्च्छितः ॥ १८ ॥
अनरण्येन तेऽमात्या मारीचशुकसारणाः ।
प्रहस्तसहिता भग्ना व्यद्रवन्त मृगा इव ॥ १९ ॥
ततो बाणशतान्यष्टौ पातयामास मूर्धनि ।
तस्य राक्षसराजस्य इक्ष्वाकुकुलनन्दनः ॥ २० ॥
तस्य बाणाः पतन्तस्ते चक्रिरे न क्षतं क्वचित् ।

तस्य महीपतेर्बलं रावणबलं प्राप्य सुचिरं कालं युद्धोत्तममधिकं विक्रमञ्च कृत्वा तदा सर्वं प्राणश्यत ॥ १४ ॥ १५ ॥

प्रज्वलन्तं रावणमासाद्य चिप्रमेवावशेषितं अल्पावशिष्टं सत् तत्र रणे पावकं प्राप्य शलभा इव सङ्कुलं नाशं प्राविशत् प्राप्तमभूत् ॥ १६ ॥

वारिधारा इवाभ्रेभ्यः पतन्त्यो गिरिमूर्धनि ॥ २१ ॥
ततो राक्षसराजेन क्रुद्धेन नृपतिस्तदा।
तलेनाभिहतो मूर्ध्नि स रथान्निपपात ह ॥ २२ ॥
स राजा पतितो भूमौ विह्वलः प्रविवेपितः।
वज्रदग्ध इवारण्ये सालो निपतितो यथा ॥ २३ ॥
तं प्रहस्याब्रवीद्रक्ष इक्ष्वाकुं पृथिवीपतिम्।
किमिदानीं फलं प्राप्तं त्वया मां प्रतियुध्यता ॥ २४ ॥
त्रैलोक्ये नास्ति यो द्वन्द्वं मम दद्यान्नराधिप !।
शङ्के प्रसक्तो भोगेषु न शृणोषि बलं मम ॥ २५ ॥
तस्यैवं ब्रुवतो राजा मन्दासुर्वाक्यमब्रवीत्।
किं शक्यमिह कर्तुं वै कालो हि दुरतिक्रमः ॥ २६ ॥
नह्यहं निर्जितो रक्षस्त्वया चात्मप्रशंसिना।
कालेनैव विपन्नोऽहं हेतुभूतस्तु मे भवान् ॥ २७ ॥
किन्त्विदानीं मया शक्यं कर्तुं प्राणपरिक्षये।
न ह्यहं विमुखो रक्षो युध्यमानस्त्वया हतः ॥ २८ ॥

वनापगशतम्। वनं जलं तत्पूर्णनदीशतम्। आर्षोऽक्लसः ॥ १७ ॥ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

वज्रदग्धोऽशनिहतः ॥ २३ ॥

इक्ष्वाकुं तद्वंश्यमनरण्यम्। किं फलं प्राप्तम्। निर्जितोऽस्मीति वचनमनुक्तेति शेषः ॥ २४ ॥ ॥ २५ ॥ २६ ॥

इक्ष्वाकुपरिभावित्वाद् वचो वक्ष्यामि राघव ! ।
यदि दत्तं यदि हुतं यदि मे सुकृतं तपः ।
यदि गुप्ताः प्रजाः सम्यक् तदा सत्यं वचोऽस्तु मे ॥ २९ ॥
उत्पतस्यते कुले ह्यस्मिन्निक्ष्वाकूणां महात्मनाम् ।
रामो दाशरथिर्नाम यस्ते प्राणान् हरिष्यति ॥ ३० ॥
ततो जलधरोदग्रस्ताडितो देवदुन्दुभिः ।
तस्मिन्नुदाहृते शापे पुष्पवृष्टिश्च खाच्चुत्ता ॥ ३१ ॥
ततः स राजा राजेन्द्र ! गतः स्थानं त्रिविष्टपम् ।
स्वर्गते च नृपे तस्मिन् राक्षसः सोऽपसर्पत ॥ ३२ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
एकोनविंशः सर्गः ॥ १९ ॥

अहं त्वया न निर्जितः किन्तु प्राप्तेन कालेनैव विपन्न इत्यर्थः ।२८।२८

इक्ष्वाकुपरिभावित्वात् । त्वद्कृतावमाननवाक्यस्य इक्ष्वाकुकुलपरि-
भवरूपत्वादित्यर्थः । वचःशापरूपम् ॥ ॥ २९ ॥ ३० ॥

पुष्पवृष्टिश्चापि प्रागवत् ॥ ३१ ॥

अपसर्पत अपासर्पत् ॥ ३२ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

## विंशः सर्गः।



ततो विचारयन् मर्त्यान् पृथिव्यां राक्षसाधिपः।
आससाद घने तस्मिन् नारदं मुनिपुङ्गवम्॥ १॥
तस्याभिवादनं कृत्वा दशग्रीवो निशाचरः।
अब्रवीत् कुशलं पृष्ट्वा हेतुमागमनस्य च॥ २॥
नारदस्तु महातेजा देवर्षिरमितप्रभः।
अब्रवीन्मेघपृष्ठस्थो रावणं पुष्पके स्थितम्॥ ३॥
राक्षसाधिपते! सौम्य! तिष्ठ विश्रवसः सुत!।
प्रीतोऽस्म्यभिजनोपेतविक्रमैरूर्जितैस्तव॥ ४॥
विष्णुना दैत्यघातैश्च गन्धर्वोरगधर्षणैः।
त्वया समं विमर्दैश्च भृशं हि परितोषितः॥ ५॥

आससाद घने तस्मिन्निति। तस्मिन् काले घने घनपृष्ठे स्थितं मुनिश्रेष्ठं नारदमाससाद॥ १॥

कुशलं पृष्ट्वा आगमनस्य हेतुमब्रवीत्। पप्रच्छेत्यर्थः॥ २॥ ३॥

तिष्ठ मद्वचः श्रोतुमिति शेषः॥ ४॥

विष्णुना दैत्यघातादिभिरहन्तोषितः। त्वया समं गन्धर्वोरगधर्षणैर्विमर्दैर्भाविभिः परितोषितो भविष्यामीत्यर्थः॥ ५॥

किञ्चिद्वक्ष्यामि तावत्तु श्रोतव्यं श्रोष्यसे यदि ।
तन्मे निगदतस्तात ! समाधिं श्रवणे कुरु ॥ ६ ॥
किमर्थं रक्ष्यते तात ! त्वयाऽवध्येन दैवतैः ।
हत एव ह्ययं लोको यदा मृत्युवशं गतः ॥ ७ ॥
देवदानवदैत्यानां यक्षगन्धर्वरक्षसाम् ।
अवध्येन त्वया लोकः क्रोष्टुं योग्यो न मानुषः ॥ ८ ॥
नित्यं श्रेयसि संमूढं महद्भिर्व्यसनैर्वृतम् ।
हन्यात् कस्तादृशं लोकं जराव्याधिशतैर्युतम् ॥ ९ ॥
तैस्तैरनिष्टोपगमैरजस्रं यत्र कुत्रकः ।
मतिमान् मानुषे लोके युद्धेन प्रणयी भवेत् ॥ १० ॥
क्षीयमाणं दैवहतं क्षुत्पिपासाजरादिभिः ।
विषादशोकसंमूढं लोकं त्वं क्षपयस्व मा ॥ ११ ॥

समाधिं चित्तैकाग्र्यम् ॥ ६ ॥

अयं लोको मर्त्यलोकः । दैवतैरवध्येनेत्यनेन मर्त्येभ्यो भयराहित्य-मुक्तम् ॥ ७ । ८ ॥

श्रेयसि संमूढं श्रेयआचरणे बुद्धिहीनम् । व्यसनान्येव जरेत्या-दिना स्पष्टीकृतानि । ९ ॥

नानाविधैरनिष्टोपगमैरनिष्टसम्बन्धैर्यत्र कुत्र यत्र कुत्रापि क्लेशिते मानुषे लोके को मतिमानस्य युद्धेन वधे प्रणयी भवेत् न कोऽपि । १० ॥

पश्य तावन्महाबाहो ! राक्षसेश्वर ! मानुषम् ।
मूढमेवं विचित्रार्थं यस्य न ज्ञायते गतिः ॥ १२ ॥
क्वचिद्वादित्रनृत्यादि सेव्यते मुदितैर्जनैः ।
रुद्यते चापरैरार्त्तैर्धाराश्रुनयनाननैः ॥ १३ ॥
मातापितृसुतस्नेहभार्य्याबन्धुमनोरमैः ।
मोहितोऽयं जनो ध्वस्तः क्लेशं स्वं नावबुध्यते ॥ १४ ॥
तत् किमेवं परिक्लिश्य लोकं मोहनिराकृतम् ।
जितएव त्वया सौम्य ! मर्त्यलोको न संशयः ॥ १५ ॥
अवश्यमेभिः सर्वैश्च गन्तव्यं यमसादनम् ।
तन्निगृह्णीष्व पौलस्त्य ! यमं परपुरञ्जय ! ॥ १६ ॥
तस्मिन् जिते जितं सर्वं भवत्येव न संशयः ।

किञ्च मृतमारणवद्युद्धेन तेषां वधो व्यर्थ इत्याह। क्षीयमाणमिति विषादो व्याध्यादिजं दुःखम् ॥ ११ ॥

यस्य मनुष्यलोकस्य गतिर्दुःखादिभोगकालो न ज्ञायते। तेन लोकेनेति शेषः। एवं ज्ञानराहित्येन मूढमपि विचित्रार्थं नानाविध सुखदुःखार्थसक्तं मानुषं लोकं पश्य ॥ १२ ॥

तदेवाह। क्वचिदिति। धाराश्रुनयनोपेतमाननं येषां तैः ॥ १३ ॥

मात्रादिस्नेहैर्भार्य्यादिमनोरमैर्भार्य्यादिविषयकमनोरथैरित्यर्थः। मोहितोऽतएव ध्वस्तोऽधःपतितः। स्वं क्लेशं पारलौकिकम् ॥ १४ ॥

एवमुक्तस्तु लङ्केशो दीप्यमानं स्वतेजसा ॥ १७ ॥
अब्रवीन्नारदं तत्र संप्रहस्याभिवाद्य च ।
महर्षे ! देवगन्धर्वविहारसमरप्रिय ॥ १८ ॥
अहं समुद्यतो गन्तुं विजयार्थं रसातलम् ।
ततो लोकत्रयं जित्वा स्थाप्य नागान् सुरान् वशे ।
समुद्रममृतार्थञ्च मथिष्यामि रसालयम् ॥ १९ ॥
अथाब्रवीत् दशग्रीवं नारदो भगवानृषिः ।
क्व खल्विदानीं मार्गेण त्वयेहान्येन गम्यते ॥ २० ॥
अयं खलु सुदुर्गम्यः प्रेतराजपुरं प्रति ।
मार्गो गच्छति दुर्धर्ष यमस्यामित्रकर्शन ! ॥ २१ ॥
स तु शारदमेघाभं हासं मुक्त्वा दशाननः ।

एवं प्रकारेण मोहनाज्ञानेन निराकृतं प्रख्यापितार्थम् ॥ १६ ॥ १७ ॥

देवगन्धर्वविहारतल्लोकक्रीडापर । समरप्रिय समरदर्शनप्रिय ॥ १८ ॥

ततः रसातलजयानन्तरम् । रसस्यामृतरूपरसस्यालयं समुद्रं मथिष्यामि ॥ १९ ॥

इदानीं रसातलं जिगमिषुणा त्वया अन्येन मार्गेण रसातलमार्गव्यतिरिक्तमार्गेण क्व खलु गम्यते ॥ २० ॥

कस्य देशस्य तर्हि अयं मार्गः तत्र आह । अयं खल्विति । सुदुर्गम्यः सुदुर्गमः । यदार्थः । यमस्य यमपुरस्य ॥ २१ ॥

उवाच कृतमित्येव वचनं चेदमब्रवीत् ॥ २२ ॥
तस्मादेवं महाब्रह्मन् ! वैवस्वतवधोद्यत: ।
गच्छामि दक्षिणामाशां यत्र सूर्य्यात्मजो नृप: ॥ २३ ॥
मया हि भगवन् ! क्रोधात् प्रतिज्ञातं रणार्थिना ।
अवजेष्यामि चतुरो लोकपालानिति प्रभो ! ॥ २४ ॥
तदिह प्रस्थितोऽहं वै पितृराजपुरं प्रति ।
प्राणिसंक्लेशकर्त्तारं योजयिष्यामि मृत्युना ॥ २५ ॥
एवमुक्त्वा दशग्रीवो मुनिं तमभिवाद्य च ।
प्रययौ दक्षिणामाशां प्रविष्ट: सह मन्त्रिभि: ॥ २६ ॥
नारदस्तु महातेजा मुहूर्त्तं ध्यानमास्थित: ।
चिन्तयामास विप्रेन्द्रो विधूम इव पावक: ॥ २७ ॥
येन लोकास्त्रय: सेन्द्रा: क्लिश्यन्ते सचराचरा: ।

हासं मुक्त्वा कृत्वा । प्रारदमेघाभं नारदं प्रति कृतमिति वचोऽब्रवीत् । यमपुरमार्गेण गमनं तज्जयश्च मम सिद्धमेवेत्यब्रवीदित्यर्थ: ॥ २२ ॥

यस्मात्त्वया मार्ग उपदिष्टो यतश्चतुर्दिक्पालजयो मया प्रतिज्ञातस्तस्मादेवमनेनैव मार्गेण । हे महाब्रह्मन् । कुमभङ्गादमध्यात्यक्त्यामिनाम् । दक्षिणामाशां गच्छामि ॥ २३ ॥ २४ ॥ २५ ॥

प्रययौ नारदसमीपादिति शेष: । ततो दक्षिणामाशां प्रविष्ट: ॥ ॥ २६ ॥ २७ ॥

क्षीणे चायुषि धर्मेण स कालो जेष्यते कथम् ॥ २८ ॥
स्वदत्तकृतभक्षी यो द्वितीय इव पावकः।
लब्धसंज्ञा विचेष्टन्ते लोका यस्य महात्मनः ॥ २९ ॥
यस्य नित्यं त्रयो लोका विद्रवन्ति भयार्दिताः।
तं कथं राक्षसेन्द्रोऽसौ स्वयमेव गमिष्यति ॥ ३० ॥
यो विधाता च धाता च सुकृतं दुष्कृतं तथा।
त्रैलोक्यं विजितं येन तं कथं विजयिष्यते।
अपरं किन्तु कृत्वैवं विधानं संविधास्यति ॥ ३१ ॥

आयुषि क्षीणे सति धर्मेण धर्ममार्गेण त्रयो लोका येन क्षिप्यन्ते दण्ड्यन्ते स कालः कथमनेन जेष्यते। २८ ॥

यस्य कालः प्राणिनां स्वदत्तस्य स्वकृतस्य स्वदत्तकृते तयोः भक्षी। दत्तं दानम्। इदं विहितयागादेरप्युपलक्षणम्। कृतशब्देन कायक्लेशरूपं तपः। स कथं जेष्यत इति सम्बन्धः। यस्य लब्धसंज्ञा यतो लब्धसंज्ञा विचेष्टन्ते। अयमित्यमीत्यर्थः। यद्वा यस्य महात्मनः। अनुग्रहादिति शेषः। २९। ३० ॥

यो लोकस्य धाता विधाता सामान्यतो विशेषतश्च कर्ता। यः सुकृतं दुष्कृतम्। तत्फलद इत्यर्थः। येन कालेन। विजयिष्यते विजेष्यते। अपरं किमिति। कालएव सर्वसाधनमयं तु कालातिरिक्तमपरं किन्तु विधानं कालव्यतिरिक्तसाधनं [illegible] कृत्वा कालजयं संविधास्यति। ३१।

कौतूहलं समुत्पन्नो यास्यामि यमसादनम्।
विमर्दं द्रष्टुमनयोर्यमराक्षसयोः स्वयम् ॥ ३२ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
विंशः सर्गः ॥ २० ॥

इत्येवं कौतूहलं समुत्पन्नोऽहं यमसादनं द्रष्टुं यास्यामि ॥ ३२ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे विंशः सर्गः ॥ २० ॥



# एकविंशः सर्गः ।



एवं संचिन्त्य विप्रेन्द्रो जगाम लघुविक्रमः ।
आख्यातुं तद् यथावृत्तं यमस्य सदनं प्रति ॥ १ ॥
अपश्यत् स यमं तत्र देवमग्निपुरस्कृतम् ।
विधानमनुतिष्ठन्तं प्राणिनो यस्य यादृशम् ॥ २ ॥
स तु दृष्ट्वा यमः प्राप्तं महर्षिं तत्र नारदम् ।
अब्रवीत् सुखमासीनमर्घ्यमावेद्य धर्मतः ॥ ३ ॥
कच्चित् क्षेमं नु देवर्षे ! कच्चिद्धर्मो न नश्यति ।
किमागमनकृत्यन्ते देवगन्धर्वसेवित ! ॥ ४ ॥
अब्रवीत् तु तदा वाक्यं नारदो भगवानृषिः ।
श्रूयतामभिधास्यामि विधानञ्च विधीयताम् ॥ ५ ।

एवमिति ॥ १ ॥

अग्निः पुरस्कृतः सर्वसाक्षितया येन तम् । यस्य प्राणिनो यादृ विधानं पुण्यपापरूपं कर्म तादृशमनुतिष्ठन्तं तत्तदनुगुणफलं प्रयच्छन्तम् । यद्वा यस्य यादृशं कर्म तस्य तादृशं विधानं निग्रहानुग्रहरूपं कृत्यमनुतिष्ठन्तमित्यर्थः ॥ २ । ३ ॥

कच्चित्क्षेममित्यादि । लोके इति शेषः ॥ ४ ॥

एव नीत्वा दशग्रीव: पितृराज ! निशाचर: ।
उपयाति वशं नेतुं विक्रमैस्त्वां सुदुर्जयम् ॥ ६ ॥
एतेन कारणेनाहं त्वरितो ह्यागत: प्रभो ! ।
दण्डप्रहरणस्याद्य तव किं नु भविष्यति ॥ ७ ॥
एतस्मिन्नन्तरे दूरादंशुमन्तमिवोदितम् ।
ददृशुर्दीप्तमायान्तं विमानं तस्य रक्षस: ॥ ८ ॥
तं देशं प्रभया तस्य पुष्पकस्य महाबल: ।
कृत्वा वितिमिरं सर्वं समीपमभ्यवर्त्तत ॥ ९ ॥
सोऽपश्यत् स महाबाहुर्दशग्रीवस्ततस्तत: ।
प्राणिन: सुकृतञ्चैव भुञ्जानांश्चैव दुष्कृतम् ॥ १० ॥
अपश्यत् सैनिकांश्चास्य यमस्यानुचरै: सह ।
यमस्य पुरुषैरुग्रैर्घोररूपैर्भयानकै: ॥ ११ ॥
ददर्श वध्यमानांश्च क्लिश्यमानांश्च देहिन: ।
क्रोशतश्च महानादं तीव्रनिष्टनतत्परान् ॥ १२ ॥
कृमिभिर्भक्ष्यमाणांश्च सारमेयैश्च दारुणै: ।
श्रोत्रायासकरा वाचो वदतश्च भयावहा: ॥ १३ ॥

निधनस्य। अत: मृताया आपद: प्रतिक्रियार्थेत्वर्थ: ॥ ५ ॥ ६ ॥ दण्ड: आत्मदण्ड: प्रहरणं यस्य तव किन्नु भविष्यति। अत: युद्धार्थी भेत्वर्थ: ॥ ७ ॥

विमानशब्द: पुंलिङ्गोऽपि ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

सन्तार्य्यमाणान् वैतरणीं बहुशः शोणितोदकाम् ।
वालुकासु च तप्तासु तप्यमानान् मुहुर्मुहुः ॥ १४ ॥
असिपत्रवने चैव भिद्यमानानधार्मिकान् ।
रौरवे चारनद्याश्च क्षुरधारासु चैव हि ॥ १५ ॥
पानीयं याचमानांश्च तृषितान् क्षुधितानपि ।
शवभूतान् कृशान् दीनान् विवर्णान् मुक्तमूर्धजान् ॥ १६ ॥
मलपङ्कधरान् दीनान् रूक्षांश्च परिधावतः ।
ददर्श रावणो मार्गे शतशोऽथ सहस्रशः ॥ १७ ॥
कांश्चिच्च गृहमुख्येषु गीतवादित्रनिःस्वनैः ।
प्रमोदमानानद्राक्षीद्रावणः सुकृतैः स्वकैः ॥ १८ ॥
गोरसं गोप्रदातारो अन्नं चैवान्नदायिनः ।
गृहांश्च गृहदातारः स्वकर्मफलमश्नतः ॥ १९ ॥
सुवर्णमणिमुक्ताभिः प्रमदाभिरलंकृतान् ।
धार्मिकानपरांस्तत्र दीप्यमानान् स्वतेजसा ॥ २० ॥
ददर्श स महाबाहू रावणो राक्षसाधिपः ।

तीव्रमिश्रनो दुःखितशब्दबहुलतत्परान् ॥ १२ ॥ १३ ॥
सन्तार्य्यमाणान् वैतरणीमिति अत्यदाधिक्यमार्षम् ॥ १४ ॥ १५ ॥
॥ १६ ॥ १७ ॥ १८ ॥
गृहदातारो गृहदातृन् अश्नत उपभुञ्जानान् ॥ १९ ॥ २० ॥

ततस्तान् भिद्यमानांश्च कर्मभिर्दुष्कृतैः स्वकैः ॥ २१ ॥
रावणो मोचयामास विक्रमेण बलाद्बली ।
प्राणिनो मोचितास्तेन दशग्रीवेण रक्षसा ॥ २२ ॥
सुखमापुर्मुहूर्तं ते ह्यतर्कितमचिन्तितम् ।
प्रेतेषु मुच्यमानेषु राक्षसेन महीयसा ॥ २३ ॥
प्रेतगोपाः सुसंक्रुद्धा राक्षसेन्द्रमभिद्रवन् ।
ततो हलहलाशब्दः सर्वदिग्भ्यः समुत्थितः ।
धर्मराजस्य योधानां शूराणां संप्रधावताम् ॥ २४ ॥
ते प्रासैः परिघैः शूलैर्मुसलैः शक्तितोमरैः ।
पुष्पकं समधर्षन्त शूराः शतसहस्रशः ॥ २५ ॥
तस्यासनानि प्रासादान् वेदिकास्तोरणानि च ।
पुष्पकस्य बभञ्जुस्ते शीघ्रं मधुकरा इव ॥ २६ ॥
देवनिष्ठानभूतं तद्विमानं पुष्पकं मृधे ।
भज्यमानं तथैवासीदक्षयं ब्रह्मतेजसा ॥ २७ ॥

भिद्यमानान् पीड्यमानान्। बध्यमानानिति पाठान्तरम् ॥२१॥२२॥
अचिन्तितमित्यतर्कितमित्यस्यैव विवरणम् ॥ २३ ॥
प्रेतगोपाः प्रेतरक्षकाः ॥ २४ ॥ २५ ॥ २६ ॥
देवनिष्ठानभूतं देवाधिष्ठानभूतं भज्यमानमपि तथैवासीत् अभग्नमासीत् ॥ २७ ॥

असंख्या सुमहत्याचीत्तस्य सेना महात्मनः ।
शूराणामप्रयातॄणां सहस्राणि शतानि च ॥ २८ ॥
ततो वृक्षैश्च शैलैश्च प्रासादानां शतैस्तथा ।
ततस्ते सचिवास्तस्य यथाकामं यथाबलम् ॥ २९ ॥
अयुध्यन्त महावीराः स च राजा दशाननः ।
ते तु शोणितदिग्धाङ्गाः सर्वशस्त्रसमाहताः ॥ ३० ॥
अमात्या राक्षसेन्द्रस्य चक्रुरायोधनं महत् ।
अन्योऽन्यं ते महाभागा जघ्नुः प्रहरणैर्भृशम् ॥ ३१ ॥
यमस्य च महाबाहो ! रावणस्य च मन्त्रिणः ।
अमात्यांस्तांस्तु संत्यज्य यमयोधा महाबलाः ॥ ३२ ॥
तमेव चाभ्यधावन्त शूलवर्षैर्दशाननम् ।
ततः शोणितदिग्धाङ्गः प्रहारैर्जर्जरीकृतः ।
फुल्लाशोक इवाभाति पुष्पके राक्षसाधिपः ॥ ३३ ॥
स तु शूलगदाप्रासाञ्शक्तितोमरसायकान् ।
मुमोच च शिलावृक्षान् मुमोचास्त्रबलाद्बली ॥ ३४ ॥
तरूणाञ्च शिलानाञ्च शस्त्राणाञ्चातिदारुणम् ।

तस्य यमस्य । २८ ॥ २९ ॥ ३० ।
आयोधनं युद्धम् ॥ ३१ ॥ ३२ । ३३ ॥
स रावणोऽस्त्रबलादस्त्रसामर्थ्याच्छूलादीन् मुमोच ॥ ३४ ॥

यमसैन्येषु तद्वर्षं पपात धरणीतले ॥ ३५ ॥
तांस्तु सर्वान् विनिर्भिद्य तदस्त्रमपहत्य च।
जघ्ने ते राक्षसं घोरमेकं शतसहस्रशः ॥ ३६ ॥
परिवार्य्य च तं सर्वे शैलं मेघोत्करा इव।
भिन्दिपालैश्च शूलैश्च निरुच्छासमपोथयन् ॥ ३७ ॥
विमुक्तकवचः क्रुद्धः सिक्तः शोणितविस्रवैः।
ततः स पुष्पकं त्यक्त्वा पृथिव्यामवतिष्ठत ॥ ३८ ॥
ततः स कार्मुकी बाणी समरे चाभिवर्धत।
लब्धसंज्ञो मुहूर्त्तेन क्रुद्धस्तस्थौ यथान्तकः ॥ ३९ ॥
ततः पाशुपतं दिव्यमस्त्रं सन्धाय कार्मुके।
तिष्ठ तिष्ठेति तानुक्त्वा तच्चापं व्यपकर्षत ॥ ४० ॥
आकर्णात् स विकृष्याथ चापमिन्द्रारिराहवे।
मुमोच तं शरं क्रुद्धस्त्रिपुरे शङ्करो यथा ॥ ४१ ॥
तस्य रूपं शरस्यासीत् सधूमज्वालमण्डलम्।
वनं दहिष्यतो घर्मे दावाग्नेरिव मूर्च्छितः ॥ ४२ ॥

तद्वर्षं रावणविसृष्टशस्त्रवर्षं यमसैन्येषु पतित्वा धरणीतले पपात ॥ ३५ ॥

तान् शूलगदाप्रासादीन्। निर्भिद्य भंक्त्वा। तदस्त्रं रावणप्रयुक्तं शस्त्रवर्षकरमस्त्रमपहृत्य निरस्य ॥ ३६ ॥

ज्वालामाली स तु शरः क्रव्यादानुगतो रणे ।
मुक्तगुल्मान् द्रुमांश्चापि भस्म कृत्वा प्रधावति ॥ ४३ ॥
ते तस्य तेजसा दग्धाः सैन्या वैवस्वतस्य तु ।
बले तस्मिन्निपतिता माहेन्द्राइव केतवः ॥ ४४ ॥
ततस्तु सचिवैः सार्द्धं राक्षसो भीमविक्रमः ।
ननाद सुमहानादं कम्पयन्निव मेदिनीम् ॥ ४५ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
एकविंशः सर्गः ॥ २१ ॥

निरुच्छ्वासं यथाभवति तथा रावणं शस्त्रैरपोथयन् ॥ ३७ । ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे एकविंशः सर्गः ॥ २१ ॥

## द्वाविंशः सर्गः ।



स तस्य तु महानादं श्रुत्वा वैवस्वतः प्रभुः ।
शत्रुं विजयिनं मेने स्वबलस्य च संक्षयम् ॥ १ ॥
स हि योधान् हतान् मत्वा क्रोधसंरक्तलोचनः ।
अब्रवीत् त्वरितः सूतं रथो मे उपनीयताम् ॥ २ ॥
तस्य सूतस्तदा दिव्यमुपस्थाप्य महारथम् ।
स्थितः स च महातेजा अध्यारोहत तं रथम् ॥ ३ ॥
प्रासमुद्गरहस्तश्च मृत्युस्तस्याग्रतः स्थितः ।
येन संक्षिप्यते सर्वं त्रैलोक्यमिदमव्ययम् ॥ ४ ॥
कालदण्डस्तु पार्श्वस्थो मूर्त्तिमानस्य चाभवत् ।
यमप्रहरणं दिव्यं तेजसा ज्वलदग्निवत् ॥ ५ ॥
ततो लोकत्रयं क्षुब्धमकम्पन्त दिवौकसः ।
कालं दृष्ट्वा तथा क्रुद्धं सर्वलोकभयावहम् ॥ ६ ॥
ततस्त्वचोदयत् सूतस्तानश्वान् रुचिरप्रभान् ।

स तस्येति । १ ।
उपनीयतामित्यत्रयोदित्यन्वयः । २ । ३ ।

प्रययौ भीमसन्नादो यत्र रक्ष:पति: स्थित: ॥ ७ ॥
मुहूर्त्तेन यमं ते तु हया हरिहयोपमा: ।
प्रापयन् मनसस्तुल्या यत्र तत् प्रस्तुतं रणम् ॥ ८ ॥
दृष्ट्वा तथैव विकृतं रथं मृत्युसमन्वितम् ।
सचिवा राक्षसेन्द्रस्य सहसा विप्रदुद्रुवु: ॥ ९ ॥
लघुसत्त्वतया ते हि नष्टसंज्ञा भयार्दिता: ।
नेह युद्धं समर्था: स्म इत्युक्त्वा प्रययुर्दिश: ॥ १० ॥
स तु तं तादृशं दृष्ट्वा रथं लोकभयावहम् ।
नाक्षुभ्यत दशग्रीवो न चापि भयमाविशत् ॥ ११ ॥
स तु रावणमासाद्य व्यसृजच्छक्तितोमरान् ।
यमो मर्माणि संक्रुद्धो रावणस्य न्यकृन्तत ॥ १२ ॥
रावणस्तु तत: स्वस्थ: शरवर्षं मुमोच ह ।
तस्मिन् वैवस्वतरथे तोयवर्षमिवाम्बुद: ॥ १३ ॥
ततो महाशक्तिशतै: पात्यमानैर्महोरसि ।
नाशक्नोत् प्रतिकर्तुं स राक्षस: शल्यपीड़ित: ॥ १४ ॥

तस्य यमस्य । येन मृत्युना युगान्ते सर्वं जगत् संक्षिप्यते । संक्षिप्यत इत्यर्थः । अन्यत् प्रवाहमित्यम् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

मनसस्तुल्याः मनःसमानवेगाः । प्रस्तुतं प्रारब्धम् ॥ ८ ॥

विकृतं घोरं विकृतवदनाकारम् ॥ ९ ॥

एवं नानाप्रहरणैर्यमेनामित्रकर्षिणा।
सप्तरात्रं कृतः संख्ये विसंज्ञो विमुखो रिपुः॥ १५॥
तदासीत् तुमुलं युद्धं यमराक्षसयोर्द्वयोः।
जयमाकांक्षतोर्वीर समरेष्वनिवर्तिनोः॥ १६॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः।
प्रजापतिं पुरस्कृत्य समेतास्तद्रणाजिरे॥ १७॥
संवर्त इव लोकानां युध्यतोरभवत्तदा।
राक्षसानाञ्च मुख्यस्य प्रेतानामीश्वरस्य च॥ १८॥
राक्षसेन्द्रोऽपि विस्फार्य्य चापमिन्द्राशनिप्रभम्।
निरन्तरमिवाकाशं कुर्वन् बाणांस्ततोऽसृजत्॥ १९॥
मृत्युं चतुर्भिर्विशिखैः सूतं सप्तभिरार्दयत्।
यमं शतसहस्रेण शीघ्रं मर्मस्वताडयत्॥ २०॥
ततः क्रुद्धस्य वदनात् यमस्य समजायत।
ज्वालामाली सनिःश्वासः सधूमः कोपपावकः॥ २१॥

लघुसत्वतया अल्पबलतया॥ १०॥ ११॥ १२॥ १३॥ १४॥
सप्तरात्रं युद्धं कृतमिति शेषः॥ १५॥ १६॥
समेताः प्राप्ताः॥ १७॥ १८॥ १९॥ २०॥
ततः क्रुद्धस्येत्यनेन एतावत्पर्य्यन्तं भगवान् यमो ब्रह्मवरदानं स्मृत्वा मारणबुद्धिं विहाय युद्धमात्रं कृतवानिति सूचितम्॥ २१॥

तदाश्चर्य्यमथो दृष्ट्वा देवदानवसन्निधौ ।
प्रहर्षितौ सुसंरब्धौ मृत्युकालौ बभूवतुः ॥ २२ ॥
ततो मृत्युः क्रुद्धतरो वैवस्वतमभाषत ।
मुञ्च मां समरे यावद्धन्मीमं पापराक्षसम् ॥ २३ ॥
नैषा रक्षो भवेदद्य मर्य्यादा हि निसर्गतः ।
हिरण्यकशिपुः श्रीमान् नमुचिः शम्बरस्तथा ॥ २४ ॥
निसन्दिर्धूमकेतुश्च बलिर्वैरोचनोऽपि च ।
शम्भुर्दैत्यो महाराजो वृत्रो बाणस्तथैव च ॥ २५ ॥
राजर्षयः शास्त्रविदो गन्धर्वाः समहोरगाः ।
ऋषयः पन्नगा दैत्या यक्षाश्च ह्यप्सरोगणाः ॥ २६ ॥
युगान्तपरिवर्त्ते च पृथिवी समहार्णवा ।
क्षयं नीता महाराज ! सपर्वतसरिद्द्रुमा ॥ २७ ॥

प्रहर्षितौ युद्धायेति शेषः । सुसंरब्धौ अतिक्रुद्धौ ॥ २२ ॥

मुञ्च आज्ञापयेत्यर्थः ॥ २३ ॥

निसर्गतः स्वभावसिद्धा हि एषा दृष्टा मयैतद्रक्षो न भवेन्न जीवेदित्येवं रूपा मर्य्यादा ममेत्यर्थः । तदेवाह । हिरण्येति ॥ २४ ॥

शम्भुः कुशध्वजः ब्रह्मर्षिहन्ता दैत्यः ॥ २५ ॥ २६ ॥ २७ ॥

एते चान्ये च बहवो बलवन्तो दुराधरा: ।
विनिपन्ना मया दृष्टा: किमुतायं निशाचर: ॥ २८ ॥
मुञ्च मां साधु धर्मज्ञ ! यावदेनं निहन्म्यहम् ।
न हि कश्चिन्मया दृष्टो बलवानपि जीवति ॥ २९ ॥
बलं मम न खल्वेतन् मर्य्यादैषा निसर्गत: ।
स दृष्टो न मया काल ! मुहूर्त्तमपि जीवति ॥ ३० ॥
तस्यैवं वचनं श्रुत्वा धर्मराज: प्रतापवान् ।
अब्रवीत्तत्र तं मृत्युं त्वं तिष्ठैनं निहन्म्यहम् ॥ ३१ ॥
तत: संरक्तनयन: क्रुद्धो वैवस्वत: प्रभु: ।
कालदण्डममोघं तु तोलयामास पाणिना ॥ ३२ ॥
यस्य पार्श्वेषु निहिता: कालपाशा: प्रतिष्ठिता: ।
पावकाशनिसङ्काशो मुद्गरो मूर्त्तिमान् स्थित: ॥ ३३ ॥

विनिपन्ना: विनिपातं विनाशं प्राप्ता: । दृष्टा: दृष्टमात्रा एव ॥ २८ ॥

यावन्निहन्मि हनिष्यामीत्यर्थ: ॥ २९ ॥

एतन्मया दृष्टो मुहूर्त्तमपि न जीवतीति मम वचनं बलं बलप्रकाशनमात्रपरं न खलु । यतो निसर्गत: अनादिस्थितिस्वभावेन एषा मम दृष्टिरेव प्राणिनां जीवितस्य मर्य्यादा । यद्वमत: स दृष्ट इति । संहारचक्षुषा दृष्ट इत्यर्थ: ॥ ३० ॥

दर्शनादेव यः प्राणान् प्राणिनामपि कर्षति ।
किं पुनः स्पृश्यमानस्य पात्यमानस्य वा पुनः ॥ २४ ॥
स ज्वालापरिवारस्तु निर्दहन्निव राघवम् ।
तेन स्पृष्टो बलवता महाप्रहरणोऽस्फुरत् ॥ २५ ॥
ततो विदुद्रुवुः सर्वे तस्मात् त्रस्ता रणाजिरे ।
सुराश्च क्षुभिताः सर्वे दृष्ट्वा दण्डोद्यतं यमम् ॥ २६ ॥
तस्मिन् प्रहर्तुकामे तु यमे दण्डेन रावणम् ।
यमं पितामहः साक्षात् दर्शयित्वेदमब्रवीत् ॥ २७ ॥
वैवस्वत ! महाबाहो ! न खल्वमितविक्रम ! ।
न हन्तव्यस्त्वयैतेन दण्डेनैव निशाचरः ॥ २८ ॥
वरः खलु मयैतस्मै दत्तस्त्रिदशपुङ्गव ! ।
स त्वया नानृतः कार्य्यो यन्मया व्याहृतं वचः ॥ २९ ॥

तं मत्वम् । एनमयमहं निहन्मीत्यन्वयः ॥ २१ ॥ २२ ॥

मूर्त्तिमान् स्थितः । यस्य पार्श्वे इत्यनुषङ्गः ॥ २३ ॥ २४ ॥
॥ २५ ॥

तस्मात् कालदण्डात् त्रस्तास्त्रस्ताश्च रणाजिरे वर्त्तमानाः सर्वे प्राणिनो विदुद्रुवुः । दण्डोद्यतम् उद्यतदण्डम् ॥ २६ ॥

पितामहो यमं साक्षाद्दर्शयित्वा आदित्यमूर्त्तो • प्रत्यक्षो भूत्वा
॥ २७ ॥

यो हि मामनृतं कुर्य्याद् देवो वा मानुषोऽपि वा ।
त्रैलोक्यमनृतं तेन कृतं स्यान्नात्र संशयः ॥ ४० ॥
क्रुद्धेन विप्रमुक्तोऽयं निर्विशेषं प्रियाप्रिये ।
प्रजाः संहरते रौद्रो लोकत्रयभयावहः ॥ ४१ ॥
अमोघो ह्येष सर्वेषां प्राणिनाममितप्रभः ।
कालदण्डो मया सृष्टः सर्वमृत्युपुरस्कृतः ॥ ४२ ॥
तन्न खल्वेष ते सौम्य ! पात्यो रावणमूर्धनि ।
न ह्यस्मिन् पतिते कश्चिन् मुहूर्त्तमपि जीवति ॥ ४३ ॥
यदि ह्यस्मिन्निपतिते न म्रियेतैष राक्षसः ।

नत्वनुद्वेगेन न हन्तव्यो न हन्तव्य इत्याह्वत्तिः ॥ ३८ ॥
वरः देवसकाशादवध्यत्वरूपः ॥ ३९ ॥

अनृतम् अनृतवचनं कुर्य्यान्मदाज्ञामुल्लंघ्येति शेषः । त्रैलोक्य-मिति । सर्वसमष्टित्वान्ममेति भावः ॥ ४० ॥

ननु त्वद्दत्तवरतया तव प्रियो यदि रावणस्तर्हि मुक्तोऽपि कालदण्डः किं कुर्य्यात्तत्राह । क्रुद्धेनेति । प्रियाप्रिये । समाहारद्वंद्वः । मत्प्रिया-प्रियप्राणिविषये क्रुद्धेन त्वयायं विप्रमुक्तः स्वविषयभूतास्ताः सर्वाः प्रजानिर्विशेषं यथाभवति तथा संहरत्येव ॥ ४१ ॥

सर्वेषां प्राणिनां ब्रह्मादिस्तम्बपर्य्यन्तप्राणिमात्रस्य विनिपातने इत्यर्थः । सर्व-मृत्युपुरस्कृतः । तत्पुरुषो बहुव्रीहिर्वा ॥ ४२ ॥ ४३ ॥

म्रियते वा दशग्रीवस्तदाप्युभयतोऽनृतम् ॥ ४४ ॥
तन्निवर्त्तय लङ्केशाद्दण्डमेतं समुद्यतम् ।
सत्यञ्च मां कुरुष्वाद्य लोकांस्त्वं यद्यवेक्षसे ॥ ४५ ॥
एवमुक्तस्तु धर्मात्मा प्रत्युवाच यमस्तदा ।
एष व्यावर्त्तितो दण्डः प्रभविष्णुर्हि नो भवान् ॥ ४६ ॥
किंत्विदानीं मया शक्यं कर्त्तुं रणगतेन हि ।
न मया यद्ययं शक्यो हन्तुं वरपुरस्कृतः ॥ ४७ ॥
एष तस्मात् प्रणश्यामि दर्शनादस्य रक्षसः ।
इत्युक्त्वा सरथः साश्वस्तत्रैवान्तरधीयत ॥ ४८ ॥
दशग्रीवस्तु तं जित्वा नाम विश्राव्य चात्मनः ।
आरुह्य पुष्पकं भूयो निष्क्रान्तो यमसादनात् ॥ ४९ ॥

उभयत इति । दण्डपातेऽपि रावणजीवने दण्डस्यानृतत्वम् । दण्डा-मरणे मदुक्तवरवचनस्यानृतत्वमित्यर्थः ॥ ४४ ॥ ४५ ॥

प्रभविष्णुः स्वामी ॥ ४६ ॥

यतो मया हन्तुं न शक्यस्तस्मादिदानीं मया किम्नु कर्तुं शक्य-योग्यमिति संचिन्त्येत्यति ॥ ४७ ॥

अस्य रक्षसो दर्शनात् चक्षुःपथात् प्रणश्यामि अन्तर्हितो भवि-ष्यामीत्युक्त्वा अन्तर्धानमिति शेषः ॥ ४८ ॥

तं जित्वा । भगवत्कृपयेति शेषः ॥ ४९ ॥

स तु वैवस्वतो देवैः सह ब्रह्मपुरोगमैः ।
जगाम त्रिदिवं हृष्टो नारदश्च महामुनिः ॥ ५० ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
द्वाविंशः सर्गः ॥ २२ ॥

हृष्टः ब्रह्मणः सत्यपरिपालनं संवृत्तमिति यमादीनां हर्षः ॥ ५० ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

---

## त्रयोविंशः सर्गः ।



ततो जित्वा दशग्रीवो यमं त्रिदशपुङ्गवम् ।
रावणस्तु रणश्लाघी स्वसहायान् ददर्श ह ॥ १ ॥
ततो रुधिरसिक्ताङ्गं प्रहारैर्जर्जरीकृतम् ।
रावणं राक्षसा दृष्ट्वा विस्मयं समुपागमन् ॥ २ ॥
जयेन वर्द्धयित्वा च मारीचप्रमुखास्ततः ।
पुष्पकं भेजिरे सर्वे सान्त्विता रावणेन तु ॥ ३ ॥
ततो रसातलं रक्षः प्रविष्टः पयसां निधिम् ।
दैत्योरगगणाध्युष्टं वरुणेन सुरक्षितम् ॥ ४ ॥
स तु भोगवतीं गत्वा पुरीं वासुकिपालिताम् ।
कृत्वा नागान् वशे हृष्टो ययौ मणिमयीं पुरीम् ॥ ५ ॥
निवातकवचास्तत्र दैत्या लब्धवरा वसन् ।

तत इति ॥ १ ॥

विस्मयमिति । यमादपि मुक्त इति विस्मयः ॥ २ ॥ ३ ॥

रसातलं जिगमिषुः पयसां निधिं प्रविष्टो मार्गवशादिति शेषः । अध्युष्टम् अध्युषितम् ॥ ४ ॥

राक्षसस्तान् समागम्य युद्धाय समुपाह्वयत् ॥ ६ ॥
ते तु सर्वे सुविक्रान्ता दैतेया बलशालिनः ।
नानाप्रहरणास्तत्र प्रहृष्टा युद्धदुर्मदाः ॥ ७ ॥
शूलैस्त्रिशूलैः कुलिशैः पट्टिशासिपरश्वधैः ।
अन्योऽन्यं बिभिदुः क्रुद्धा राक्षसा दानवास्तथा ॥ ८ ॥
तेषां तु युध्यमानानां साग्रः संवत्सरो गतः ।
न चान्यतरतस्तत्र विजयो वा क्षयोऽपि वा ॥ ९ ॥
ततः पितामहस्तत्र त्रैलोक्यगतिरव्ययः ।
आजगाम द्रुतं देवो विमानवरमास्थितः ॥ १० ॥
निवातकवचानां तु निवार्य्य रणकर्म तत् ।
वृद्धः पितामहो वाक्यमुवाच विदितार्थवत् ॥ ११ ॥
न ह्ययं रावणो युद्धे शक्यो जेतुं सुरासुरैः ।
न भवन्तः क्षयं नेतुमपि सामरदानवैः ॥ १२ ॥

भोगवती समुद्रादधःपातालक्षोकवर्त्तिनी नागानां पुरी । तस्यां नागान् वशे कृत्वा स्वीयत्वेन स्थापयित्वा ॥ ५ ॥

वसन्नित्यड्भाव आर्षः । लब्धवराः । ब्रह्मणः सकाशादिति भावः । अतएवाग्रे भगवता तैः सह रावणस्य सख्यकारणम् ॥ ६ ॥
॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

वृद्धः अनादिवृद्धः । सर्वदेवासुरकूटस्थ इत्यर्थः । विदितार्थवत् सुस्पष्टबगताभिधेयम् ॥ ११ ॥ १२ ॥

राक्षसस्य सखित्वञ्च भवद्भिः सह रोचत।
अविभक्ताश्च सर्व्वार्थाः सुहृदां नात्र संशयः॥ १३॥
ततोऽग्निसाक्षिकं सख्यं कृतवांस्तत्र रावणः।
निवातकवचैः सार्द्धं प्रीतिमानभवत्तदा॥ १४॥
अर्च्चितस्तैर्यथान्यायं संवत्सरमथोषितः।
स्वपुरान्निर्विशेषञ्च प्रियं प्राप्तो दशाननः॥ १५॥
तत्रोपधार्य्य मायानां शतमेकं समाप्तवान्।
सलिलेन्द्रपुरान्वेषी भ्रमति स्म रसातलम्॥ १६॥
ततोऽश्मनगरं नाम कालकेयैरधिष्ठितम्।
गत्वा तु कालकेयांश्च हत्वा तत्र बलोत्कटान्॥ १७॥
शूर्पणख्याश्च भर्त्तारमसिना प्राच्छिनत्तदा।
श्यालञ्च बलवन्तञ्च विद्युज्जिह्वं बलोत्कटम्॥ १८॥

रोचते कर्त्तव्यत्वेन ममेति शेषः। सख्यफलमाह। अविभक्ता-श्चेति। सर्व्वार्थाः धनधान्यादिसमस्तभोगोपकरणपदार्था जयाजयाद्य-भिमानाश्च सुहृदामविभक्ताः साधारणभूताः॥ १३॥

ततो भगवद्वचनानन्तरम्॥ १४॥ १५॥

उपधार्य्य सखित्वेनानुसृत्य। समाप्तवान् प्राप्तवान्॥ १६॥ १७॥

श्यालत्वादिगुणकमपि विद्युज्जिह्वमच्छिनत्। श्यालोऽत्र भगिनी-पतिः॥ १८॥

जिह्वया संलिहन्तश्च राक्षसं समरे तदा ।
तं विजित्य मुहूर्त्तेन जघ्ने दैत्यांश्चतुःशतम् ॥ १९ ॥
ततः पाण्डुरमेघाभं कैलासमिव भास्वरम् ।
वरुणस्यालयं दिव्यमपश्यद्राक्षसाधिपः ॥ २० ॥
क्षरन्तीञ्च पयस्तत्र सुरभिं गामवस्थिताम् ।
यस्याः पयोविनिष्यन्दात् क्षीरोदो नाम सागरः ॥ २१ ॥
ददर्श रावणस्तत्र गोवृषेन्द्रवरारणिम् ।
यस्माच्चन्द्रः प्रभवति शीतरश्मिर्निशाकरः ॥ २२ ॥
यं समाश्रित्य जीवन्ति फेनपाः परमर्षयः ।
अमृतं यत्र चोत्पन्नं स्वधा च स्वधभोजिनाम् ॥ २३ ॥
यां ब्रुवन्ति नरा लोके सुरभिं नाम नामतः ।
प्रदक्षिणं तु तां कृत्वा रावणः परमाद्भुताम् ।
प्रविवेश महाघोरं गुप्तं बहुविधैर्बलैः ॥ २४ ॥

अश्मसंस्थानप्रावर्णीयान् राक्षसान् जिह्वया संलिहन्तमास्वादयन्तं भक्षयन्तमिति यावत् । १९ । २० ।

तत्र वरुणालये स्थितां सुरभिं गां चापश्यदित्यनुषङ्गः । सागर इति समभवदिति शेषः । २१ ।

गोवृषेन्द्रो महावृषभस्तस्य वरारणिं साक्षाज्जनकम् । यस्माच्चन्द्र इति । चन्द्रमादिक्षीरसमुद्रादित्यर्थः । २२ ।

ततो धाराशताकीर्णं शारदाभ्रनिभं तदा ।
नित्यप्रहृष्टं ददृशे वरुणस्य गृहोत्तमम् ॥ २५ ॥
ततो हत्वा बलाध्यक्षान् समरे तैश्च ताडितः ।
अब्रवीच्च ततो योधान् राजा शीघ्रं निवेद्यताम् ॥ २६ ॥
युद्धार्थी रावणः प्राप्तस्तस्य युद्धं प्रदीयताम् ।
वद वा न भयं तेऽस्ति निर्जितोऽस्मीति साञ्जलिः ॥ २७ ॥
एतस्मिन्नन्तरे क्रुद्धा वरुणस्य महात्मनः ।
पुत्राः पौत्राश्च निष्क्रामन् गौश्च पुष्करएव च ॥ २८ ॥
ते तु तत्र गुणोपेता बलैः परिवृताः स्वकैः ।
युक्त्वा रथान् कामगमानुद्यद्भास्करवर्चसः ॥ २९ ॥
ततो युद्धं समभवद् दारुणं रोमहर्षणम् ।

यं क्षीरसमुद्रम् । स्वधभोजिनानित्यार्षो क्रमः । स्वधाभोजिनां पितॄणां स्वधा पित्र्यभक्ष्यं यथा देवानाममृतवत् ॥ २३ । २४ ॥

धाराशतैर्जलधाराशतैराकीर्णं व्याप्तम् । प्रहृष्टं प्रहृष्टजनम् ॥ २५ ॥

तैर्वरुणबलाध्यक्षैस्ताडितश्च समरे हत्वाऽभिताड्य ॥ २६ ॥

युद्धं वा दीयतां साञ्जलिर्निर्जितोऽस्मीति वा वद । एवं चेत्तु ते भयं नास्तीति रावणोऽब्रवीत् । इति वो राजा निवेद्यतामित्यन्वयः ॥ २७ ॥

गौश्च पुष्करश्च पुत्रौ पौत्रौ बलाध्यक्षौ ॥ २८ । २९ ॥

सलिलेन्द्रस्य पुत्राणां रावणस्य च धीमतः ॥ ३० ॥
अमात्यैश्च महावीर्य्यैर्दशग्रीवस्य रक्षसः।
वारुणं तद्बलं सर्वं क्षणेन विनिपातितम् ॥ ३१ ॥
समीक्ष्य स्वबलं संख्ये वरुणस्य सुतास्तदा।
अर्दिताः शरजालेन निवृत्ता रणकर्मणः ॥ ३२ ॥
महीतलगतास्ते तु रावणं दृश्य पुष्पके।
आकाशमाशु विविशुः स्यन्दनैः शीघ्रगामिभिः ॥ ३३ ॥
महदासीत्ततस्तेषां तुल्यं स्थानमवाप्य तत्।
आकाशयुद्धं तुमुलं देवदानवयोरिव ॥ ३४ ॥
ततस्ते रावणं युद्धे शरैः पावकसन्निभैः।
विमुखीकृत्य संहृष्टा विनेदुर्विविधान् रवान् ॥ ३५ ॥
ततो महोदरः क्रुद्धो राजानं वीक्ष्य धर्षितम्।
त्यक्त्वा मृत्युभयं क्रुद्धो युद्धकांक्षी व्यलोकयत् ॥ ३६ ॥

वरुणपुत्राणां रावणस्य च रोमहर्षणं युद्धं समभवदित्यन्वयः ॥ ३० ॥

रावणामात्यैश्च वारुणं बलं सर्वं पातितम् ॥ ३१ ॥

वरुणस्य सुताः प्रथमं महीतलगता एव रावणेन युद्धमकुर्वन्। तत्र रावणामात्यैराकाशस्थैर्निपातितं स्वबलं दृष्ट्वा तादृशयुद्धस्यानुरूपतां विचार्य युद्धार्थिनस्ता महीं त्यक्त्वा स्वयमप्याकाशमेव गता इत्यर्थः। ॥ ३२ ॥ ३३ ॥

तेन ते वारुणा युद्धे कामगाः पवनोपमाः ।
महोदरेण गदया हतास्ते प्रययुः क्षितिम् ॥ ३७ ॥
तेषां वरुणसूनूनां हत्वा योधान् हयांश्च तान् ।
मुमोचाशु महानादं विरथान् प्रेक्ष्य तान् स्थितान् ॥ ३८ ॥
ते तु तेषां रथाः साश्वाः सह सारथिभिर्वरैः ।
महोदरेण निहताः पतिताः पृथिवीतले ॥ ३९ ॥
ते तु त्यक्त्वा रथान् पुत्रा वरुणस्य महात्मनः ।
आकाशे विष्ठिताः शूराः स्वप्रभावान्न विव्यथुः ॥ ४० ॥
धनूंषि कृत्वा सज्जानि विनिर्भिद्य महोदरम् ।
रावणं समरे क्रुद्धाः सहिताः समवारयन् ॥ ४१ ॥
सायकैश्चापविभ्रष्टैर्वज्रकल्पैः सुदारुणैः ।
दारयन्ति स्म संक्रुद्धा मेघा इव महागिरिम् ॥ ४२ ॥
ततः क्रुद्धो दशग्रीवः कालाग्निरिव मूर्च्छितः ।
शरवर्षं महाघोरं तेषां मर्मस्वपातयत् ॥ ४३ ॥
मुसलानि विचित्राणि ततो भल्लशतानि च ।
पट्टिशांश्चैव शक्तीश्च शतघ्नीर्महतीरपि ।
पातयामास दुर्धर्षस्तेषामुपरि विष्ठितः ॥ ४४ ॥

तुल्यं स्थानमाकाशलक्षणम् । आकाशे युद्धं आकाशियुद्धम् ॥ ३४ ॥
॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

ततस्तेनैव सहसा सीदन्ति स्म पदातिनः।
महापङ्कमिवासाद्य कुञ्जराः षष्टिहायनाः॥ ४५॥
सीदमानान् सुतान् दृष्ट्वा विह्वलान् च महाबलः।
ननाद रावणो दर्पान्महानम्बुधरो यथा॥ ४६॥
ततो रक्षो महानादान् मुक्त्वा हन्ति स्म वारुणान्।
नानाप्रहरणोपेतैर्धारापातैरिवाम्बुदः॥ ४७॥
ततस्ते विमुखाः सर्वे पतिता धरणीतले।
रणात् स्वपुरुषैः शीघ्रं गृहाण्येव प्रवेशिताः॥ ४८॥
तानब्रवीत्ततो रक्षो वरुणाय निवेद्यताम्।
रावणं त्वब्रवीन्मन्त्री प्रहासो नाम वारुणः॥ ४९॥
गतः खलु महाराजो ब्रह्मलोकं जलेश्वरः।
गान्धर्वं वरुणः श्रोतुं यं त्वमाह्वयसे युधि॥ ५०॥
तत् किं तव यथा वीर! परिश्रम्य गते नृपे।
ये तु सन्निहिता वीराः कुमारास्ते पराजिताः॥ ५१॥

आकाशे विष्ठिताः स्वजदेवतास्वप्रयुक्तवैभवेनाकाशस्व स्थिता न विस्मयस्य व्यथिताश्च नाभवन्॥ ४०॥ ४१॥ ४२॥ ४३॥ ४४॥
तेनैव रावणप्रयुक्तशरवर्षेण। षष्टिहायनाः षष्टिवर्षाः॥ ४५॥
सुतान् वरुणस्येति॥ ४६॥
वारुणान् वरुणपुत्रान्॥ ४७॥ ४८॥
वारुणः वरुणस्यायम्॥ ४९॥ ५०॥

राघवेन्द्रस्तु तत् श्रुत्वा नाम विश्राव्य चात्मनः ।
वर्षाणार्द्रं विसृजन् वै निष्क्रान्तो वरुणालयात् ॥ ५२ ॥
आगतस्तु पथा येन तेनैव विनिवृत्य सः ।
लङ्कामभिमुखो रक्षो नभस्तलगतो ययौ ॥ ५३ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
त्रयोविंशः सर्गः ॥ २३ ॥

तत्तस्मात् हे वीर! नृपे तथा गते इह त्वत्पराक्रमस्य तव किं न किमपि । ५१ । ५२ । ५३ ।

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

---

# चतुर्विंशः सर्गः ।



ततोऽश्वनगरं भूयो विचेरुर्हृष्टमुद्गराः ।
यत्रापश्यद् दशग्रीवो गृहं परमभास्वरम् ॥ १ ॥
वैदूर्य्यतोरणाकीर्णं मुक्ताजालविभूषितम् ।
सुवर्णस्तम्भगहनं वेदिकाभिः समन्ततः ॥ २ ॥
वज्रस्फटिकसोपानं किङ्किणीजालसंवृतम् ।
बह्वासनयुतं रम्यं महेन्द्रभवनोपमम् ॥ ३ ॥
दृष्ट्वा गृहवरं रम्यं दशग्रीवः प्रतापवान् ।
कस्येदं भवनं रम्यं मेरुमन्दरसन्निभम् ॥ ४ ॥
गच्छ प्रहस्त ! शीघ्रं त्वं जानीष्व भवनोत्तमम् ।
एवमुक्तः प्रहस्तस्तु प्रविवेश गृहोत्तमम् ॥ ५ ॥
निःशून्यं प्रेक्षत वरं पुनः कक्ष्यन्तरे ययौ ।
सप्तकक्ष्यान्तरं गत्वा ततो ज्वालामपश्यत ॥ ६ ॥
ततो हृष्टः पुमांस्तत्र हृष्टो हासं मुमोच सः ।
श्रुत्वा स तु महाहासमूर्ध्वरोमाभवत्तदा ॥ ७ ॥
ज्वालामध्ये स्थितस्तत्र हेममाली विमोहितः ।
आदित्य इव दुष्प्रेक्ष्यः साक्षादिव यमः स्थितः ॥ ८ ॥

तथा दृष्ट्वा तु वृत्तान्तं त्वरमाणो विनिर्गतः।
विनिर्गत्याब्रवीत् सर्वं रावणाय निशाचरः॥ ९॥
अथ राम! दशग्रीवः पुष्पकादवरुह्य सः।
प्रवेष्टुमिच्छन् वेश्माथ भिन्नांजनचयोपमः॥ १०॥
चन्द्रमौलिर्वपुष्मांश्च पुरुषोऽग्रायतः स्थितः।
द्वारमावृत्त्य सहसा ज्वालाजिह्वो भयानकः॥ ११॥
रक्ताक्षश्चारुदशनो बिम्बोष्ठश्चारुदर्शनः।
महाभीषणनासश्च कम्बुग्रीवो महाहनुः॥ १२॥
रूढश्मश्रुर्निगूढास्थिर्दंष्ट्रालो लोमहर्षणः।
गृहीत्वा लोहमुसलं द्वारं विष्टभ्य तिष्ठति॥ १३॥
अथ संदर्शनात्तस्य ऊर्द्ध्वरोमा बभूव सः।
हृदयं कम्पते चास्य वेपथुश्चाप्यजायत॥ १४॥
निमित्तान्यमनोज्ञानि दृष्ट्वा राम! व्यचिन्तयत्।
अथ चिन्तयतस्तस्य सएव पुरुषोऽब्रवीत्॥ १५॥
किं त्वं चिन्तयसे रक्षो ब्रूहि विस्रब्धमानसः।
युद्धातिथ्यमहं वीर! करिष्ये रजनीचर!॥ १६॥
एवमुक्त्वा स तद्रूपः पुनर्वचनमब्रवीत्।
योत्स्यसे बलिना सार्द्धमथवा मन्यसे कथम्॥ १७॥
रावणोऽभिहतो भूय ऊर्द्ध्वरोमा व्यजायत।
अथ धैर्य्यं समालम्ब्य रावणो वाक्यमब्रवीत्॥ १८॥

गृहेषु तिष्ठते को हि तद्ब्रूहि वदतां वर!।
येनैव सार्द्धं योत्स्यामि यथा वा मन्यते भवान् ॥ १९ ॥
स शूरं पुनरप्याह दानवेन्द्रोऽत्र तिष्ठति।
एष वै परमोदारः शूरः सत्यपराक्रमः ॥ २० ॥
वीरो बहुगुणोपेतः पाशहस्त इवान्तकः।
स बालार्क इव तेजस्वी समरेष्वनिवर्त्तकः ॥ २१ ॥
अमर्षी दुर्जयो जेता बलवान् गुणसागरः।
प्रियम्वदः संविभागी गुरुविप्रप्रियः सदा ॥ २२ ॥
कालाकाङ्क्षी महासत्वः सत्यवाक् सौम्यदर्शनः।
दक्षः सर्वगुणोपेतः शूरः स्वाध्यायतत्परः ॥ २३ ॥
एष गच्छति वात्येष ज्वलते तपते तथा।
देवैश्च भूतसंघैश्च पन्नगैश्च पतत्त्रिभिः ॥ २४ ॥
भयं यो नाभिजानाति तेन त्वं योद्धुमिच्छसि।
बलिना यदि ते योद्धुं रोचते राक्षसेश्वर! ॥ २५ ॥
प्रविश त्वं महासत्व! संग्रामं कुरु माचिरम्।
एवमुक्तो दशग्रीवः प्रविवेश यतो बलिः ॥ २६ ॥
स विलोक्याथ लङ्केशं जहास दहनोपमः।
आदित्य इव दुष्प्रेक्ष्यः स्थितो दानवसत्तमः ॥ २७ ॥
अथ सन्दर्शनादेव बलिव विश्वरूपवान्।
स गृहीत्वा च तद्रक्ष उत्सङ्गे स्थाप्य चाब्रवीत् ॥ २८ ॥

दशग्रीव ! महाबाहो ! कं ते कामं करोम्यहम् ।
किमागमनकृत्यन्ते ब्रूहि त्वं राक्षसेश्वर ! ॥ २९ ॥
एवमुक्तस्तु बलिना रावणो वाक्यमब्रवीत् ।
श्रुतं मया महाभाग ! बद्धस्त्वं विष्णुना पुरा ॥ ३० ॥
सोऽहं मोचयितुं शक्तो बन्धनात्त्वां न संशयः ।
एवमुक्ते ततो हासं बलिर्मुक्त्वेनमब्रवीत् ॥ ३१ ॥
श्रूयतामभिधास्यामि यत्त्वं पृच्छसि रावण ! ।
य एष पुरुषः श्यामो द्वारे तिष्ठति नित्यदा ॥ ३२ ॥
एतेन दानवेन्द्राश्च तथान्ये बलवत्तराः ।
वशं नीता बलवता पूर्वं पर्वतराश्च ये ॥ ३३ ॥
बद्धः सोऽहमनेनैवं कृतान्तो दुरतिक्रमः ।
क एनं पुरुषो लोके वञ्चयिष्यति मानवः ॥ ३४ ॥
सर्वभूतापहर्ता वै य एष द्वारि तिष्ठति ।
कर्ता कारयिता चैव धाता च भुवनेश्वरः ॥ ३५ ॥
न त्वं वेद न चैवाहं भूतभव्यभवत्प्रभुः ।
कलिश्चैव कालश्च सर्वभूतापहारकः ॥ ३६ ॥
लोकत्रयस्य सर्वस्य हर्ता स्रष्टा तथैव च ।
संहरत्येष भूतानि स्थावराणि चराणि च ॥ ३७ ॥
पुनश्च सृजते सर्वमनाद्यन्तो महेश्वरः ।
इष्टश्चैव हि दत्तश्च हुतश्चैव निशाचर ! ॥ ३८ ॥

सर्वमेव हि लोकेभ्यो धाता गोप्ता न संशयः ।
नैवंविधं महद्भूतं विद्यते भुवनत्रये ॥ ३९ ॥
अहं त्वञ्चैव पौलस्त्य ! ये चान्ये पूर्वजास्तराः ।
नैतान्येषां महद्भूतं पश्य रत्नमया यथा ॥ ४० ॥
वृत्रो दनुः शुक्रः शम्भुर्निशुम्भः शुम्भएव च ।
कालनेमिश्च प्राह्लादिः कूटो वैरोचनो मृदुः ॥ ४१ ॥
यमलार्जुनौ च कंसश्च कैटभो मधुना सह ।
एते तपन्ति द्योतन्ति वान्ति वर्षन्ति चैव हि ॥ ४२ ॥
सर्वः क्रतुशतैरिष्टं सर्वैस्तप्तं महत्तपः ।
सर्व ते सुमहात्मानः सर्वे वै योगधर्मिणः ॥ ४३ ॥
सर्वैरैश्वर्य्यमासाद्य भुक्तं भोगैर्महत्तरैः ।
दत्तमिष्टमधीतञ्च प्रजाश्च परिपालिताः ॥ ४४ ॥
स्वपक्षेष्वनुगोप्तारः प्रहर्त्तारः परेष्वपि ।
नामरेष्वपि लोकेषु नैतेषां विद्यते समम् ॥ ४५ ॥
शूरास्त्वभिजनोपेताः सर्वशास्त्रार्थपारगाः ।
सर्वविद्याप्रवेत्तारः संग्रामेष्वनिवर्त्तकाः ॥ ४६ ॥
सर्वैस्त्रिदशराज्यानि कारितानि महात्मभिः ।
युद्धे सुरगणाः सर्वे निर्जिताश्च सहस्रशः ॥ ४७ ॥
देवानामप्रिये सक्ताः स्वपक्षपरिपालकाः ।
प्रमत्ताश्चोपसक्ताश्च बालार्कसमतेजसः ॥ ४८ ॥

यस्तु देवान् प्रधर्षेत तदेषां विष्णुरीश्वरः।
उपायपूर्वकं नाशं स वेत्ता भगवान् हरिः॥ ४९॥
प्रादुर्भावं विकुरुते येनैतन्निधनं नयेत्।
पुनरेवात्मनात्मानमधिष्ठाय स तिष्ठति॥ ५०॥
एवमेतेन देवेन दानवेन्द्रा महात्मना।
ते हि सर्वे क्षयं नीता बलिनः कामरूपिणः॥ ५१॥
समरे च दुराधर्षाः श्रूयन्ते येऽपराजिताः।
तेऽपि नीता महद्भूताः कृतान्तबलचोदिताः॥ ५२॥
एवमुक्त्वाथ प्रोवाच राक्षसं दानवेश्वरः।
यदेतद्दृश्यते वीर ! चक्रं दीप्तानलोपमम्॥ ५३॥
एतद् गृहीत्वा गच्छ त्वं मम पार्श्वं महाबल !।
ततोऽहं तव व्याख्यास्ये मुक्तिकारणमव्ययम्॥ ५४॥
तत् कुरुष्व महाबाहो ! माविलम्बस्व रावण !।
एतत् श्रुत्वा गतो रक्षः प्रहसंश्च महाबलः॥ ५५॥
यत्र स्थितं महादिव्यं कुण्डलं रघुनन्दन !।
लीलयोत्पाटनं चक्रे रावणो बलदर्पितः॥ ५६॥
न च चालयितुं शक्तो रावणोऽभूत् कथञ्चन।
लज्जया स पुनर्भूयो यत्नं चक्रे महाबलः॥ ५७॥
उत्क्षिप्तमात्रे दिव्ये च पपात भुवि राक्षसः।
छिन्नमूलो यथा शालो रुधिरौघपरिप्लुतः॥ ५८॥

एतस्मिन्नन्तरे जज्ञे शब्दः पुष्पकसम्भवः।
राक्षसेन्द्रस्य सचिवैर्मुक्तो हाहाकृतो महान् ॥ ५९ ॥
ततो रक्षो मुहूर्त्तेन चेतनां लभ्य चोत्थितम्।
लज्जयावनतोभूतं बलिर्वाक्यमुवाच ह ॥ ६० ॥
आगच्छ राक्षसश्रेष्ठ ! वाक्यं शृणु मयोदितम्।
यत्त्वया चोद्यतं वीर ! कुण्डलं मणिभूषितम् ॥ ५१ ॥
एतद्धि पूर्वजस्यासीत् कर्णाभरणमोच्यताम्।
एतत्पतितवच्चैवमत्र भूमौ महाबल ! ॥ ६२ ॥
अन्यत् पर्वतसानौ हि पतितं कुण्डलादनु।
मुकुटं वेदिसामीप्ये पतितं युध्यतो भुवि ॥ ६३ ॥
हिरण्यकशिपोः पूर्वं मम पूर्वपितामहात्।
न तस्य कालो मृत्युर्वा न व्याधिर्न विहिंसकाः ॥ ६४ ॥
न दिवामरणं तस्य न रात्रौ सन्ध्ययोर्न हि।
न शुष्केण न चार्द्रेण न च शस्त्रेण केनचित् ॥ ६५ ॥
विद्यते राक्षसश्रेष्ठ ! तस्य नास्त्रेण कर्मचित्।
प्रह्लादेन समं चक्रे वादं परमदारुणम् ॥ ६६ ॥
तस्य वादे समुत्पन्ने धीरो लोकभयङ्करः।
सर्वत्र्यस्य वीरस्य प्रह्लादस्य महात्मनः ॥ ६७ ॥
उत्पन्नो राक्षसश्रेष्ठ ! नृसिंहाकृतिरूपधृक्।
दृष्टश्च तेन रौद्रेण शुभ्रं सर्वमशेषतः ॥ ६८ ॥

तत उद्धृत्य बाहुभ्यां नखैर्निन्ये यमक्षयम्।
एष तिष्ठति द्वारस्थो वासुदेवो निरञ्जनः॥ ६८॥
तस्य देवाधिदेवस्य गदतो मे शृणुष्व ह।
वाक्यं परमभावेन यदि ते वर्त्तते हृदि॥ ७०॥
इन्द्राणाञ्च सहस्राणि सुराणामयुतानि च।
ऋषीणाञ्चैव मुख्यानां शतान्यब्दसहस्रशः॥ ७१॥
वशं नीतानि सर्वाणि य एष द्वारि तिष्ठति।
तस्य तद्वचनं श्रुत्वा रावणो वाक्यमब्रवीत्॥ ७२॥
मया प्रेतेश्वरो दृष्टः कृतान्तः सह मृत्युना।
पाशहस्तो महाज्वाल ऊर्ध्वरोमा भयानकः॥ ७३॥
दंष्ट्रालो विद्युज्जिह्वश्च सर्पवृश्चिकरोमवान्।
रक्ताक्षो भीमवेगश्च सर्वसत्त्वभयङ्करः॥ ७४॥
आदित्यइव दुष्प्रेक्ष्यः समरेष्वनिवर्तकः।
पापानां शासिता चैव स मया युधि निर्जितः॥ ७५॥
न च मे तत्र भीः काचिद्व्यथा वा दानवेश्वर!।
एनन्तु नाभिजानामि तद्भवान् वक्तुमर्हसि॥ ७६॥
रावणस्य वचः श्रुत्वा बलिर्वैरोचनोऽब्रवीत्।
एष त्रैलोक्यधाता च हरिर्नारायणः प्रभुः॥ ७७॥
अनन्तः कपिलो जिष्णुर्नरसिंहो महाद्युतिः।
क्रतुधामा सुधामा च पाशहस्तो भयानकः॥ ७८॥

द्वादशादित्यसदृशः पुराणपुरुषोत्तमः।
नीलजीमूतसंकाशः सुरनाथः सुरोत्तमः॥ ७९ ॥
ज्वालामाली महाबाहो! योगी भक्तजनप्रियः।
एष धारयते लोकानेष वै सृजते प्रभुः॥ ८० ॥
एष संहरते चैव कालो भूत्वा महाबलः।
एष यज्ञश्च याज्यश्च चक्रायुधधरो हरिः॥ ८१ ॥
सर्वदेवमयश्चैव सर्वभूतमयस्तथा।
सर्वलोकमयश्चैव सर्वज्ञानमयस्तथा॥ ८२ ॥
सर्वरूपी महारूपी बलदेवो महाभुजः।
वीरहा वीरचक्षुष्मांस्त्रैलोक्यगुरुरव्ययः॥ ८३ ॥
एनं मुनिगणाः सर्वे चिन्तयन्तीह मोक्षिणः।
य एनं वेत्ति पुरुषं न च पापैर्विलिप्यते॥ ८४ ॥
स्मृत्वा स्तुत्वा तथेष्ट्वा च सर्वमस्मादवाप्यते।
एतत् श्रुत्वा तु वचनं रावणो निर्ययौ तदा॥ ८५ ॥
क्रोधसंरक्तनयन उद्यतास्त्रो महाबलः।
तथाभूतश्च तं दृष्ट्वा हरिर्मुसलधृक् प्रभुः॥ ८६ ॥
नैनं हन्म्यधुना पापं चिन्तयित्वेति रूपधृक्।
अन्तर्धानं गतो राम! ब्रह्मणः प्रियकाम्यया॥ ८७ ॥
न च तं पुरुषं तत्र पश्यते रजनीचरः।
हर्षान्नादं विमुञ्चन् वै निष्क्रामत् वरुणालयात्॥ ८८ ॥

येनैव संप्रविष्टः स पश्चात् तेनैव निर्ययौ ॥ ५८ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
चतुर्विंशः सर्गः ॥ २४ ॥




---

# पञ्चविंशः सर्गः ।



अथ सञ्चिन्त्य लङ्केशः सूर्य्यलोकं जगाम ह ।
मेरुशृङ्गे वरे रम्ये उषित्वा तत्र शर्वरीम् ॥ १ ॥
पुष्पकं तत् समारुह्य रवेस्तुरगसन्निभम् ।
नानापातगतिर्दिव्यं विहारवियति स्थितम् ॥ २ ॥
यत्रापश्यद्रविं देवं सर्वतेजोमयं शुभम् ।
वरकाञ्चनकेयूररत्नांबरविभूषितम् ॥ ३ ॥
कुण्डलाभ्यां शुभाभ्यां तु भ्राजन् मुखविकाषितम् ।
केयूरनिष्काभरणं रक्तमालावलम्बिनम् ॥ ४ ॥
रक्तचन्दनदिग्धाङ्गं सहस्रकिरणोज्ज्वलम् ।
तमादिदेवमादित्यमुच्चैःश्रवसवाहनम् ॥ ५ ॥
अनाद्यन्तममध्यञ्च लोकसाक्षिं जगत्पतिम् ।
तं दृष्ट्वा प्रवरं देवं रावणो रक्षसां वरः ॥ ६ ॥
स प्रहस्तमुवाचाथ रवितेजोबलार्दितः ।
गच्छामात्य ! वदस्वैनं निदेशान्मम शासनम् ॥ ७ ॥
युद्धार्थं रावणः प्राप्तो युद्धं तस्य प्रदीयताम् ।
निर्जितोऽस्मीति वा ब्रूहि पक्षमेकतरं कुरु ॥ ८ ॥

तस्य तद्वचनाद्दूतः सूर्य्यस्यान्तिकमागमत् ।
पिङ्गलं दण्डिनञ्चैव पश्यते द्वारपालकौ ॥ ९ ॥
ताभ्यामाख्याय तत् सर्वं रावणस्य विनिश्चयम् ।
तूष्णीमास्ते प्रहस्तस्तु तत्र तेजोऽंशुदीपितः ॥ १० ॥
दण्डी गतो रवेः पार्श्वं प्रणम्याख्यातवान् रवेः ।
श्रुत्वा तु सूर्य्यस्तद्वृत्तं दण्डिनो रावणस्य च ॥ ११ ॥
उवाच वचनं धीमान् बुद्धिपूर्वं क्षपापहः ।
गच्छ दण्डिन् ! जयस्वैनं निर्जितोऽस्मीति वा वद ॥ १२ ॥
यत्तेऽभिकाङ्क्षितं कार्य्यं कश्चित् कालं क्षपाचरम् ।
स गत्वा वचनात्तस्य राघवस्य महात्मनः ॥ १३ ॥
कथयामास तत् सर्वं सूर्य्योक्तवचनं तदा ।
स श्रुत्वा वचनं तस्य दण्डिनो राक्षसेश्वरः ।
घोषयित्वा जगामाथ स्वजयं राक्षसाधिपः ॥ १४ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
पञ्चविंशः सर्गः ॥ २५ ॥

---

# एकोनत्रिंशः सर्गः।



ततस्तमसि संजाते सर्वे ते देवराक्षसाः।
अयुध्यन्त बलोन्मत्ताः सूदयन्तः परस्परम् ॥ १ ॥
इन्द्रश्च रावणश्चैव रावणिश्च महाबलः।
तस्मिंस्तमोजालवृते मोहमीयुर्न ते त्रयः ॥ २ ॥
स तु दृष्ट्वा बलं सर्वं रावणो निहतं क्षणात्।
क्रोधमभ्यगमत्तीव्रं महानादश्च मुक्तवान् ॥ ३ ॥
क्रोधात् सूतञ्च दुर्धर्षः स्यन्दनस्थमुवाच ह।
परसैन्यस्य मध्येन यावदन्तो नयस्व माम् ॥ ४ ॥
अद्यैव त्रिदशान् सर्वान् विक्रमैः समरे स्वयम्।
नानाशस्त्रमहासारैर्नयामि यमसादनम् ॥ ५ ॥
अहमिन्द्रं वधिष्यामि धनदं वरुणं यमम्।
त्रिदशान् विनिहत्याशु स्वयं स्थास्याम्यथोपरि ॥ ६ ॥

देवाश्च राक्षसाश्च देवराक्षसाः ॥ १ ॥ २ ॥ ३ ॥
परसैन्यस्यान्तो यावत् तावन्मां मध्येन परसेनामध्यमार्गेण नयस्व ॥
॥ ४ ॥ ५ ॥
अथोपरि। सर्वेषामुपरिष्टादित्यर्थः ॥ ६ ॥

विषादो नैव कर्तव्यः शीघ्रं वाहय मे रथम् ।
द्विः खलु त्वां ब्रवीम्यद्य यावदन्तं नयस्व माम् ॥ ७ ॥
अयं स नन्दनोद्देशो यत्र वर्त्तामहे वयम् ।
नय मामद्य तत्र त्वमुदयो यत्र पर्वतः ॥ ८ ॥
तस्य तद्वचनं श्रुत्वा तुरगान् स मनोजवान् ।
आदिदेशाथ शत्रूणां मध्येनैव च सारथिः ॥ ९ ॥
तस्य तं निश्चयं ज्ञात्वा शक्रो देवेश्वरस्तदा ।
रथस्थः समरस्थस्तान् देवान् वाक्यमथाब्रवीत् ॥ १० ॥
सुराः ! शृणुत मद्वाक्यं यत्तावन्मम रोचते ।
जीवन्नेव दशग्रीवः साधु रक्षो निगृह्यताम् ॥ ११ ॥
एष ह्यतिबलः सैन्ये रथेन पवनौजसा ।
गमिष्यति प्रवृद्धोर्मिः समुद्र इव पर्वणि ॥ १२ ॥
न ह्येष हन्तुं शक्योऽद्य वरदानात् सुनिर्भयः ।
तद् गृहीष्यामहे रक्षो यत्ता भवत संयुगे ॥१३॥

अथ देवसेनामध्यप्रवेशे कथं भविष्यतीति विषसं सारथिं पुनरप्याह । द्विः खल्विति । द्विर्द्विवारं ब्रवीमि । तत् कथं न नयसीति शेषः ॥ ७ ॥

अपरिमितदेवसेनाया अस्माद् दुर्जयत्वादाह । अयमिति । नन्दनमारभ्योदयपर्वतान्तं सेना तिष्ठतीति भावः ॥८।९।१०।११।१२।१३॥

यथा बलौ निरुद्धे च त्रैलोक्यं भुज्यते मया।
एवमेतस्य पापस्य निरोधो मम रोचते ॥ १४ ॥
ततोऽन्यं देशमास्थाय शक्रः सन्त्यज्य रावणम्।
अयुध्यत महाराज! राक्षसांस्त्रासयन् रणे ॥ १५ ॥
उत्तरेण दशग्रीवः प्रविवेशानिवर्तकः।
दक्षिणेन तु पार्श्वेन प्रविवेश शतक्रतुः ॥ १६ ॥
ततः स योजनशतं प्रविष्टो राक्षसाधिपः।
देवतानां बलं सर्वं शरवर्षैरवाकिरत् ॥ १७ ॥
ततः शक्रो निरीक्ष्याथ प्रनष्टं तु स्वकं बलम्।
न्यवर्त्तयदसंभ्रान्तः समावृत्य दशाननम् ॥ १८ ॥
एतस्मिन्नन्तरे नादो मुक्तो दानवराक्षसैः।
हा हताःस्म इति ग्रस्तं दृष्ट्वा शक्रेण रावणम् ॥ १९ ॥

यथा बलौ बलिदैत्ये निरुद्धे कृतनिरोधे सति मया त्रैलोक्यं भुज्यते। एवमस्य पापस्य निरोधस्त्रैलोक्यरक्षार्थं मम कर्त्तव्यत्वेन रोचते इत्यब्रवीदिति पूर्वेण सम्बन्धः ॥ १४ ॥

ततोऽन्यं देशं रावणावस्थितदेशादन्यं देशम्। रावणं संत्यज्येति। वज्रपातादिना प्रहर्त्तुमशक्यत्वात् पुरःस्थितिर्निष्प्रयोजनेत्याशयेन तं त्यक्त्वा ॥ १५ ॥

उत्तरेण प्रविवेश। देवसेनामिति शेषः। अनिवर्त्तकः अनिवर्त्तितुम् ॥ १६ ॥ १७ ॥

ततो रथं समास्थाय रावणिः क्रोधमूर्च्छितः ।
तत्सैन्यमतिसंक्रुद्धः प्रविवेश सुदारुणम् ॥ २० ॥
तां प्रविश्य महामायां प्राप्तां पशुपतेः पुरा ।
प्रविवेश सुसंरब्धस्तत्सैन्यं समभिद्रवत् ॥ २१ ॥
स सर्वा देवतास्त्यक्त्वा शक्रमेवाभ्यधावत ।
महेन्द्रश्च महातेजा नापश्यच्च सुतं रिपोः ॥ २२ ॥
विमुक्तकवचस्तत्र वध्यमानोऽपि रावणिः ।
त्रिदशैः सुमहावीर्य्यैर्न चकार च किञ्चन ॥ २३ ॥
स मातलिं समायान्तं ताड़यित्वा शरोत्तमैः ।
महेन्द्रं बाणवर्षेण भूय एवाभ्यवाकिरत् ॥ २४ ॥
ततस्त्यक्त्वा रथं शक्रो विससर्ज च सारथिम् ।
ऐरावतं समारुह्य मृगयामास रावणिम् ॥ २५ ॥
स तत्र मायाबलवानदृश्योऽथान्तरिक्षगः ।
इन्द्रं मायापरिक्षिप्तं कृत्वा स प्राद्रवच्छरैः ॥ २६ ॥

इत्यागमनं न्यवर्तयदित्यत्र हेतुरसंभ्रान्तः समाहत्येति ॥ १८ ॥ १९ ॥
तत्सैन्यं देवसैन्यम् ॥ २० ॥
पुराःस्थिता देवसेनाजयस्याशक्यत्वान्मायां श्रयते । तामिति ।
समभिद्रवत् । समभ्यद्रावयदित्यर्थः ॥ २१ ॥ २२ ॥
किञ्चन । किमपि भयमित्यर्थः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

स तं यदा परिश्रान्तमिन्द्रं जज्ञेऽथ रावणिः।
तदैनं मायया बध्वा स्वसैन्यमभितोनयत्॥ २७॥
तं तु दृष्ट्वा बलात्तेन नीयमानं महारणात्।
महेन्द्रममराः सर्वे किं नु स्यादित्यचिन्तयन्॥ २८॥
दृश्यते न स मायावी शक्रजित् समितिञ्जयः।
विद्यावानपि येनेन्द्रो माययाऽपहृतो बलात्॥ २९॥
एतस्मिन्नन्तरे क्रुद्धाः सर्वे सुरगणास्तदा।
रावणं विमुखीकृत्य शरवर्षैरवाकिरन्॥ ३०॥
रावणस्तु समासाद्य आदित्यांश्च वसूंस्तदा।
न शशाक स संग्रामे योद्धुं शत्रुभिरर्दितः॥ ३१॥
स तं दृष्ट्वा परिम्लानं प्रहारैर्जर्जरीकृतम्।
रावणिः पितरं युद्धे दर्शनस्थोऽब्रवीदिदम्॥ ३२॥
आगच्छ तात! गच्छामो रणकर्म निवर्त्तताम्।

स्वसैन्यमभितोनयत्। स्वसैन्यपार्श्वमनयदित्यर्थः॥ २७॥

महेन्द्रं तेन बलान्नीयमानं दृष्ट्वा विद्यावानपि असुरमायासंहारविद्यावानपि इन्द्रो येन रावणिना मायया नीयते स न दृश्यते एतत् किं न्विति चुक्रुशुः॥ २८॥ २९॥ ३०॥ ३१॥

युद्धे दर्शनस्थ इति। अदर्शनस्थ इति च्छेदः। अन्तर्हितएवाब्रवीदित्यर्थः। दर्शने महेन्द्रनाशमिच्छेति भावः॥ ३२॥

हे तात! आगच्छ गच्छामः। स्वपुरमिति शेषः। रणकर्म निवर्त्ततां

जितं नो विदितं तेऽस्तु स्वस्थो भव गतज्वरः ॥ २३ ॥
अयं हि सुरसैन्यस्य त्रैलोक्यस्य च यः प्रभुः।
स गृहीतो देवबलाद्भग्नदर्पाः सुराः कृताः ॥ २४ ॥
यथेष्टं भुङ्क्ष्व लोकांस्त्रीन्निगृह्यारातिमोजसा।
वृथा किन्ते श्रमेणेह युद्धमद्य तु निष्फलम् ॥ २५ ॥
ततस्ते दैवतगणा निवृत्ता रणकर्मणः।
तत् श्रुत्वा रावणेर्वाक्यं शक्रहीनाः सुरा गताः ॥ २६ ॥
अथ स रणविगतसुत्तमौजा
स्त्रिदशरिपुः प्रथितो निशाचरेन्द्रः।
स्वसुतवचनमादृतः प्रियं तत्
समनुनिशम्य जगाद चैव सूनुम् ॥ २७ ॥
अतिबलसदृशैः पराक्रमैस्त्वं
मम कुलवंशविवर्धनः प्रभो ||।
यदयमतुलबलस्त्वयाद्य वै
त्रिदशपतिस्त्रिदशाश्च निर्जिताः ॥ २८ ॥
नय रथमधिरोप्य वासवं
नगरमितो व्रज सेनयावृतस्त्वम्।

निवर्त्तमस्तु। समासमध्वित्यर्थः। कुतो निवर्त्तितव्यमाह। नोऽस्माकं जितं जयः संवृत्तः। भावे निष्ठा। स जयस्ते विदितोऽस्तु ॥ २३ ॥
कथं जयस्तमाह। अयं हीति। देवबलाद्देवसेनायाः ॥२४॥२५॥२६॥

अहमपि तव पृष्ठतो द्रुतं
सह सचिवैरनुयामि हृष्टवत् ॥ ३९ ॥
अथ स बलहृत: सवाहन-
स्त्रिदशपतिं परिगृह्य रावणि: ।
स्वभवनमधिगम्य वीर्य्यवान्
कृतसमरान् विससर्ज राक्षसान् ॥ ४० ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
एकोनत्रिंश: सर्ग: ॥ २९ ॥

रणविगत: विगतरण: ॥ ३७ ॥ ३८ ॥ ३९ ॥
राक्षसान् विससर्ज । स्वस्वभवनं प्रतीतिशेष: ॥ ४० ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे एकोनत्रिंश: सर्ग: ॥ २९ ॥

---

## त्रिंशः सर्गः ।



जिते महेन्द्रेऽतिबले रावणस्य सुतेन वै ।
प्रजापतिं पुरस्कृत्य ययुर्लङ्कां सुरास्तदा ॥ १ ॥
तत्र रावणमासाद्य पुत्रभ्रातृभिरावृतम् ।
अब्रवीद्गगने तिष्ठन् सामपूर्वं प्रजापतिः ॥ २ ॥
वत्स ! रावण ! तुष्टोऽस्मि पुत्रस्य तव संयुगे ।
अहोऽस्य विक्रमौदार्य्ये तव तुल्योऽधिकोऽपि वा ॥ ३ ॥
जितं हि भवता सर्वं त्रैलोक्यं स्वेन तेजसा ।
कृता प्रतिज्ञा सफला प्रीतोऽस्मि ससुतस्य ते ॥ ४ ॥
अयञ्च पुत्रोऽतिबलस्तव रावण ! वीर्य्यवान् ।
जगतीन्द्रजिदित्येव परिख्यातो भविष्यति ॥ ५ ॥
बलवान् दुर्जयश्चैव भविष्यत्येव राक्षसः ।
यं समाश्रित्य ते राजन् ! स्थापितास्त्रिदशा वशे ॥ ६ ॥

अथ ब्रह्मणेन्द्रमोचनमिन्द्रास्यासनम्च । जिते इति ॥ १ ॥ २ ॥
अहोऽस्येति सन्धिरार्षः । तव तुल्यः । एष इति शेषः ॥ ३ ॥
त्रीन् लोकान् जेष्यामीति या प्रतिज्ञा कृता सा सफला जाता
॥ ४ ॥ ॥ ५ ॥ ६ ॥

तन्मुच्यतां महाबाहो ! महेन्द्रः पाकशासनः ।
किञ्चास्य मोक्षणार्थाय प्रयच्छन्तु दिवौकसः ॥ ७ ॥
अथाब्रवीन्महातेजा इन्द्रजित् समितिञ्जयः ।
अमरत्वमहं देव ! वृणे यद्येष मुच्यते ॥ ८ ॥
ततोऽब्रवीन्महातेजा मेघनादं प्रजापतिः ।
नास्ति सर्वामरत्वं हि कस्यचित् प्राणिनो भुवि ॥ ९ ॥
पक्षिणश्चतुष्पदो वा भूतानां वा महौजसाम् ।
श्रुत्वा पितामहेनोक्तमिन्द्रजित् प्रभुणाव्ययम् ॥ १० ॥
अथाब्रवीत् स तत्रस्थं मेघनादो महाबलः ।
श्रूयतां वा भवेत् सिद्धिः शतक्रतुविमोक्षणे ॥ ११ ॥
ममेष्टं नित्यशो हव्यैर्मन्त्रैः संपूज्य पावकम् ।
संग्राममवतर्तुञ्च शत्रुनिर्जयकांक्षिणः ॥ १२ ॥

तन्मुच्यतां चिरश्रमानां वशे स्थापितत्वात् तावतश्चार्थस्य त्वत्सम्पाद्यत्वादिति भावः । अस्य मोक्षणार्थाय अन्यदप्यभीष्टं दिवौकसः किं प्रयच्छन्तु तद्वदेति शेषः ॥ ७ ॥ ८ ॥

सर्वामरत्वं सर्वतो निमित्तात् सर्वस्मिन्नपि काले मरणराहित्यं मत्-स्थप्राणिनां नास्ति ॥ ९ ॥

तान् प्राणिन आह । पक्षिण इति । महौजसो भूता हिमादाः ॥१०॥

श्रूयतां वेति । वा अथवा सर्वामरत्वासम्भव शतक्रतुविमोक्षणे तद्रूपाभिमिमित्ताया मे सिद्धिः कांक्षिता तां श्रूयताम् ॥ ११ ॥

अश्वयुक्तो रथो मह्यमुत्तिष्ठेत्तु विभावसो ।
ततस्स्यामरता स्यान्मे एष मे निश्चितो वरः ॥ १३ ॥
तस्मिन्यज्ञसमाप्ते च अप्यहोमे विभावसौ ।
युध्येयं देव ! संग्रामे तदा मे स्याद्विनाशनम् ॥ १४ ॥
सर्वो हि तपसा देव ! वृणोत्यमरतां पुमान् ।
विक्रमेण मया त्वेतदमरत्वं प्रवर्तितम् ॥ १५ ॥
एवमस्त्विति तञ्चाह वाक्यं देवः पितामहः ।
मुक्तश्चेन्द्रजिता शक्रो गताश्च त्रिदिवं सुराः ॥ १६ ॥
एतस्मिन्नन्तरे राम ! दीनो भ्रष्टामरद्युतिः ।
इन्द्रश्चिन्तापरीतात्मा ध्यानतत्परतां गतः ॥ १७ ॥

तदेवाह । ममेष्टमिति । तदा मे स्याद्विनाशनं नान्यदेत्येवं रूपं ममेष्टमित्यग्रिमेण सम्बन्धः । नित्यशो नियमेन मन्त्रैः तत्पूर्वकं हव्यैः पावकं संपूज्य शत्रुनिर्जयकांक्षिणः संग्राममवतर्तुं प्रवेष्टुं वाञ्छतो ममाश्वयुक्तो रथो विभावसोस्सकाशात् सकाशमुत्तिष्ठेत् । ततस्तस्य तत्रयो स्थितो ममामरता च स्यादेव । एष मे निश्चितो वरः ॥ १२ ॥ १३ ॥

तस्मिन् सांग्रामिकयागेऽपेक्षितं यज्ञमप्यहोमं । समाप्तदशः । तस्मिन्नसमाप्ते यदि युध्येयं युद्धं कुर्यां तदा मे विनाशनं स्यादिति ममेष्टमित्यन्वयः ॥ १४ ॥

लोकविलक्षणवरप्रार्थनायाश्चं मे वरलाभ इत्याह । सर्वो हीति ॥ १५ ॥ १६ ॥

भ्रष्टा अमराणां द्युतिर्यस्य सः ॥ १७ ॥

तन्तु दृष्ट्वा तथाभूतं प्राह देवः पितामहः।
शतक्रतो! किन्नु पुरा करोति स्म सुदुष्कृतम् ॥ १८ ॥
अमरेन्द्र! मया बुद्ध्या प्रजाः सृष्टास्तथा प्रभो!।
एकवर्णाः समाभाषा एकरूपाश्च सर्वशः ॥ १९ ॥
तासां नास्ति विशेषो हि दर्शने लक्षणेऽपि वा।
ततोऽहमेकाग्रमनास्ताः प्रजाः समचिन्तयम् ॥ २० ॥
सोऽहं तासां विशेषार्थं स्त्रियमेकां विनिर्ममे।
यद्यत् प्रजानां प्रत्यङ्गं विशिष्टं तत्तदुद्धृतम् ॥ २१ ॥
ततो मया रूपगुणैरहल्या स्त्री विनिर्मिता।
हलं नामेह वैरूप्यं हल्यं तत्प्रभवं भवेत् ॥ २२ ॥
यस्या न विद्यते हल्यं तेनाहल्येति विश्रुता।
अहल्येत्येव च मया तस्या नाम प्रकीर्तितम् ॥ २३ ॥

हे शतक्रतो! एवमिदानीं शोचसीति शेषः। तादृशो भवान् पुरा सुदुष्कृतं किमु करोति स्म कस्मात् कृतवानसि ॥ १८ ॥

ननु किं मया कृतं तत्राह। अमरेन्द्रेति। वर्णा देहकान्तिः। एकविधदेहकान्तयः। समाभाषाः समवचनाः। एकरूपाः समानवयोऽवस्थाः ॥ १९ ॥

दर्शने रूपलक्षणे वर्णादौ ॥ २० ॥

तासां विशेषार्थं किञ्चित् किञ्चिदङ्गवैलक्षण्यप्रयुक्तपरस्परवैलक्षण्यसिद्ध्यर्थम् ॥ २१ ॥

निर्मितायाश्च देवेन्द्र ! तस्यां नार्य्यां सुरर्षभ ! ।
भविष्यतीति कस्यैषा मम चिन्ता ततोऽभवत् ॥ २४ ॥
त्वं तु शक्र ! तदा नारीं जानीषे मनसा प्रभो ! ।
स्थानाधिकतया पत्नी ममैषेति पुरन्दर ! ॥ २५ ॥
सा मया न्यासभूता तु गौतमस्य महात्मनः ।
न्यस्ता बहूनि वर्षाणि तेन निर्यातिता च ह ॥ २६ ॥
ततस्तस्य परिज्ञाय महास्थैर्य्यं महामुनेः ।
ज्ञात्वा तपसि सिद्धिञ्च पत्न्यर्थं स्पर्शिता तदा ॥ २७ ॥
स तया सह धर्मात्मा रमते स्म महामुनिः ।
आसन्निराशा देवास्तु गौतमे दत्तया तया ॥ २८ ॥
त्वं क्रुद्धस्त्विह कामात्मा गत्वा तस्याश्रमं मुनेः ।
दृष्टवांश्च तदा तां स्त्रीं दीप्तामग्निशिखामिव ॥ २९ ॥
सा त्वया धर्षिता शक्र ! कामार्त्तेन समन्युना ।
दृष्टस्त्वं स तदा तेन आश्रमे परमर्षिणा ॥ ३० ॥

तत्प्रभवं वैरूप्यप्रभवम् । इत्थं मिन्द्रत्वम् ॥ २२ ॥ २३ ॥
कस्यैषा भविष्यति । भार्य्येति शेषः ॥ २४ ॥
स्थानाधिकतया देवाधिपतित्वरूपाधिकस्थानप्राप्त्या हेतुना । वि-
नापि मदनुमतिं ममैषा पत्नीति जानीषे ॥ २५ ॥
निर्यातिता पुनः प्रत्यर्पिता ॥ २६ ॥

ततः क्रुद्धेन तेनासि शप्तः परमतेजसा।
गतोऽसि येन देवेन्द्र ! दशाभागविपर्य्ययम् ॥ ३१ ॥
यस्मान्मे धर्षिता पत्नी त्वया वासव ! निर्भयात्।
तस्मात्त्वं समरे शक्र ! शत्रुहस्तं गमिष्यसि ॥ ३२ ॥
अयं तु भावो दुर्बुद्धे ! यस्त्वयेह प्रवर्तितः।
मानुषेष्वपि लोकेषु भविष्यति न संशयः ॥ ३३ ॥
तत्राधं तस्य यः कर्त्ता त्वय्यर्धं निपतिष्यति।
न च ते स्थावरं स्थानं भविष्यति न संशयः ॥ ३४ ॥
यश्च यश्च सुरेन्द्रः स्यात् ध्रुवः स न भविष्यति।
एष शापो मया मुक्त इत्यसौ त्वां तदाब्रवीत् ॥ ३५ ॥

स्थैर्यं जितेन्द्रियत्वं तपोविषयां सिद्धिञ्च ज्ञात्वा स्पर्धिता भार्य्या-त्वेन दत्ता ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

दशाभागोऽवस्थाभेदरैश्वर्य्यरूपस्तस्य विपर्य्ययं बन्धनरूपां विप-रीतावस्थाम् ॥ ३१ ॥ ३२ ॥

अयं तु भावः। जारभाव इत्यर्थः। मानुषेष्वपि शास्त्राधिकारि-ष्वपि भविष्यति। दारस्तव दोषादित्यर्थः ॥ ३३ ॥

तत्रार्धमिति। यो जारभावेन पापस्य कर्ता तत्र पुरुषे पापस्यार्धं निपतिष्यति। तत्त्वर्धम्। स्थावरं स्थिरम् ॥ ३४ ॥

न केवलं तवैवास्थिरत्वमपि तु यश्चेत्यादि। सोऽपि ध्रुवः स्थिरो न भविष्यति। मध्ये मध्ये भ्रंशादिति भावः ॥ ३५ ॥

तां तु भार्य्यां सुनिर्भर्त्स्य सोऽब्रवीत् सुमहातपाः ।
दुर्विनीते ! विनिध्वंस ममाश्रमसमीपतः ॥ ३६ ॥
रूपयौवनसम्पन्ना यस्मात्त्वमनवस्थिता ।
तस्माद्रूपवती लोके न त्वमेका भविष्यति ॥ ३७ ॥
रूपञ्च ते प्रजाः सर्वा गमिष्यन्ति न संशयः ।
यत्तदेकं समाश्रित्य विभ्रमोऽयमुपस्थितः ॥ ३८ ॥
तदा प्रभृति भूयिष्ठं प्रजा रूपसमन्विता ।
सा तं प्रसादयामास महर्षिं गौतमं तदा ॥ ३९ ॥
अज्ञानाद्धर्षिता विप्र ! त्वद्रूपेण दिवौकसा ।
न कामकाराद्विप्रर्षे ! प्रसादं कर्त्तुमर्हसि ॥ ४० ॥
अहल्ययात्वेवमुक्तः प्रत्युवाच स गौतमः ।
उत्पत्स्यति महातेजा इक्ष्वाकूणां महारथः ॥ ४१ ॥
रामो नाम श्रुतो लोके वनञ्चाप्युपयास्यति ।
ब्राह्मणार्थे महाबाहुर्विष्णुर्मानुषविग्रहः ॥ ४२ ॥

विनिध्वंस ध्वस्तसौन्दर्य्या भव ॥ ३६ ॥

यस्मात्त्वमनवस्थिता तस्मादेतावत्कालं त्वमेकैवरूपवतीति यत्स्थितं तन्न भविष्यति ॥ ३७ ॥

किन्तु तावकं सुन्दरं रूपं सर्वाः प्रजा गमिष्यति । यद्यस्मादेकमेकस्थं तद्रूपमाश्रित्यायं विभ्रमः कायविकारउपस्थितः, प्रवृत्तइत्यर्थः ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥

तं दृक्ष्यसि यदा भद्रे ! ततः पूता भविष्यसि।
स हि पावयितुं शक्यस्त्वया यद्दुष्कृतं कृतम् ॥ ४३ ॥
तस्यातिथ्यञ्च कृत्वा वै मत्समीपं गमिष्यसि।
वत्स्यसि त्वं मया सार्धं तदा हि वरवर्णिनि ! ॥ ४४ ॥
एवमुक्त्वा स विप्रर्षिराजगाम स्वमाश्रमम्।
तपश्चचार सुमहत् सा पत्नी ब्रह्मवादिनः ॥ ४५ ॥
शापोत्सर्गाद्धि तस्येदं मुनेः सर्वमुपस्थितम्।
तत् स्मर त्वं महाबाहो ! दुष्कृतं यत्त्वया कृतम् ॥ ४६ ॥
तेन त्वं ग्रहणं शत्रोर्यातो नान्येन वासव ! ।
शीघ्रं वै यज यज्ञं त्वं वैष्णवं सुसमाहितः ॥ ४७ ॥
पावितस्तेन यज्ञेन यास्यसे त्रिदिवं ततः।
पुत्रश्च तव देवेन्द्र ! न विनष्टो महारणे ॥ ४८ ॥
नीतः सन्निहितश्चैव आर्य्यकेण महोदधौ।
एतत् श्रुत्वा महेन्द्रस्तु यज्ञमिष्ट्वा च वैष्णवम् ॥ ४९ ॥
पुनस्त्रिदिवमाक्रामदन्वशासच्च देवराट्।
एतदिन्द्रजितो नाम बलं यत्कीर्तितं मया ॥ ५० ॥
निर्जितस्तेन देवेन्द्रः प्राणिनोऽन्ये तु किं पुनः।

माध्यमार्थैर्विश्वामित्राय । ४२ ॥ ४३ ॥ ४४ । ४५ ॥ ४६ ॥
नान्येन । नान्येन हेतुनेत्यर्थः ॥ ४७ ॥ ४८ ॥

आश्चर्य्यमिति रामश्च लक्ष्मणश्चाब्रवीत्तदा ॥ ५१ ॥
अगस्त्यवचनं श्रुत्वा वानरा राक्षसास्तदा ।
विभीषणस्तु रामस्य पार्श्वस्थो वाक्यमब्रवीत् ॥ ५२ ॥
आश्चर्य्यं स्मारितो ह्यद्य यत्तद् दृष्टं पुरातनम् ।
अगस्त्यं त्वब्रवीद्रामः सत्यमेतत् श्रुतञ्च मे ॥ ५३ ॥
एवं राम ! समुद्‌भूतो रावणो लोककण्टकः ।
सपुत्रो येन संग्रामे जितः शक्रः सुरेश्वरः ॥ ५४ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
त्रिंशः सर्गः ॥ २८ ॥

आर्य्यैरेव पुलोमा । यज्ञमिष्टेति । देवानां न यज्ञेष्वधिकार इति जैमिन्युक्तं तु प्रमादादिति निरूपितं प्राक् ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥

आश्चर्य्यं स्मारितोऽस्मीति । यदगस्त्येनोक्तं तत् सर्वं मया दृष्टमिति सत्यमेवागस्त्येनोक्तमिति रामं प्रति विभीषणेनोक्तम् । श्रुतञ्च मे विभीषणमुखादिति शेषः ॥ ५३ ॥ ५४ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे त्रिंशः सर्गः ॥ ३० ॥

---

## एकत्रिंशः सर्गः ।



ततो रामो महातेजा विस्मयात् पुनरेव हि ।
उवाच प्रणतो वाक्यमगस्त्यमृषिसत्तमम् ॥ १ ॥
भगवन् ! राक्षसः क्रूरो यदा प्रभृति मेदिनीम् ।
पर्य्यटत् किं तदा लोकाः शून्या आसन् द्विजोत्तम ! ॥२॥
राजा वा राजमात्रो वा किं तदा नात्र कश्चन ।
धर्षणं यत्र न प्राप्तो रावणो राक्षसेश्वरः ॥ ३ ॥
उताहो हतवीर्य्यास्ते बभूवुः पृथिवीक्षितः ।
बहिष्कृता वरास्त्रैश्च बहवो निर्जिता नृपाः ॥ ४ ॥

अथ रावणपराजयकथनम् । तत इति । विस्मयाद्भगवत्प्रसाद वैभवश्रवणजविस्मयादिव ॥ १ ॥

लोकाः मनुष्यलोकप्राणिनः । शून्याः शूरत्वगुणशून्याः ॥ २ ॥

तदेवाह । राजेति । राजा क्षत्रियः राजमात्रः अक्षत्रियः केवलप्रभुः ॥ ३ ॥

उताहो अथवा विद्यमानास्त्रव हतवीर्य्या वीर्य्यरहिताः । वीर्य्यवत्त्वेऽपि वरास्त्रैर्बहिष्कृताः यद्बहवो नृपा निर्जिता इति वदसीति शेषः ॥ ४ ॥

राघवस्य वचः श्रुत्वा अगस्त्यो भगवानृषिः।
उवाच रामं प्रहसन् पितामह इवेश्वरम्॥ ५॥
इत्येवं धावमानस्तु पार्थिवान् पार्थिवर्षभ!
चचार रावणो राम! पृथिवीं पृथिवीपते!॥ ६॥
ततो माहिष्मतीं नाम पुरीं स्वर्गपुरीप्रभाम्।
संप्राप्तो यत्र सान्निध्यं सदासीद्वसुरेतसः॥ ७॥
तुल्य आसीन्नृपस्तस्य प्रभावाद्वसुरेतसः।
अर्जुनो नाम यत्राग्निः शरकुण्डेशयः सदा॥ ८॥
तमेव दिवसं सोऽथ हैहयाधिपतिर्बली।
अर्जुनो नर्मदां रन्तुं गतः स्त्रीभिः सहेश्वरः॥ ९॥
तमेव दिवसं सोऽथ रावणस्तत्र आगतः।
रावणो राक्षसेन्द्रस्तु तस्यामात्यानपृच्छत॥ १०॥

प्रहसन् केनापि क्षत्रियेण दुरात्मनः कथं पराभवो न ज्ञात इति भगवतो रामस्यामर्षं दृष्ट्वाऽगस्त्यहासः। पितामहश्चतुर्मुखो ब्रह्मा। ईश्वरम् अभिप्रधानं शौर्य्यादिक्षत्रगुणं रुद्रम्॥ ५॥ ६॥

स्वर्गपुरी अमरावती। वसुरेतसः सदा सान्निध्यमग्नेर्नित्यसन्निधानमित्यर्थः॥ ७॥

तस्याग्नेः प्रभावात् प्रसादात् वसुरेतसोऽग्नेस्तुल्य आसीत्। यत्रार्जुनराज्यवेलायामग्निः शरकुण्डेशयः शरात्मृतकुण्डे वसति। अनुयामभिचारार्थं शरपरिस्तृतकुण्डे नित्यं सन्निहितो वर्त्तत इत्यर्थः॥ ८॥

कार्त्तवीर्यार्जुनो नृपतिः शीघ्रं सम्यगाख्यातुमर्हथ।
रावणोऽहमनुप्राप्तो युद्धेप्सुर्नृवरेण ह ॥ ११ ॥
ममागमनमप्यग्रे युष्माभिः सन्निवेद्यताम्।
इत्येवं रावणेनोक्तास्तेऽमात्याः सुविपश्चितः ॥ १२ ॥
अब्रुवन् राक्षसपतिमसान्निध्यं महीपतेः।
श्रुत्वा विश्रवसः पुत्रः पौराणामर्जुनं गतम् ॥ १३ ॥
अपसृत्यागतो विन्ध्यं हिमवत्सन्निभं गिरिम्।
स तमभ्रमिवाविष्टमुद्भ्रान्तमिव मेदिनीम् ॥ १४ ॥
अपश्यद्रावणो विन्ध्यमालिखन्तमिवाम्बरम्।
सहस्रशिखरोपेतं सिंहाध्युषितकन्दरम् ॥ १५ ॥
प्रपातपतितैः शीतैः साट्टहासमिवाम्बुभिः।
देवदानवगन्धर्वैः साप्सरोभिः सकिन्नरैः ॥ १६ ॥

तमेव दिवसं यस्मिन् दिने रावणो गतस्तस्मिन्नेव दिवसे नर्मदां रन्तुं नर्मदायां क्रीडितुम् ईश्वरो राजा ॥ ८ ॥ १० ॥ ११ ॥ १२ ॥

राक्षसपतिं प्रति महीपतेरसान्निध्यम् अब्रुवन्। पौराणां मुखादिति शेषः ॥ १३ ॥

अपसृत्य। पुरादिति शेषः। अभ्रं महामेघमिवाविष्टमाकाशसम्बद्धं तेनात्युन्नतम्। मेदिनीमुद्भ्रान्तमिव उद्भिद्योद्गतमिव ॥ १४ ॥

सहस्रशिखरोपेतम् अनेकशृङ्गयुतम् ॥ १५ ॥

प्रपातस्तटोऽभ्रगुः। ततः पतितैर्जलैः साट्टहासमिव ॥ १६ ॥

स्वस्त्रीभिः क्रीडमानैश्च स्वर्गभूतं महोच्छ्रयम्।
नदीभिः स्यन्दमानाभिः स्फटिकप्रतिमं जलम्॥ १७॥
फणाभिश्चलजिह्वाभिरनन्तमिव विष्ठितम्।
उत्क्रामन्तं दरीवन्तं हिमवत्सन्निभं गिरिम्॥ १८॥
पश्यमानस्ततो विन्ध्यं रावणो नर्मदां ययौ।
चलोपलजलां पुण्यां पश्चिमोदधिगामिनीम्॥ १९॥
महिषैः सृमरैः सिंहैः शार्दूलर्क्षगजोत्तमैः।
उष्णाभितप्तैस्तृषितैः संक्षोभितजलाशयाम्॥ २०॥
चक्रवाकैः सकारण्डैः सहंसजलकुक्कुटैः।
सारसैश्च सदा मत्तैः कूजद्भिः सुसमावृताम्॥ २१॥
फुल्लद्रुमकृतोत्तंसां चक्रवाकयुगस्तनीम्।
विस्तीर्णपुलिनश्रोणीं हंसावलिसुमेखलाम्॥ २२॥
पुष्परेणवनुलिप्ताङ्गीं जलफेनामलांशुकाम्।
जलावगाहसुस्पर्शां फुल्लोत्पलशुभेक्षणाम्॥ २३॥

स्फटिकप्रतिमं जलं स्यन्दमानाभिर्नदीभिः चलजिह्वाभिः फणाभिरुपलक्षितमनन्तमिव विष्ठितम्। उत्क्रामन्तम् ऊर्ध्वं व्याप्नुवानम्। १७॥ १८॥

चलानि उपलेषु जलानि यस्यास्ताम्॥ १९॥ २०॥ २१॥

अथ नर्मदां स्त्रीत्वेन वर्णयति। फुल्लेति॥ २२॥

पुष्पकादवरुह्याशु नर्मदां सरिताम्बराम्।
इष्टामिव वरां नारीमवगाह्य दशाननः॥ २४॥
स तस्याः पुलिने रम्ये नानामुनिनिषेविते।
उपोपविष्टः सचिवैः सार्धं राक्षसपुङ्गवः॥ २५॥
प्रख्याय नर्मदां सोऽय गङ्गेयमिति रावणः।
नर्मदादर्शने हर्षमाप्तवान् स दशाननः॥ २६॥
उवाच सचिवांस्तत्र सलीलं शुकसारणौ।
एष रश्मिसहस्रेण जगत् कृत्वेव काञ्चनम्॥ २७॥
तीक्ष्णतापकरः सूर्य्यो नभसो मध्यमास्थितः।
मामासीनं विदित्वैव चन्द्रायति दिवाकरः॥ २८॥
नर्मदाजलशीतश्च सुगन्धिः श्रमनाशनः।
मद्भयादनिलो ह्येष वात्यसौ सुसमाहितः॥ २९॥
इयं वापि सरिच्छ्रेष्ठा नर्मदा शर्मवर्धिनी।
नक्रमीनविहङ्गोर्मिः सभयेवाङ्गना स्थिता॥ ३०॥

अमानां जलावगाहे सुखस्पर्शरूपगुणो यस्यास्ताम् ॥२३॥२४॥२५॥

नर्मदां गङ्गेयमिति प्रख्याय प्रशस्य। अनेन नर्मदायास्तद्वत्पाप-नाशकत्वं तत्तटकृतशिवपूजादेर्महाफलत्वं गङ्गायाः सर्वोत्कृष्टत्वञ्च सूचितम् ॥ २६॥

सलीलं सविलासम्। काञ्चनं तन्मयम् ॥ २७॥

तद्भवन्तः क्षताः शस्त्रैर्नृपैरिन्द्रसमैर्युधि ।
चन्दनस्य रसेनेव रुधिरेण समुक्षिताः ॥ ३१ ॥
ते यूयमवगाहध्वं नर्मदां शर्मदां शुभाम् ।
सार्वभौममुखा मत्ता गङ्गामिव महागजाः ॥ ३२ ॥
अस्यां स्नात्वा महानद्यां पाप्मनो विप्रमोक्ष्यथ ।
अहमप्यद्य पुलिने शरदिन्दुसमप्रभे ॥ ३३ ॥
पुष्पोपहारं शनकैः करिष्यामि कपर्दिनः ।
रावणेनैवमुक्तास्तु प्रहस्तशुकसारणाः ॥ ३४ ॥
समहोदरधूम्राक्षा नर्मदां विजगाहिरे ।
राक्षसेन्द्रगजैस्तैस्तु क्षोभिता नर्मदा नदी ॥ ३५ ॥
वामनाञ्जनपद्माद्यैर्गङ्गा इव महागजैः ।
ततस्ते राक्षसाः स्नात्वा नर्मदायां महाबलाः ॥ ३६ ॥
उत्तीर्य्य पुष्पाण्याजह्रुर्बल्यर्थं रावणस्य तु ।

चन्द्रायति चन्द्र इवाचरति । आर्षं परस्मैपदम् ॥ २८ ॥ २९ ॥

मत्स्यादियुता ऊर्मयो यस्याः सा ॥ ३० ॥ ३१ ॥

अवगाहध्वं स्नानं कुरुत । सार्वभौममुखाः सार्वभौमनामक दिग्गजादयः । महापद्म इति पाठान्तरम् । महापद्मो दिग्गजः ॥ ३२ ॥ ॥ ३३ ॥ ३४ ॥

राक्षसेन्द्रा गजास्तैः ॥ ३५ ॥

वामनाद्या दिग्गजाः गङ्गा इव महागजैरित्यसन्धिरार्षः ॥ ३६ ॥

नर्मदापुलिने ह्रद्ये शुभ्राभ्रसदृशप्रभे ॥ ३७ ॥
राक्षसैस्तु मुहूर्तेन कृतः पुष्पमयो गिरिः।
पुष्पेषूपहृतेष्वेवं रावणो राक्षसेश्वरः ॥ ३८ ॥
अवतीर्णो नदीं स्नातुं गङ्गामिव महागजः।
तत्र स्नात्वा च विधिवज्जप्त्वा जप्यमनुत्तमम् ॥ ३९ ॥
नर्मदासलिलात्तस्मादुत्ततार स रावणः।
ततः क्लिन्नाम्बरं त्यक्त्वा शुक्लवस्त्रसमावृतः ॥ ४० ॥
रावणं प्राञ्जलिं यान्तमन्वयुः सर्वराक्षसाः।
तद्गतीवशमापन्ना मूर्तिमन्त इवाचलाः ॥ ४१ ॥
यत्र यत्र च याति स्म रावणो राक्षसेश्वरः।
जाम्बूनदमयं लिङ्गं तत्र तत्र स्म नीयते ॥ ४२ ॥
वालुकावेदिमध्ये तु तल्लिङ्गं स्थाप्य रावणः।
अर्चयामास गन्धैश्च पुष्पैश्चामृतगन्धिभिः ॥ ४३ ॥

रावणस्य बल्यर्थं रावणकर्तृकशिवपूजार्थम् ॥३७॥३८॥३९॥४०॥

रावणं प्राञ्जलिं नियमेनेश्वरं प्रति कृताञ्जलिम्। तद्गतीवशमित्यार्षो दीर्घः। मूर्त्तिमन्तः प्राण्याकारवन्तोऽचला इव राक्षसाः ॥४१॥

तत्र तत्र स्म नीयते। प्रतिदिवसं पूजार्थं राक्षसैरिति शेषः ॥४२॥

तल्लिङ्गं जाम्बूनदमयं नित्यपूजालिङ्गम्। ऐश्वर्य्यकामनया हि तल्लिङ्गपूजा रावणस्य। ऐश्वर्य्यकामस्य सौवर्णलिङ्गपूजायास्तन्त्रेषूक्तेः ॥४३॥

ततः सतामार्तिहरं परं वरं
वरप्रदं चन्द्रमयूखभूषणम् ।
समर्चयित्वा स निशाचरो जगौ
प्रसार्य्य हस्तान् प्रणनर्त्त चाग्रतः ॥ ४४ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
एकत्रिंशः सर्गः ॥ ३१ ॥

जगौ । सामानीति शेषः ॥ ४४ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

---

## द्वात्रिंशः सर्गः ।



नर्मदापुलिने यत्र राक्षसेन्द्रः स दारुणः ।
पुष्पोपहारं कुरुते तस्माद्देशाददूरतः ॥ १ ॥
अर्जुनो जयतां श्रेष्ठो माहिष्मत्याः पतिः प्रभुः ।
क्रीड़ते सह नारीभिर्नर्मदातोयमाश्रितः ॥ २ ॥
तासां मध्यगतो राजा रराज च तदार्जुनः ।
करेणूनां सहस्रस्य मध्यस्थ इव कुञ्जरः ॥ ३ ॥
जिज्ञासुः स तु बाहूनां सहस्रस्योत्तमं बलम् ।
रुरोध नर्मदावेगं बाहुभिर्बहुभिर्वृतः ॥ ४ ॥
कार्तवीर्य्यभुजासक्तं तज्जलं प्राप्य निर्मलम् ।
कूलोपहारं कुर्वाणं प्रतिस्रोतः प्रधावति ॥ ५ ॥
समीननक्रमकरः सपुष्पकुशसंस्तरः ।
स नर्मदाम्भसो वेगः प्रावृट्काल इवाबभौ ॥ ६ ॥

नर्मदेति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

निर्मलं तज्जलं कार्त्तवीर्य्यभुजैरासक्तम् आसङ्गं बन्धनं प्राप्य प्रतिस्रोतः प्रतिप्रवाहम् । प्रतिकूलमिति यावत् । प्रधावति ॥ ५ ॥

स वेगः कार्त्तवीर्य्येण संप्रेषित इवाम्भसः ।
पुष्पोपहारं सकलं रावणस्य जहार ह ॥ ७ ॥
रावणोऽर्धसमाप्तन्तमुत्सृज्य नियमं तदा ।
नर्मदां पश्यते कान्तां प्रतिकूलां यथा प्रियाम् ॥ ८ ॥
पश्चिमेन तु तं दृष्ट्वा सागरोद्गारसन्निभम् ।
वर्धन्तमम्भसो वेगं पूर्वामाशां प्रविश्य तु ॥ ९ ॥
ततोऽनुद्भ्रान्तशकुनां स्वभावे परमे स्थिताम् ।
निर्विकाराङ्गनाभासामपश्यद्रावणो नदीम् ॥ १० ॥
सव्येतरकराङ्गुल्या ह्यशब्दास्यो दशाननः ।

कुशसंस्तरः कुशास्तरणम् । स तु तत्पुलिने कर्मनिमित्तम् ऋषिगणाकृतः ॥ ६ ॥

संप्रेषित इव । रावणं प्रतीति शेषः ॥ ७ ॥

पश्यते पश्यति स्म ॥ ८ ॥

सागरोद्गारः चन्द्रोदयकालिकसमुद्रपरिवृद्धिः । तेन हि समुद्रगा नद्यस्तत्समीपदेशे विपरीतप्रवाहाः क्रियन्त इति प्रसिद्धम् । पश्चिमेन मार्गेण पूर्वामाशां प्रविश्य वर्धन्तमम्भसो वेगं दृष्ट्वा प्रतिकूलां कान्तां प्रियामिव नर्मदां पश्यति स्मेत्यन्वयः । पूर्वामाशां प्रविश्यति इति पाठे रावण इति शेषः । तस्य कियद्दूरे वृद्धिरिति निर्णयार्थमिति भावः । ततः पूर्वदिशि । तस्मात्प्रविश्यतीत्येव पाठो युक्तः कतकसम्मतश्च ॥ ९ ॥ १० ॥

वेगप्रभावमन्वेष्टुं सोऽदिशच्छुकसारणौ ॥ ११ ॥
तौ तु रावणसन्दिष्टौ भ्रातरौ शुकसारणौ।
व्योमान्तरगतौ वीरौ प्रस्थितौ पश्चिमामुखौ ॥ १२ ॥
अर्धयोजनमात्रं तु गत्वा तौ रजनीचरौ।
पश्येतां पुरुषं तोये क्रीड़न्तं सहयोषितम् ॥ १३ ॥
वृहत्सालप्रतीकाशं तोयव्याकुलमूर्धजम्।
मदरक्तान्तनयनं मदव्याकुलचेतसम् ॥ १४ ॥
नदीं बाहुसहस्रेण रुन्धन्तमरिमर्दनम्।
गिरिं पादसहस्रेण रुन्धन्तमिव मेदिनीम् ॥ १५ ॥
बालानां वरनारीणां सहस्रेण समावृतम्।
समदानां करेणूनां सहस्रेणेव कुञ्जरम् ॥ १६ ॥
तमद्भुततरं दृष्ट्वा राक्षसौ शुकसारणौ।
सन्निवृत्तावुपागम्य रावणान्तमथोचतुः ॥ १७ ॥
वृहत्सालप्रतीकाशः कोऽप्यसौ राक्षसेश्वर!।

सव्येतरकराङ्गुल्या दक्षिणहस्ताङ्गुल्या शीघ्रान्वेषणद्योतकाभिनयं कृत्वा अन्वेष्टुमदिशत् ॥ ११ ॥

व्योमान्तरगतौ आकाशमार्गगौ ॥ १२ ॥

पश्येतामपश्यताम् ॥ १३ ॥ १४ ॥

मेदिनीं पादसहस्रेण रुन्धन्तं गिरिमिव संस्थितम् ॥१५॥१६॥१७॥

नर्मदां रोधवद्रुध्वा क्रीड़ापयति योषितः ॥ १८ ॥
तेन बाहुसहस्रेण सन्निरुद्धजला नदी ।
सागरोद्गारसंकाशानुद्गारान् सृजते मुहुः ॥ १९ ॥
इत्येवं भाषमाणौ तौ निशम्य शुकसारणौ ।
रावणोऽर्जुन इत्युक्त्वा स ययौ युद्धलालसः ॥ २० ॥
अर्जुनाभिमुखे तस्मिन् रावणे राक्षसाधिपे ।
चण्डः प्रवाति पवनः सनादः सरजस्तथा ॥ २१ ॥
सकृदेव कृतो रावः शरक्तपृषतो घनैः ।
महोदरमहापार्श्वधूम्राक्षशुकसारणैः ॥ २२ ॥
संवृतो राक्षसेन्द्रस्तु तत्रागाद्यत्र चार्जुनः ।
अदीर्घेणैव कालेन स तदा राक्षसो बली ॥ २३ ॥
तं नर्मदाह्रदं भीममाजगामाञ्जनप्रभः ।
स तत्र स्त्रीपरिवृतं वाशिताभिरिव द्विपम् ॥ २४ ॥

रोधवद्रुध्यतेऽनेनेति रोधः सेतुस्तद्वदित्यर्थः । क्रीड़ापयति क्रीड़यति । पुराणार्थः ॥ १८ ॥ १९ ॥

निशम्य श्रुत्वा अर्जुन इत्युक्त्वा अन्यस्यैवंविधसामर्थ्यासम्भवयुक्त्या ॥ ॥ २० ॥ २१ ॥

सरक्तपृषतो रक्तबिन्दुसहितो रावः शब्दः सकृदेव रावणप्रस्थानेन सहैवैकवारं घनैः कृतः । सरक्तवर्षकमेघानां सकृद्भावोऽप्युत्पात इति कतकः ॥ २२ ॥ २३ ॥ २४ ॥

नरेन्द्रं पश्यते राजा राक्षसानां तदार्जुनम्।
स रोषाद्रक्तनयनो राक्षसेन्द्रो बलोद्धतः॥ २५॥
इत्येवमर्जुनामात्यानाह गम्भीरया गिरा।
अमात्याः! क्षिप्रमाख्यात हैहयस्य नृपस्य वै।
युद्धार्थं समनुप्राप्तो रावणो नाम नामतः।
रावणस्य वचः श्रुत्वा मन्त्रिणोऽथार्जुनस्य ते॥ २७॥
उत्तस्थुः सायुधास्तञ्च रावणं वाक्यमब्रुवन्।
युद्धस्य कालो विज्ञातः साधु भो साधु रावण!॥ २८॥
यः क्षीबं स्त्रीगतञ्चैव योद्धुमुत्सहसे नृपम्।
स्त्रीसमक्षगतं यत्त्वं योद्धुमुत्सहसे नृपम्॥ २९॥
क्षमस्वाद्य दशग्रीव! उष्यतां रजनी त्वया।
युद्धश्रद्धा तु यद्यस्ति श्वस्तात! समरेऽर्जुनम्॥ ३०॥

पश्यते पश्यति स्म॥ २५॥

इत्येवं वक्ष्यमाणप्रकारेण॥ २६॥ २७॥

अर्जुनमन्त्रिणो व्यङ्ग्योक्त्या रावणं निन्दन्ति। युद्धस्येत्यादि। हे रावण! त्वया साधुसम्यग्युद्धस्य कालो विज्ञातः। यस्त्वं क्षीबं मदपानमत्तं स्त्रीगतं स्त्रीगोष्ठीगतं साधु सम्यग्योद्धुमुत्सहसे। उक्तमेव स्पष्टं पुनराह। स्त्रीसमक्षगतमिति। यत्तत्सम्यक्कालो विज्ञातः॥२८॥२९॥

स्वभावेनाह। क्षमस्वेति। अद्य दिवसे युद्धविलम्बं क्षमस्व सहस्व

यदि वापि त्वरा तुभ्यं युद्धतृष्णासमावृत ! ।
निपात्यास्मान् रणे युद्धमर्जुनेनोपयास्यसि ॥ ३१ ॥
ततस्तै रावणामात्यैरमात्यास्ते नृपस्य तु ।
सूदिताश्चापि ते युद्धे भक्षिताश्च बुभुक्षितैः ॥ ३२ ॥
ततो हलहला शब्दो नर्मदातीरगो बभौ ।
अर्जुनस्यानुयात्राणां रावणस्य च मन्त्रिणाम् ॥ ३३ ॥
इषुभिस्तोमरैः प्रासैस्त्रिशूलैर्वज्रकर्पणैः ।
सरावणानर्दयन्तः समन्तात् समभिद्रुताः ॥ ३४ ॥
हैहयाधिपयोधानां वेग आसीत् सुदारुणः ।
सनक्रमीनमकरसमुद्रस्येव निःस्वनः ॥ ३५ ॥
रावणस्य तु तेमात्याः प्रहस्तशुकसारणाः ।
कार्तवीर्य्यबलं क्रुद्धा निर्हन्ति स्म स्वतेजसा ॥ ३६ ॥

उच्यतां इहेति शेषः । युध्येतिपदम् । समरे श्रद्धा यद्यस्ति तदास्माट-र्जुनं युध्य युध्यस्व ॥ ३० ॥

हे युद्धतृष्णासमावृत यदि वा अथवा ते त्वरा यदि युद्धे तदास्मान् युद्धे निपात्य अर्जुनेन युद्धं प्राप्स्यसि ॥ ३१ ॥ ३२ ॥

हलहलेति शब्दानुकारः । अनुयात्रा अनुचरा मन्त्रिण इत्यर्थः ॥ ३३ ॥

कर्पणमायुधविशेषः । सरावणान् रावणसहितान् मन्त्रिणोऽर्दयन्तो अर्जुनमन्त्रिणो बभूवुरिति शेषः ॥ ३४ ॥

अर्जुनाय तु तत् कर्म रावणस्य समन्त्रिणः ।
क्रीड़मानाय कथितं पुरुषैर्भयविक्लवैः ॥ ३७ ॥
श्रुत्वा न भेतव्यमिति स्त्रीजनं स तदार्जुनः ।
उत्ततार जलात्तस्माद्गङ्गातोयादिवाञ्जनः ॥ ३८ ॥
क्रोधदूषितनेत्रस्तु स तदार्जुनपावकः ।
प्रजज्वाल महाघोरो युगान्त इव पावकः ॥ ३९ ॥
सतूर्णतरमादाय वरहेमाङ्गदो गदाम् ।
अभिदुद्राव रक्षांसि तमांसीव दिवाकरः ॥ ४० ॥
बाहुविक्षेपकरणां समुद्यम्य महागदाम् ।
गारुड़ं वेगमास्थाय आपपातैव सोऽर्जुनः ॥ ४१ ॥
तस्य मार्गं समारुध्य विन्ध्योऽर्कस्येव पर्वतः ।
स्थितो विन्ध्य इवाकम्प्यः प्रहस्तो मुसलायुधः ॥ ४२ ॥

नक्रादिसङ्कुलसमुद्रस्येव स्वन आसीत् ॥ ३५ ॥ ३६ ॥
समन्त्रिणो मन्त्रिसहितस्य रावणस्य ॥ ३७ ॥
स्त्रीजनं न भेतव्यमित्युक्त्वेति शेषः । अञ्जनो दिग्गजः ॥ ३८ ॥
अर्जुनरूपः पावक इति रूपकम् । युगान्ते प्रलयकाले ॥ ३९ ॥
अभिदुद्राव द्रावयामास ॥ ४० ॥
बाहुविक्षेपकरणां बाहुभिर्विक्षेपकरणं भ्रमसंपादनं यस्यास्ताम् । गारुडं वेगं गरुडसदृशवेगम् । आपपातैव न तु विलम्बितवानित्यर्थः ॥ ४१ ॥

ततोऽस्य मुसलं घोरं लोहबद्धं मदोद्धतः।
प्रहस्तः प्रेषयन् क्रुद्धो ररास च यथान्तकः॥ ४३॥
तस्याग्रे मुसलस्याग्निरशोकापीड़सन्निभः।
प्रहस्तकरमुक्तस्य बभूव प्रदहन्निव॥ ४४॥
आधावमानं मुसलं कार्तवीर्य्यस्तदार्जुनः।
निपुणं वञ्चयामास गदया गतविक्लवः॥ ४५॥
ततस्तमभिदुद्राव सगदो हैहयाधिपः।
भ्रामयाणो गदां गुर्वीं पञ्चबाहुशतोच्छ्रयाम्॥ ४६॥
ततो हतोऽतिवेगेन प्रहस्तो गदया तदा।
निपपात स्थितः शैलो वज्रिवज्रहतो यथा॥ ४७॥
प्रहस्तं पतितं दृष्ट्वा मारीचशुकसारणाः।
समहोदरधूम्राक्षा अपसृष्टा रणाजिरात्॥ ४८॥
अपक्रान्तेष्वमात्येषु प्रहस्ते च निपातिते।
रावणोऽभ्यद्रवत्तूर्णमर्जुनं नृपसत्तमम्॥ ४९॥

विन्ध्यपर्वतोऽर्कमार्गं रुध्वा स्थित इति पौराणिकी कथा॥ ४२॥
अस्य प्रेषयन्नस्य संहारार्थं क्षिपन्॥ ४३॥
अशोकापीडं अशोकपुष्पशिखा तत्संनिभः॥ ४४॥
गतविक्लवः गतभयः॥ ४५॥
पञ्चबाहुशतैरुच्छ्रय उत्क्षेपो यस्यास्ताम्॥ ४६॥

सहस्रबाहोस्तद् युद्धं विंशद्बाहोश्च दारुणम्।
नृपराक्षसयोस्तत्र आरब्धं रोमहर्षणम् ॥ ५० ॥
सागराविव संक्षुब्धौ चलमूलाविवाचलौ।
तेजोयुक्ताविवादित्यौ प्रदहन्ताविवानलौ ॥ ५१ ॥
बलोद्धतौ यथा नागौ वासितार्थे यथा वृषौ।
मेघाविव विनर्दन्तौ सिंहाविव बलोत्कटौ ॥ ५२ ॥
रुद्रकालाविव क्रुद्धौ तौ तदा राक्षसार्जुनौ।
परस्परं गदां गृह्य ताड़यामासतुर्भृशम् ॥ ५३ ॥
वज्रप्रहारानचला यथा घोरान् विषेहिरे।
गदाप्रहारांस्तौ तत्र सेहाते नरराक्षसौ ॥ ५४ ॥
यथाशनिरवेभ्यस्तु जायतेऽथ प्रतिश्रुतिः।
तथा तयोर्गदापोथैर्दिशः सर्वाः प्रतिश्रुताः ॥ ५५ ॥
अर्जुनस्य गदा सा तु पात्यमानाऽहितोरसि।
काञ्चनाभं नभश्चक्रे विद्युत्सौदामनी यथा ॥ ५६ ॥

शैल इव स्थितो निपपात ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥

वासितार्थे करिणीरूपप्रयोजनाय युयुधाते इति शेषः ॥ ५२ ॥ ॥ ५३ ॥ ५४ ॥

अशनिरवेभ्यः अशनिपातध्वनिभ्यः। प्रतिश्रुतिः प्रतिध्वनिः। गदापोथैर्गदापातैः। प्रतिश्रुताः प्रतिध्वनिमन्तः ॥ ५५ ॥

तथैव रावणेनापि पात्यमाना मुहुर्मुहुः।
अर्जुनोरसि निर्भाति गदोल्केव महागिरौ॥ ५७॥
नार्जुनः खेदमायाति न राक्षसगणेश्वरः।
सममासीत्तयोर्युद्धं यथापूर्वं बलीन्द्रयोः॥ ५८॥
शृङ्गैरिव वृषा युध्यन् दन्ताग्रैरिव कुञ्जरौ।
परस्परं विनिघ्नन्तौ नरराक्षसपुङ्गवौ॥ ५९॥
ततोऽर्जुनेन क्रुद्धेन सर्वप्राणेन सा गदा।
स्तनयोरन्तरे मुक्ता रावणस्य महोरसि॥ ६०॥
वरदानकृतत्राणे सा गदा रावणोरसि।
दुर्बलेव यथावेगं द्विधाभूतापतत् क्षितौ॥ ६१॥
स त्वर्जुनप्रयुक्तेन गदाघातेन रावणः।
अपासर्पद्धनुर्मात्रं निषसाद च निष्टनन्॥ ६२॥
स विक्लवं तदालक्ष्य दशग्रीवं ततोऽर्जुनः।

अर्हितोरसि रावणोरसि। सौदामनी विद्युत् विशेषेण द्योतमाना नभ इव रावणोरोगदाकाञ्चनाभं काञ्चनवर्णं चक्रे। प्रकाशितं चक्रे इति यावत्॥ ५६॥ ५७॥

न राक्षसगणेश्वरः खेदमायाति॥ ५८॥

वृषायुध्यन् वृषावयुध्यन्नित्यर्थः॥ ५९॥ ६०॥

दुर्बलेव बलरहितेव। यथावेगं स्ववेगोचितं प्रहर्तुमसमर्था स्वयमेव द्विधाभूता क्षितावपतत्। तत्र हेतुर्वरदानकृतत्राणे इति॥ ६१॥

सहसोत्पत्य जग्राह गरुत्मानिव पन्नगम्॥ ६३॥
स तु बाहुसहस्रेण बलाद् गृह्य दशाननम्।
बबन्ध बलवान् राजा बलिं नारायणो यथा॥ ६४॥
बध्यमाने दशग्रीवे सिद्धचारणदेवताः।
साध्वीतिवादिनः पुष्पैः किरन्त्यर्जुनमूर्धनि॥ ६५॥
व्याघ्रो मृगमिवादाय मृगराड़िव कुञ्जरम्।
ररास हैहयो राजा हर्षादम्बुदवन्मुहुः॥ ६६॥
प्रहस्तस्तु समाश्वस्तो दृष्ट्वा बद्धं दशाननम्।
सहसा राक्षसः क्रुद्ध अभिदुद्राव हैहयम्॥ ६७॥
नक्तञ्चराणां वेगस्तु तेषामापततां बभौ।
उद्भूत आतपापाये पयोदानामिवाम्बुधौ॥ ६८॥
मुञ्च मुञ्चेति भाषन्तस्तिष्ठ तिष्ठेति चासकृत्।
मुसलानि च शूलानि सोत्सर्ज तदा रणे॥ ६९॥
अप्राप्तान्येव तान्याशु असंभ्रान्तस्तदार्जुनः।
आयुधान्यमरारीणां जग्राहारिनिसूदनः॥ ७०॥

अपासर्पत् अपराङ्मुखएव पृष्ठतोगच्छत् निघ्नन् सदन्॥ ६२॥
॥ ६३॥ ६४॥
साध्वीति वादिन इति दीर्घ आर्षः॥ ६५॥ ६६॥ ६७॥
आतपापाये वर्षाकाले॥ ६८॥
सोत्सर्जेत्यार्षम्। सहैव त्यक्तवन्त इत्यर्थः॥ ६९॥

ततस्तान्येव रक्षांसि दुर्धरैः प्रवरायुधैः ।
भित्त्वा विद्रावयामास वायुरम्बुधरानिव ॥ ७१ ॥
राक्षसांस्त्रासयामास कार्त्तवीर्य्यार्जुनस्तदा ।
रावणं गृह्य नगरं प्रविवेश सुहृद्वृतः ॥ ७२ ॥
स कीर्य्यमाणः कुसुमाक्षतोत्करै-
र्द्विजैः सपौरैः पुरुहूतसन्निभः ।
ततोऽर्जुनः स्वां प्रविवेश तां पुरीं
बलिं निगृह्येव सहस्रलोचनः ॥ ७३ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
द्वात्रिंशः सर्गः ॥ ३२ ॥

अप्राप्तान्येव स्वसमीपमनागतान्येवान्तरिक्षस्थान्येवामरारीणां तान्यायुधानि रावणग्राहिकरव्यतिरिक्तकररास्त्रु जग्राह ॥७०॥७१॥७२॥७३॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

---

## त्रयस्त्रिंशः सर्गः ।



रावणग्रहणं तत्तु वायुग्रहणसन्निभम् ।
ततः पुलस्त्यः शुश्राव कथितं दिवि दैवतैः ॥ १ ॥
ततः पुत्रकृतस्नेहात् कम्प्यमानो महाधृतिः ।
माहिष्मतीपतिं द्रष्टुमाजगाम महानृषिः ॥ २ ॥
स वायुमार्गमास्थाय वायुतुल्यगतिर्द्विजः ।
पुरीं माहिष्मतीं प्राप्तो मनःसम्पातविक्रमः ॥ ३ ॥
सोऽमरावतिसंकाशां हृष्टपुष्टजनावृताम् ।
प्रविवेश पुरीं ब्रह्मा इन्द्रस्येवामरावतीम् ॥ ४ ॥
पादचारमिवादित्यं निष्पतन्तं सुदुर्दृशम् ।
ततस्ते प्रत्यभिज्ञाय अर्जुनाय न्यवेदयन् ॥ ५ ॥

अथ पुलस्त्येन रावणमोचनम् । रावणेति ॥ १ ॥

कम्प्यमानः अनुकम्पया युज्यमानः ॥ २ ॥

मनःसम्पातविक्रमः मनस्तुल्यगतिः ॥ ३ ॥

अमरावतिसङ्काशाम् । आर्षो ह्रस्वः ॥ ४ ॥

सुदुर्दृशम् । सुदुर्दर्शमित्यर्थः । प्रत्यभिज्ञाय द्वाःस्था मन्त्रिणो वा ॥ ५ ॥

पुलस्त्य इति विज्ञाय वचनाद्धैहयाधिपः ।
शिरस्यञ्जलिमाधाय प्रत्युद्गच्छत्तपस्विनम् ॥ ६ ॥
पुरोहितोऽस्य गृह्यार्घ्यं मधुपर्कं तथैव च ।
पुरस्तात् प्रययौ राज्ञः शक्रस्येव बृहस्पतिः ॥ ७ ॥
ततस्तमृषिमायान्तमुद्यन्तमिव भास्करम् ।
अर्जुनो दृश्य संभ्रान्तो ववन्देन्द्र इवेश्वरम् ॥ ८ ॥
स तस्य मधुपर्कं गां पाद्यमर्घ्यं निवेद्य च ।
पुलस्त्यमाह राजेन्द्रो हर्षगद्गदया गिरा ॥ ९ ॥
अद्यैवममरावत्या तुल्या माहिष्मती कृता ।
अद्याहं तु द्विजेन्द्र ! त्वां यस्मात् पश्यामि दुर्द्दशम् ॥ १० ॥
अद्य मे कुशलं देव ! अद्य मे कुशलं व्रतम् ।
अद्य मे सफलं जन्म अद्य मे सफलं तपः ॥ ११ ॥
यत्ते देवगणैर्वन्द्यौ वन्देऽहं चरणौ तव ।
इदं राज्यमिमे पुत्रा इमे दारा इमे वयम् ।
ब्रह्मन् ! किं कुर्मः किं कार्य्यमाज्ञापय तु नो भवान् ॥ १२ ॥
तं धर्म्मग्निषु पुत्रेषु शिवं दृष्ट्वा च पार्थिवम् ।
पुलस्त्योवाच राजानं हैहयानां तथार्ज्जुनम् ॥ १३ ॥

प्रत्युद्गच्छत् प्रत्युदगच्छत् ॥ ६ ॥ ७ ॥
ईश्वरं ब्रह्माणम् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

नरेन्द्राम्बुजपत्राक्ष! पूर्णचन्द्रनिभानन!।
अतुलं ते बलं येन दशग्रीवस्त्वया जित: ॥ १४ ॥
भयाद्यस्योपतिष्ठेतां निष्पन्दौ सागरानिलौ।
सोऽयं मृधे त्वया बद्ध: पौत्रो मे रणदुर्जय: ॥ १५ ॥
पुत्रकस्य यश: पीतं नाम विश्रावितं त्वया।
मद्वाक्याद्याच्यमानोऽद्य मुञ्च वत्स! दशाननम् ॥ १६ ॥
पुलस्त्याज्ञां प्रगृह्याथ न किञ्चन वचोऽर्जुन:।
मुमोचैव पार्थिवेन्द्रो राक्षसेन्द्रं प्रहृष्टवत् ॥ १७ ॥
स तं प्रमुच्य त्रिदशारिमर्जुन:
प्रपूज्य दिव्याभरणस्रगम्बरै:।
अहिंसकं सख्यमुपेत्य साग्निकं
प्रणम्य तं ब्रह्मसुतं गृहं ययौ ॥ १८ ॥

शिवं कुशलम्। पुलस्त्योवाचेति सन्धिरार्षः ॥ १३ ॥ १४ ॥

यस्य रावणस्य ॥ १५ ॥

पुत्रकस्य मदीयबालस्य रावणस्य। यशः पीतं नाशितम्। स्वीयं नाम च रावणजिदित्येवं त्रैलोक्ये विश्रावितम् ॥ १६ ॥

न किञ्चिदवच ऊचे किन्तु क्रिया केवलमुत्तरमिति मुमोचैव। प्रहृष्टवत् ब्रह्मपुत्रो मां प्रार्थितवानिति सन्तोषयुक्तः सन् ॥ १७ ॥

अहिंसकं सख्यं परस्परहिंसाप्रवृत्तिनिवारणसाधनम्। साग्निकं अग्निसाक्षित्वसहितम् ॥ १८ ॥

पुलस्त्येनापि संत्यक्तो राक्षसेन्द्रः प्रतापवान् ।
परिष्वक्तः कृतातिथ्यो लज्जमानो विनिर्जितः ॥ १९ ॥
पितामहसुतश्चापि पुलस्त्यो मुनिपुङ्गवः ।
मोचयित्वा दशग्रीवं ब्रह्मलोकं जगाम ह ॥ २० ॥
एवं स रावणः प्राप्तः कार्त्तवीर्य्यात् प्रधर्षणम् ।
पुलस्त्यवचनाच्चापि पुनर्मुक्तो महाबलः ॥ २१ ॥
एवं बलिभ्यो बलिनः सन्ति राघवनन्दन ! ।
नावज्ञा हि परे कार्य्या य इच्छेच्छ्रेय आत्मनः ॥ २२ ॥

तत: स राजा पिशिताशनानां
सहस्रबाहोरुपलभ्य मैत्रीम् ।
पुनर्नृपाणां कदनं चकार
चचार सर्वां पृथिवीञ्च दर्पात् ॥ २३ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

पुलस्त्येनापि संत्यक्तो गच्छ लङ्कामित्यनुज्ञातः । अपिनार्जुनेनापि त्यक्तो बन्धनान्मुक्तः । कृतातिथ्यः । अर्जुनेनेति शेषः ॥१९॥२०॥२१॥

बलिभ्योऽपि बलिनः सन्ति । ईश्वरसृष्टेर्विचित्रत्वादित्याशयः । यः श्रेय इच्छेत्तेन परे परस्मिन्नवज्ञा न कार्य्या ॥ २२ ॥ २३ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

## चतुस्त्रिंशः सर्गः ।



अर्जुनेन विमुक्तस्तु रावणो राक्षसाधिपः ।
चचार पृथिवीं सर्वामनिर्विण्णस्तथाकृतः ॥ १ ॥
राक्षसं वा मनुष्यं वा शृणुते यं बलाधिकम् ।
रावणस्तं समासाद्य युद्धे ह्वयति दर्पितः ॥ २ ॥
ततः कदाचित् किष्किन्धां नगरीं वालिपालिताम् ।
गत्वाह्वयति युद्धाय वालिनं हेममालिनम् ॥ ३ ॥
ततस्तु वानरामात्यास्तारस्तारापिता प्रभुः ।
उवाच वानरो वाक्यं युद्धप्रेप्सुमुपागतम् ॥ ४ ॥
राक्षसेन्द्र ! गतो वाली यस्ते प्रतिबलो भवेत् ।

अथ रावणस्य वालिदर्शनम् । अनिर्विण्णः कृतः । पुलस्त्येन विमोच्यार्जुनसख्यं प्रापय्य तेन पूजयित्वा विसर्जितत्वात् पराभवजनितनिर्वेदरहितः कृत इत्यर्थः ॥ १ ॥

युद्धे ह्वयति युद्धनिमित्तमाह्वयतीत्यर्थः ॥ २ ॥ ३ ॥

वानरामात्याः वालिमन्त्रिणः । तानाह । तारश्च तारापिता सुषेणः । प्रभुर्युवराजः सुग्रीवश्चोवाच ॥ ४ ॥

कोऽन्यः प्रमुखतः स्थातुं तव शक्तः प्लवङ्गमः ॥ ५ ॥
चतुर्भ्योऽपि समुद्रेभ्यः सन्ध्यामन्वास्य रावण ! ।
इदं मुहूर्तमायाति वाली तिष्ठ मुहूर्तकम् ॥ ६ ॥
एतानस्थिचयान् पश्य य एते शङ्खपाण्डराः ।
युद्धार्थिनामिमे राजन् ! वानराधिपतेजसा ॥ ७ ॥
यद्वामृतरसः पीतस्त्वया रावण ! राक्षस ! ।
तदा वालिनमासाद्य तदन्तं तव जीवितम् ॥ ८ ॥
पश्येदानीं जगच्चित्रमिमं विश्रवसः सुत ! ।
इदं मुहूर्तं तिष्ठस्व दुर्लभन्ते भविष्यति ॥ ९ ॥
अथवा त्वरसे मर्तुं गच्छ दक्षिणसागरम् ।
वालिनं द्रक्ष्यसे तत्र भूमिष्ठमिव पावकम् ॥ १० ॥
स तु तारं विनिर्भर्त्स्य रावणो लोकरावणः ।

किमूचुस्तत्राह । राक्षसेन्द्रेति । ते तुभ्यं प्रतिबलो युद्धं दातुमिति शेषः ॥ ५ ॥

चतुर्भ्यः समुद्रेभ्यस्तत्तुषु समुद्रेषु । सन्ध्यां सम्यग्ध्येयदेवतां ब्रह्मरूपामन्वास्य ध्यात्वा इदं मुहूर्तमस्मिन्मुहूर्ते आयाति ॥ ६ ॥

तेन ते युद्धमयोग्यमित्याह । एतानिति ॥ ७ ॥

यद्वेति यद्यप्यर्थे । यद्यप्यमृतरसः पीतो भवति तदा तथापि वालिनमासाद्य तव जीवितं तदन्तं तत्समोपगमनपर्यन्तम् ॥ ८ ॥

पुष्पकं तत्समारुह्य प्रययौ दक्षिणार्णवम् ॥ ११ ॥
तत्र हेमगिरिप्रख्यं तरुणार्कनिभाननम्।
रावणो वालिनं दृष्ट्वा सन्ध्योपासनतत्परम् ॥ १२ ॥
पुष्पकादवरुह्याथ रावणोऽञ्जनसन्निभः।
गृहीतुं वालिनं तूर्णं निःशब्दपदमव्रजत् ॥ १३ ॥
यदृच्छया तदा दृष्टो वालिनापि स रावणः।
पापाभिप्रायकं दृष्ट्वा चकार न तु संभ्रमम् ॥ १४ ॥
शशमालक्ष्य सिंहो वा पन्नगं गरुडो यथा।
न चिन्तयति तं वाली रावणं पापनिश्चयम् ॥ १५ ॥
जिघृक्षमाणमायान्तं रावणं पापचेतसम्।
कक्षावलम्बिनं कृत्वा गमिष्ये त्रीन् महार्णवान् ॥ १६ ॥

जगच्चित्रं सर्वाश्चर्यभूतम्। इमं वालिनं पश्य। दुर्लभं ते भवि-ष्यति। जीवितमिति शेषः ॥ ९ ॥ १० ॥
तारम्। ताराद्रीनित्यर्थः ॥ ११ ॥
संध्योपासनतत्परं सम्यग्ध्येयब्रह्मध्यानतत्परम् ॥ १२ ॥
निःशब्दपदं निःशब्दः पदविक्षेपो यस्यां क्रियायां तथा ॥ १३ ॥
पापाभिप्रायकं पापाभिप्रायवन्तम् ॥ १४ ॥
सिंहो वा सिंह इव ॥ १५ ॥
जिघृक्षमाणमित्यादिरित्येवमित्यन्तो वालिनो विचारः ॥ १६ ॥

द्रक्ष्यन्त्यरिं ममाङ्कस्थं स्रंसदूरुकराम्बरम् ।
लम्बमानं दशग्रीवं गरुड़स्येव पन्नगम् ॥ १७ ॥
इत्येवं मतिमास्थाय वाली मौनमुपास्थित: ।
जपन् वै नैगमान् मन्त्रांस्तस्थौ पर्वतराड़िव ॥ १८ ॥
तावन्योऽन्यं जिघृक्षन्तौ हरिराक्षसपार्थिवौ ।
प्रयत्नवन्तौ तत् कर्म ईहतुर्बलदर्पितौ ॥ १९ ॥
हस्तग्राह्यं तु तं मत्वा पादशब्देन रावणम् ।
पराङ्मुखोऽपि जग्राह वाली सर्पमिवाण्डज: ॥ २० ॥
ग्रहीतुकामं तं गृह्य रक्षसामीश्वरं हरि: ।
खमुत्पपात वेगेन कृत्वा कक्षावलम्बिनम् ॥ २१ ॥
तस्य पीड़यमानं तु वितुदन्तं नखैर्मुहु: ।
जहार रावणं वाली पवनस्तोतदं यथा ॥ २२ ॥

द्रक्ष्यन्ति देवादय इति शेषः । ममाङ्कस्थं कक्षस्थमित्यर्थः । स्रंसत् स्रंसमानानि ऊरुकरावम्बरं वस्त्रञ्च यस्य तम् । गरुड़स्येति । कक्षस्थमित्यनुकर्षः ॥ १७ ॥

नैगमान् वैदिकान् । वाल्यादयो हि स्वयंप्रतिभातसकलवेदाः । जपंस्तदर्थं ध्यायन् ॥ १८ ॥

तत् कर्म ग्रहणकर्म ॥ १९ ॥

हस्तग्राह्यं हस्तेर्ग्रहणाभिप्रायवन्तं पादशब्देन मत्वा सुग्रीवं पादशब्देन पश्चादायान्तं ज्ञात्वा पराङ्मुखोऽपि तद्दिगवलोकनरहितोऽपि ।

अथ ते राक्षसामात्या ह्रियमाणे दशानने ।
मुमोक्षयिषवो वालिं रवमाणा अभिद्रुताः ॥ २३ ॥
अन्वीयमानस्तैर्वाली भ्राजतेऽम्बरमध्यगः ।
अन्वीयमानो मेघौघैरम्बरस्थ इवांशुमान् ॥ २४ ॥
तेऽशक्नुवन्तः संप्राप्तं वालिनं राक्षसोत्तमाः ।
तस्य बाहूरुवेगेन परिश्रान्ता व्यवस्थिताः ॥ २५ ॥
वालिमार्गादपाक्रामन् पर्वतेन्द्रापि गच्छतः ।
किं पुनर्जीवितप्रेप्सुर्बिभ्रद्वै मांसशोणितम् ॥ २६ ॥
अपक्षिगणसंपातान् वानरेन्द्रो महाजवः ।
क्रमशः सागरान् सर्वान् सन्ध्याकालमवन्दत ॥ २७ ॥

हस्तग्राह्यमिति पाठे रावणपादशब्देन तादृशं सत्वमित्यर्थः । अण्डजो गरुडः ॥ २० ॥ २१ ॥ २२ ॥

मुमोक्षयिषव इति । मोक्षशब्दात्तत् करोतीति ण्यन्तात् सन् । रवमाणाः क्रोशन्तः ॥ २३ ॥ २४ ॥

अशक्नुवन्त इति पदम् ॥ २५ ॥

यतः पर्वतेन्द्रा अपि वालिमार्गादपाक्रामन् । मांसशोणितं बिभ्रज्जीवितप्रेप्सुः प्राणी तस्य मार्गादपक्रामतीति किं वक्तव्यम् ॥ २६ ॥

अपक्षिगणसम्पातान् यावता कालेन वाली गच्छति तावता कालेन पक्षिगणैरप्राप्यान् सागरान् क्रमशो गच्छन्निति शेषः । सन्ध्याकालं प्रातःसन्ध्याकालध्येयदेवतारूपं ब्रह्मावन्दत ध्यातवान् ॥ २७ ॥

संपूज्यमानो यातस्तु खचरैः खचरोत्तमः ।
पश्चिमं सागरं वाली आजगाम सरावणः ॥ २८ ॥
तस्मिन् सन्ध्यामुपासित्वा स्नात्वा जप्त्वा च वानरः ।
उत्तरं सागरं प्रायाद्वहमानो दशाननम् ॥ २९ ॥
बहुयोजनसाहस्रं वहमानो महाहरिः ।
वायुवच्च मनोवच्च जगाम सह शत्रुणा ॥ ३० ॥
उत्तरे सागरे सन्ध्यामुपासित्वा दशाननम् ।

सरावणः कक्षस्थरावणसहितः ॥ २८ ॥

तस्मिन् सन्ध्यामुपासित्वा स्नात्वेत्यादि । दक्षिणसमुद्रतटेऽपि जपन् वै नैगमान् मन्त्रानित्युक्तेः समुद्रचतुष्टयेऽपि प्रातःसन्ध्याकालस्य उदयात् पूर्वं परतश्च मिलित्वा त्रिमुहूर्तात्मकस्य मध्ये चतुःसमुद्रतटावच्छेदेन किञ्चित् किञ्चित् कालं ध्येयब्रह्मणो ध्याननियमस्तत्प्रतिपादकमन्त्रस्मरण-नियमश्च वालिन इति गम्यते । ईदृशं व्रतञ्च महेन्द्रो रावणस्य समूल-नाशाय पुत्रद्वारानुतिष्ठति इति बोध्यम् । यत्तु तस्य दक्षिणसमुद्रे शौचं पश्चिमे स्नानमुत्तरे आपोहिष्ठादिमन्त्रैर्मार्जनं पूर्वसमुद्रेऽर्घ्यादीत्येवं सन्ध्यावन्दनशेषानुष्ठानत्वाच्चतुर्षु समुद्रेषु सन्ध्यामन्वास्तेत्युक्तिरिति कतक तीर्थादयस्तज्जपन् वै नैगमान् मन्त्रानिति दक्षिणसमुद्रस्नानकालोक्त्या विरुध्यते । मदुक्तरीत्यासामञ्जस्याच्च । सन्ध्याकाले गायत्र्यर्थब्रह्मणो ध्यानमेव प्रधानं स एव सन्ध्यापदार्थ इति स्पष्टं श्रुतिस्मृतिविदाम् ॥ ॥ २९ ॥ ३० ॥ ३१ ॥

वहमानोऽगमद्वाली पूर्वं वै स महोदधिम् ॥ ३१ ॥
तत्रापि सन्ध्यामन्वास्य वासविः स हरीश्वरः।
किष्किन्धामभितो गृह्य रावणं पुनरागमत् ॥ ३२ ॥
चतुर्ष्वपि समुद्रेषु सन्ध्यामन्वास्य वानरः।
रावणोद्वहनश्रान्तः किष्किन्धोपवनेऽपतत् ॥ ३३ ॥
रावणं तु समोचाथ स्वकचात् कपिसत्तमः।
कुतस्त्वमिति चोवाच प्रहसन् रावणं मुहुः ॥ ३४ ॥
विस्मयं तु महद् गत्वा श्रमलोलनिरीक्षणः।
राक्षसेन्द्रो हरीन्द्रन्तमिदं वचनमब्रवीत् ॥ ३५ ॥
वानरेन्द्र! महेन्द्राभ! राक्षसेन्द्रोऽस्मि रावणः।
युद्धेप्सुरिह संप्राप्तः स चाद्यासादितस्त्वया ॥ ३६ ॥
अहो बलमहो वीर्य्यमहो गाम्भीर्य्यमेव च।
येनाहं पशुवद् गृह्य भ्रामितश्चतुरोऽर्णवान् ॥ ३७ ॥
एवमश्रान्तवद्वीर! शीघ्रमेव च वानर!।
मां चैवोद्वहमानस्तु कोऽन्यो वीर! भविष्यति ॥ ३८ ॥

वासवस्यापत्यं वासविः ॥ ३२ ॥ ३३ ॥

प्रहसन्निति। मां जिघृक्षुर्दुरात्मा स्वयमेव ग्रहणं प्राप्त इति तोषात् प्रहासः ॥ ३४ ॥ ३५ ॥

आसादितः कक्षनिक्षेपं प्रापितः ॥ ३६ ॥ ३७ ॥

चयाणामेव भूतानां गतिरेषा प्लवङ्गम!।
मनोऽनिलसुपर्णानां तव चात्र न संशयः॥ ३९ ॥
सोऽहं दृष्टबलस्तुभ्यमिच्छामि हरिपुङ्गव!।
त्वया सह चिरं सख्यं सुस्निग्धं पावकाग्रतः॥ ४० ॥
दाराः पुत्राः पुरं राष्ट्रं भोगाच्छादनभोजनम्।
सर्वमेवाविभक्तं नौ भविष्यति हरीश्वर!॥ ४१ ॥
ततः प्रज्वालयित्वाग्निं तावुभौ हरिराक्षसौ।
भ्रातृत्वमुपसम्पन्नौ परिष्वज्य परस्परम्॥ ४२ ॥
अन्योऽन्यं लम्बितकरौ ततस्तौ हरिराक्षसौ।
किष्किन्धां विशतुर्हृष्टौ सिंहौ गिरिगुहामिव॥ ४३ ॥
स तत्र मासमुषितः सुग्रीव इव रावणः।
अमात्यैरागतैर्नीतस्त्रैलोक्योत्सादनार्थिभिः॥ ४४ ॥
एवमेतत् पुरा वृत्तं वालिना रावणः प्रभो!।
धर्षितश्च कृतश्चापि भ्राता पावकसन्निधौ॥ ४५ ॥
बलमप्रतिमं राम! वालिनोऽभवदुत्तमम्।

अश्रान्तवदश्रान्तः सन्। मां पर्वतप्रमाणभारम्॥ ३८। ३९॥
तुभ्यं तव॥ ४०॥
नौ आवयोः॥ ४१। ४२॥ ४३॥
आगतैः सहेति शेषः॥ ४४॥

सोऽपि त्वया विनिर्दग्धः शलभो वह्निना यथा ॥ ४६ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
चतुस्त्रिंशः सर्गः ॥ ३४ ॥

धर्षितो वालिना रावणः। पश्चात् पावकनिकटे भ्राता कृतः सोदर-भावतया सख्यः कृतः ॥ ४५ ॥ ४६ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥




## पञ्चत्रिंशः सर्गः।

अपृच्छत तदा रामो दक्षिणाशाश्रयं मुनिम्।
प्राञ्जलिर्विनयोपेत इदमाह वचोऽर्थवत्॥ १॥
अतुलं बलमेतद्वै वालिनो रावणस्य च।
न त्वेताभ्यां हनुमता समन्त्विति मतिर्मम॥ २॥
शौर्यं दाक्ष्यं बलं धैर्यं प्राज्ञता नयसाधनम्।
विक्रमश्च प्रभावश्च हनूमति कृतालयाः॥ ३॥
दृष्ट्वैव सागरं वीक्ष्य सीदन्तीं कपिवाहिनीम्।
समाश्वास्य महाबाहुर्योजनानां शतं प्लुतः॥ ४॥

अपृच्छतेति। दक्षिणाशा दक्षिणदिक्। अपृच्छतेत्यस्य विवरणमिदमाहेति॥ १॥

अतुलमनुपमम्। एताभ्यां एतयोः। षष्ठ्यर्थे चतुर्थी आर्षी। एतयोर्बलं हनूमता तद्बलेन न सममित्यर्थः॥ २॥

न केवलं बलमेवाधिकं किं त्वन्यदपीत्याह। शौर्यमिति। दाक्ष्यं क्षिप्रकारित्वम्। बलं शारीरम्। धैर्यं केनाप्यप्रकम्प्यता। प्राज्ञता धीः कार्याकार्यनिर्णेतृता। नयसाधनं राजनीतिशास्त्रसंपादनम्॥ ३॥

धर्षयित्वा पुरीं लङ्कां रावणान्तःपुरं तदा ॥
दृष्टा संभाषिता चापि सीता ह्याश्वासिता तथा ॥ ५ ॥
येनाग्रगा मन्त्रिसुताः किङ्करा रावणात्मजः।
एते हनुमता तत्र एकेन विनिपातिताः ॥ ६ ॥
भूयोबन्धाद्विमुक्तेन भाषयित्वा दशाननम्।
लङ्का भस्मीकृता येन पावकेनेव मेदिनी ॥ ७ ॥
न कालस्य न शक्रस्य न विष्णोर्वित्तपस्य च।
कर्माणि तानि श्रूयन्ते यानि युद्धे हनूमतः ॥ ८ ॥
एतस्य बाहुवीर्येण लङ्का सीता च लक्ष्मणः।
प्राप्ता मया जयश्चैव राज्यं मित्राणि बान्धवाः ॥ ९ ॥
हनूमान्यदि मे न स्याद्वानराधिपतेः सखा।
प्रवृत्तिमपि को वेत्तुं जानक्याः शक्तिमान् भवेत् ॥ १० ॥

तमेव गुणमाह। दृष्टेवेति ॥ सागरं वीक्ष्य सीदन्तीं कपिवाहिनीं दृष्ट्वा तां समाश्वास्य योजनशतं प्लुतः ॥ ४ ॥ ॥ ५ ॥ ६ ॥
बन्धाद् ब्रह्मास्त्रबन्धात् ॥ ७ ॥
यानि कर्माणि हनूमतोदृष्टानि तानि कालस्य यमस्येन्द्रादेश्च न श्रूयन्ते ॥ ८ ॥
लङ्का प्राप्ता। विभीषणाय देयत्वेन प्रतिज्ञातेत्यर्थः। लक्ष्मणप्राप्तिरौषधपर्वतानयनेन ॥ ९ ॥
तस्मात्स्तुवाच इति शेषः ॥ १० ॥

किमर्थं वाली चैतेन सुग्रीवप्रियकाम्यया ।
तदा वैरे समुत्पन्ने न दग्धो वीरुधो यथा ॥ ११ ॥
न हि वेदितवान्मन्ये हनूमानात्मनो बलम् ।
यद्दृष्टवान् जीवितेष्टं क्लिश्यन्तं वानराधिपम् ॥ १२ ॥
एतन्मे भगवन् ! सर्वं हनूमति महामुने ! ।
विस्तरेण यथातत्त्वं कथयामरपूजित ! ॥ १३ ॥
राघवस्य वचः श्रुत्वा हेतुयुक्तमृषिस्ततः ।
हनूमतः समक्षन्तमिदं वचनमब्रवीत् ॥ १४ ॥
सत्यमेतद्रघुश्रेष्ठ ! यद्ब्रवीषि हनूमति ।
न बले विद्यते तुल्यो न गतौ न मतौ परः ॥ १५ ॥
अमोघशापैः शापस्तु दत्तोऽस्य मुनिभिः पुरा ।
न वेत्ता हि बलं सर्वं बली सन्नरिमर्दन ! ॥ १६ ॥

वीरुध इत्यकारान्तो लतावाची । किमर्थं वालिघातेनेति पाठे सुग्रीवप्रियकाम्यया वालिघाते किमर्थं न प्रवृत्त इत्यर्थः । पदच्छेद-शेषपूरणाभ्यां गूढत्वादस्यैव विवरणम् । तदावैर इत्यादि ॥ ११ ॥

वाल्यहनने हेतुं स्वयमेव राम ऊहति । नहीति । जीवितेष्टं जीवितादपि प्रियम् ॥ १२ ॥

हनूमति तद्विषये एवमेतत् सर्वं कथयेत्यन्वयः ॥ १२ ॥ १३ ॥

यद्ब्रवीषीति । आत्मनो बलं न जानातीत्येतत् न बल इति च ॥ १५ ॥

बाल्येऽप्येतेन यत्कर्म कृतं राम ! महाबल ! ।
तन्न वर्णयितुं शक्यमिति बाल्यतयास्यते ॥ १७ ॥
यदिवास्ति त्वभिप्रायः संश्रोतुं तव राघव ! ।
समाधाय मतिं राम ! निशामय वदाम्यहम् ॥ १८ ॥
सूर्यदत्तवरस्वर्णः सुमेरुर्नाम पर्वतः ।
यत्र राज्यं प्रशास्त्यस्य केसरी नाम वै पिता ॥ १९ ॥
तस्य भार्या बभूवेष्टा ह्यञ्जनेति परिश्रुता ।
जनयामास तस्यां वै वायुरात्मजमुत्तमम् ॥ २० ॥
शालिशूकनिभाभासं प्रासूतेमन्तदाञ्जना ।
फलान्याहर्तुकामा वै निष्क्रान्ता गहने वरा ॥ २१ ॥
एष मातुर्वियोगाच्च क्षुधया च भृशार्दितः ।
रुरोद शिशुरत्यर्थं शिशुः शरवणे यथा ॥ २२ ॥
ततोद्यन्तं विवस्वन्तं जपापुष्पोत्करोपमम् ।

तदेवाह । अमोघेति ॥ १६ ॥
बाल्यतया बाल्यभावेन । अज्ञानतयेत्यर्थः । अनेनास्यते ॥ १७ ॥
निशामय शृणु ॥ १८ ॥
सूर्यदत्तवरेण स्वर्णः स्वर्णरूपः सुमेरुः सावर्णमेरुः ॥ १९ ॥
परिश्रुता प्रसिद्धा ॥ २० ॥
शालिशूकनिभाभासं शाल्यग्रसमानवर्णम् । प्रासूत प्रसूतवती ॥२१॥

ददर्श फललोभाच्च ह्युत्पपात रविं प्रति ॥ २३ ॥
बालार्काभिमुखोबालो बालार्कइव मूर्त्तिमान् ।
गृहीतुकामो बालार्कं प्लवतेऽम्बरमध्यगः ॥ २४ ॥
एतस्मिन् प्लवमाने तु शिशुभावे हनूमति ।
देवदानवयक्षाणां विस्मयः सुमहानभूत् ॥ २५ ॥
नाप्येवं वेगवान्वायुर्गरुडो न मनस्तथा ।
यथायम्वायुपुत्रस्तु क्रमतेऽम्बरमुत्तमम् ॥ २६ ॥
यदि तावच्छिशोरस्य ईदृशो गतिविक्रमः ।
यौवनं बलमासाद्य कथं वेगो भविष्यति ॥ २७ ॥
तमनुप्लवते वायुः प्लवन्तं पुत्रमात्मनः ।
सूर्यदाहभयाद्रक्षंस्तुषारचयशीतलः ॥ २८ ॥
बहुयोजनसाहस्रं क्रामत्येव गतोऽम्बरम् ।
पितुर्बलाच्च बाल्याच्च भास्कराभ्याशमागतः ॥ २९ ॥
शिशुरेष त्वदोषज्ञ इति मत्वा दिवाकरः ।
कार्यं चास्मिन् समायत्तमित्येवं न ददाह सः ॥ ३० ॥
यमेव दिवसं ह्येष गृहीतुं भास्करं प्लुतः ।

शरवणे शिशुः कुमारस्वामीत्यर्थः ॥ २२ ॥ २३ ॥ २४ ॥
शिशुभावे बाल्यावस्थायां हनूमति प्लवमाने सति ॥ २५ ॥ २६ ॥
॥ २७ ॥ २८ ॥ २९ ॥

तमेव दिवसं राहुर्जिघृक्षति दिवाकरम् ॥ ३१ ॥
अनेन च परामृष्टो राहुः सूर्यरथोपरि ।
अपक्रान्तस्ततस्त्रस्तो राहुश्चन्द्रार्कमर्दनः ॥ ३२ ॥
इन्द्रस्य भवनं गत्वा सरोषः सिंहिकासुतः ।
अब्रवीद्भ्रुकुटिं कृत्वा देव देवगणैर्वृतम् ॥ ३३ ॥
बुभुक्षापनयं दत्त्वा चन्द्रार्कौ मम वासव ! ।
किमिदं तत्त्वया दत्तमन्यस्य बलवृत्रहन् ! ॥ ३४ ॥
अद्याहं पर्वकाले तु जिघृक्षुः सूर्यमागतः ।
अथान्यो राहुरासाद्य जग्राह सहसा रविम् ॥ ३५ ॥
स राहोर्वचनं श्रुत्वा वासवः संभ्रमान्वितः ।
उत्पपातासनं हित्वा उद्वहन् काञ्चनीं स्रजम् ॥ ३६ ॥
ततः कैलासकूटाभं चतुर्दन्तं मदस्रवम् ।
शृङ्गारधारिणं प्रांशुं स्वर्णघण्टाट्टहासिनम् ॥ ३७ ॥

दोषश्चोऽविद्यात स न भवतीत्यद्दोषश्चतत्त्वहेतुः । जिघृक्षुरिति ॥ ३० ॥ ॥ ३१ ॥

सूर्यरथोपरि तदुपरितनप्रदेशे । अनेन हनूमता परामृष्टः स्पृष्टो राहुस्ततो भयत्रस्तः सन्नपक्रान्तः ॥ ३२ ॥ ३३ ॥

हे वासव चन्द्रार्कौ मम यथाकालं बुभुक्षापनयं बुभुक्षापनीयतेऽनेनेति क्षुत्त्राणं दत्त्वा तद्दत्तम् ॥ ३४ ॥ ३५ ॥ ३६ ॥

इन्द्रः करीन्द्रमारुह्य राहुं कृत्वा पुरःसरम्।
प्रायाद्यत्राभवत्सूर्यः सहानेन हनूमता ॥ ३८ ॥
अथातिरभसेनागाद्राहुरुत्सृज्य वासवम्।
अनेन च स वै दृष्टः प्रधावन् शैलकूटवत् ॥ ३९ ॥
ततः सूर्यं समुत्सृज्य राहुं फलमवेक्ष्य च।
उत्पपात पुनर्व्योम ग्रहीतुं सिंहिकासुतम् ॥ ४० ॥
उत्सृज्यार्कमिमं राम! प्रधावन्तं प्लवङ्गमम्।
अवेक्ष्यैवम्पराहृत्तो मुखशेषः पराङ्मुखः ॥ ४१ ॥
इन्द्रमाशंसमानस्तु त्रातारं सिंहिकासुतः।
इन्द्र इन्द्रेति संत्रासान् मुहुर्मुहुरभाषत ॥ ४२ ॥
राहोर्विक्रोशमानस्य प्रागेवालक्षितं स्वरम्।
श्रुत्वेन्द्रो वाचमाभैषीरहमेनं निषूदये ॥ ४३ ॥

अहङ्कारधारिणं नानाऽहङ्कारधारिणम्। सर्वांशयाज्ञामन्त्रस्वरूपा-
दृष्टासवन्तम् ॥ ३७ ॥

करीन्द्रमैरावतम्। अनेन हनूमता सह यत्र देशे सूर्यस्तत्रायात्
॥ ३८ ॥

अतिरभसेनातिवेगेनागात्। वासवादपि पूर्वमिति शेषः। अनेन
हनूमता। स राहुः ॥ ३९ ॥ ४० ॥

एवमवेक्ष्य महाशैलकूटवदुन्नतरमवेक्ष्य। मुखशेष इति राहोः
स्वरूपकथनम् ॥ ४१ ॥ ४२ ॥

ऐरावतं ततोऽदृष्ट्वा महत्फलमिदमित्यपि ।
फलं तं हस्तिराजानमभिदुद्राव मारुतिः ॥ ४४ ॥
तथास्य धावतो रूपमैरावतजिघृक्षया ।
मुहूर्तमभवद्घोरमिन्द्राग्निपरिभास्वरम् ॥ ४५ ॥
एवमाधावमानं तु नातिक्रुद्धः शचीपतिः ।
हस्तांतादतिमुक्तेन कुलिशेनाभ्यताडयत् ॥ ४६ ॥
ततो गिरौ पपातैष इन्द्रवज्राभिताडितः ।
पतमानस्य चैतस्य वामा हनुरभज्यत ॥ ४७ ॥
तस्मिंस्तु पतिते चापि वज्रताडनविह्वले ।
चुक्रोधेन्द्राय पवनः प्रजानामहिताय सः ॥ ४८ ॥
प्रचारं स तु संगृह्य प्रजास्वन्तर्गतः प्रभुः ।
गुहां प्रविष्टः स्वसुतं शिशुमादाय मारुतः ॥ ४९ ॥

प्रागेवाभ्यस्तं स्वरं राहुदर्शनात् पूर्वमेवायं राहोः स्वर इति निश्चितम् ॥ ४३ ॥

इदमपि महत्फलमिति मत्वा । हस्तिराजानं ऐरावतम् ॥४४॥ ४५ ॥

हस्तांतात् हस्ताग्रात् ॥ ४६ ॥

वामा हनुः । हनुशब्दः स्त्रियाम् । तत्परा हनुरिति कोशात् ॥४७॥ ॥ ४८ ॥

प्रचारं देहिमध्यस्थितभूतं स्वप्रचारम् । संगृह्य संक्षिप्य । अन्तर्गतः सर्वदेहान्तर्गतः प्रभुः सर्वजगत्प्रवृत्तिनिवृत्तिकर्ता ॥ ४९ ॥

विण्मूत्राशयमावृत्य प्रजानां परमातिष्ठत् ।
रुरोध सर्वभूतानि यथा वर्षाणि वासवः ॥ ५० ॥
वायुप्रकोपाद्भूतानि निरुच्छ्वासानि सर्वतः ।
सन्धिभिर्भिद्यमानैश्च काष्ठभूतानि जज्ञिरे ॥ ५१ ॥
निःस्वाध्यायवषट्कारं निष्क्रियं धर्मवर्जितम् ।
वायुप्रकोपात् त्रैलोक्यं निरयस्थमिवाभवत् ॥ ५२ ॥
ततः प्रजाः सगन्धर्वाः सदेवासुरमानुषाः ।
प्रजापतिं समाधावन् दुःखिताश्च सुखेच्छया ॥ ५३ ॥
ऊचुः प्राञ्जलयोदेवा महोदरनिभोदराः ।
त्वया तु भगवन् ! सृष्टाः प्रजानाथ ! चतुर्विधाः ॥ ५४ ॥
त्वया दत्तोयमस्माकमायुषः पवनः पतिः ।
सोस्मान् प्राणेश्वरो भूत्वा कस्मादेषोऽद्य सत्तम ॥ ५५ ॥
रुरोध दुःखं जनयन्नन्तःपुर इव स्त्रियः ।

रुरोध निरुद्धस्वगतिप्रचारमकरोत् । एवम्बिधार्थस्य देवप्रश्नत्वे दृष्टांतोयथेति । वासवो यथा वर्षाण्यावृत्य रुन्धे ॥ ५० ॥ ५१ ॥

स्वाध्यायो वेदाध्ययनम् । वषट्कारोयागः । निष्क्रियं संसारशून्यम् निरयस्थमिव । अतिशयित दुःखवदित्यर्थः ॥ ५२ ॥ ५३ ॥

महोदरेति । महोदररोगग्रस्तोदरवदुदरं येषान्ते ॥ ५४ ॥ ५५ ॥ ॥ ५६ ॥ ५७ ॥

तस्मात्त्वां शरणं प्राप्ता वायुनोपहता वयम् ॥ ५६ ॥
वायुसंरोधजं दुःखमिदन्नो नुद दुःखहन् ! ।
एतत्प्रजानां श्रुत्वा तु प्रजानाथः प्रजापतिः ॥ ५७ ॥
कारणादिति चोक्त्वासौ प्रजाः पुनरभाषत ।
यस्मिंश्च कारणे वायुश्चुक्रोध च रुरोध च ॥ ५८ ॥
प्रजाः शृणुध्वन्तत्सर्वं श्रोतव्यं चात्मनः क्षमम् ।
पुत्रस्तस्यामरेशेन इन्द्रेणाद्य निपातितः ॥ ५९ ॥
राहोर्वचनमास्थाय ततः स कुपितोऽनिलः ।
अशरीरः शरीरेषु वायुश्चरति पालयन् ॥ ६० ॥
शरीरं हि विना वायुं समतां याति दारुभिः ।
वायुः प्राणः सुखं वायुर्वायुः सर्वमिदं जगत् ॥ ६१ ॥
वायुना संपरित्यक्तं न सुखं विन्दते जगत् ।
अद्यैव च परित्यक्तं वायुना जगदायुषा ॥ ६२ ॥
अद्यैव ते निरुच्छ्वासाः काष्ठकुड्योपमाः स्थिताः ।
तद्यामस्तत्र यत्रास्ते मारुतो रुक्प्रदो हि नः ।
मा विनाशं गमिष्याम अप्रसाद्यादितेः सुतम् ॥ ६३ ॥

कारणादिति उक्त्वा किञ्चित्कारणमस्तीत्युक्त्वा यस्मिन् कारणे वायुश्चुक्रोध तत्कारणं पुनरभाषत । ५८ ॥ ५९ ॥ ६० ॥

दारुभिः समतां याति । क्षणमपि न चलतीत्यर्थः ॥ ६१ ॥ ६२ ॥

ततः प्रजाभिः सहितः प्रजापतिः
सदेवगन्धर्वभुजङ्गगुह्यकैः ।
जगाम यत्रास्यति तत्र मारुतः
सुतं सुरेन्द्राभिहतं प्रगृह्य सः ॥ ६४ ॥
ततोर्कवैश्वानरकाञ्चनप्रभं
सुतं तदोत्सङ्गगतं सदागतेः ।
चतुर्मुखोवीक्ष्य कृपामथाकरोत्
सदेवगन्धर्वर्षियक्षराक्षसैः ॥ ६५ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
पञ्चत्रिंशः सर्गः ॥ ३५ ॥

रुक्प्रदःशूलादिरोगप्रदः । गमिष्याम अप्रसाद्येत्यसन्धिरार्षः ॥ ६३ ॥
आस्यति आस्ते । ६४ ।
सदागतेर्वायोः । गन्धर्वर्षियक्षेति गुरुलघुभेद आर्षः । ६५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥



मांसानि च सुमृष्टानि फलानि विविधानि च ॥ १९ ॥
रामस्याभ्यवहारार्थं किङ्करास्तूर्णमाहरन्।
उपानृत्यंश्च राजानं नृत्यगीतविशारदाः ॥ २० ॥
अप्सरोरगसङ्घाश्च किन्नरीपरिवारिताः।
दक्षिणा रूपवत्यश्च स्त्रियः पानवशङ्गताः ॥ २१ ॥
उपानृत्यन्त काकुत्स्थं नृत्यगीतविशारदाः।
मनोभिरामा रामास्ता रामो रमयतांवरः ॥ २२ ॥
रमयामास धर्मात्मा नित्यं परमभूषिताः।
स तया सीतया सार्धमासीनो विरराज ह ॥ २३ ॥
अरुन्धत्या इवासीनो वशिष्ठ इव तेजसा।
एवं रामो मुदा युक्तः सीतां सुरसुतोपमाम् ॥ २४ ॥
रमयामास वैदेहीमहन्यहनि देववत्।
तथा तयोर्विहरतोः सीताराघवयोश्चिरम् ॥ २५ ॥
अत्यक्रामच्छुभः कालः शैशिरो भोगदः सदा।
दशवर्षसहस्राणि गतानि सुमहात्मनोः ॥

कुशास्तरणं नामोपर्य्यास्तरणम्। मैरेयकं मधु मैरेयकसंज्ञकं मधु मद्यम्। मैरेयमासवो धात्री धातकी गुड़वारिभिरिति वैजयन्ती ॥१८॥१९
राजानमुपानृत्यन् राजसमीपेऽनृत्यन् ॥ २० ॥
दक्षिणाः कुशलाः। पानवशङ्गताः पानजमदवशङ्गताः ॥ २१ ॥ २२॥
रमयामास तोषयामास ॥ २३ ॥ २४ ॥ २५ ॥

प्राप्तयोर्विविधान् भोगानतीतः शिशिरागमः ॥ २६ ॥
पूर्व्वाह्णे धर्मकार्य्याणि कृत्वा धर्म्मेण धर्म्मवित् । पौर्वाह्णिकानि वै ।
श्वश्रूणामकरोत्पूजां सर्वासामविशेषतः ॥ २८ ॥
अभ्यगच्छत्ततो रामं विचित्राभरणाम्बरा ।
त्रिविष्टपे सहस्राक्षमुपविष्टं यथा शची ॥ २९ ॥
दृष्ट्वा तु राघवः पत्नीं कल्याणेन समन्विताम् ।
प्रहर्षमतुलं लेभे साधु साध्विति चाब्रवीत् ॥ ३० ॥
अब्रवीच्च वरारोहां सीतां सुरसुतोपमाम् ।
अपत्यलाभो वैदेहि ! त्वय्ययं समुपस्थितः ॥ ३१ ॥
किमिच्छसि वरारोहे ! कामः किं क्रियतां तव ।

सीताराघवयोश्चिरमित्यनन्तरम् अत्यन्तामच्छुभः कालः शैशिरो भोगदः सदेत्येव श्लोकः । वानराणां गमनोत्तरं पुनश्च संवत्सरोऽतीत इति कतकव्याख्यानात् । दशवर्षसहस्राणि गतानि सुमहात्मनोरिति प्रक्षिप्तमिति गम्यते । मा निषादप्रतिष्ठान्त्वमगमः शाश्वतीः समा इति वाल्मीकिशापाच्च । सीतात्यागोत्तरमश्वमेधप्रवृत्त्या तदन्ते दशवर्षसहस्राणि वाजिमेधानथाकरोदिति वाल्मीकिरुक्तश्च । यद्वा वर्षशब्दो-दिनपरः । विवाहोत्तरं तावन्ति गतानि द्वादशादधिकमयोध्यायां चतुर्दशवने एकं पुनरयोध्यायामित्येवं किञ्चिदधिकसप्तविंशतिगतानीति बोध्यम् । पूर्वाह्णे द्विधाभागनेरं तदाह,—शेषं दिवसभागार्धमिति । अवशिष्टमर्धमित्यर्थः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

ममापत्यलाभस्त्वयि समुपस्थितः गर्भलक्षणं तव स्पष्टं वर्त्तत इत्यर्थः ॥ ३१ ॥

स्मितं कृत्वा तु वैदेही रामं वाक्यमथाब्रवीत् ॥ २२ ॥
तपोवनानि पुण्यानि द्रष्टुमिच्छामि राघव ।
गङ्गातीरोपविष्टानामृषीणामुग्रतेजसाम् ॥ २३ ॥
फलमूलाशिनां देव ! पादमूलेषु वर्त्तितुम् ।
एष मे परमः कामो यन्मूलफलभोजिनाम् ॥ २४ ॥
अप्येकरात्रिं काकुत्स्थो निवसेयं तपोवने ।
तथेति च प्रतिज्ञातं रामेणाक्लिष्टकर्मणा ॥
विस्रब्धा भव वैदेहि ! श्वोगमिष्यस्यसंशयम् ॥ २५ ॥
एवमुक्त्वा तु काकुत्स्थो मैथिलीं जनकात्मजाम् ।
मध्यकक्षान्तरं रामो निर्जगाम सुहृद्वृतः ॥ २६ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
एकचत्वारिंशः सर्गः ॥ ४१ ॥

किं कामः किं विषयो मनोरथः । स्मितं कृत्वा स्वावतारकृत्यं पूर्णमिति ऋष्यशापस्य सत्यत्वकरणोचितत्वञ्च हासेन सूचितम् ॥ २२ ॥ २३ ॥ २४ ॥

अप्येकरात्रिमित्यनेन चिरकालवासमनोरथो ध्वनितः ॥ २५ ॥

विस्रब्धा भव महाराजो महिषीं मां कथमाश्रमं प्रेषयिष्यतीति शङ्कां माकुर्वित्यर्थः ॥ २६ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

## त्रिचत्वारिंशः सर्गः ।



तत्रोपविष्टं राजानमुपासन्ते विचक्षणाः ।
कथानां बहुरूपाणां हास्यकाराः समन्ततः ॥ १ ॥
विजयो मधुमत्तश्च काश्यपो मङ्गलः कुलः ।
सुराजिः कालियो भद्रो दन्तवक्रः सुमागधः ॥ २ ॥
एते कथा बहुविधाः परिहाससमन्विताः ।
कथयन्ति स्म संहृष्टा राघवस्य महात्मनः ॥ ३ ॥
ततः कथायां कस्याञ्चिद्राघवः समभाषत ।
काः कथा नगरे भद्र ! वर्त्तन्ते विषयेषु च ॥ ४ ॥
मामाश्रितानि कान्याहुः पौरजानपदा जनाः ।
किञ्च सीतां समाश्रित्य भरतं किञ्च लक्ष्मणम् ॥ ५ ॥
किन्नु शत्रुघ्नमुद्दिश्य कैकेयीं किन्नु मातरम् ।

अथ कथाप्रसङ्गात् सीताप्रसङ्गेन स्वदोषश्रवणं रामस्य । तत्रेति । बहुरूपाणां कथानां प्रकथनद्वारेण हास्यकारा उपासन्ते ॥ १ ॥ २ ॥

कथाः वार्त्ताः ॥ ३ ॥

विषयेषु देशेषु इति सामान्यतः प्रश्नः ॥ ४ ॥

विशिष्य पृच्छति । मामाश्रितानि कानि वाक्यान्याहुः ॥ ५ ॥

वक्तव्यताञ्च राजानो वने राज्ये व्रजन्ति च ॥ ६ ॥
एवमुक्ते तु रामेण भद्रः प्राञ्जलिरब्रवीत् ।
स्थिताः शुभाः कथा राजन् ! वर्त्तन्ते पुरवासिनाम् ॥ ७ ॥
अयन्तु विजयं सौम्य ! दशग्रीववधार्जितम् ।
भूयिष्ठं स्वपुरे पौरैः कथ्यन्ते पुरुषर्षभ ! ॥ ८ ॥
एवमुक्तस्तु भद्रेण राघवो वाक्यमब्रवीत् ।
कथयस्व यथातत्त्वं सर्वं निरवशेषतः ॥ ९ ॥
शुभाशुभानि वाक्यानि कान्याहुः पुरवासिनः ।
श्रुत्वेदानीं शुभं कुर्य्यां न कुर्य्यामशुभानि च ॥ १० ॥

दूतमुखेन स्वदेशवृत्तान्ताज्ञाने राजानः सर्वजननिन्दाद्वारा नरकं प्राप्नुवन्तीत्याशयेनाह,—वक्तव्यताञ्चेति । वने तापसाश्रमे राज्ये च धर्मादिविचारहीना राजानो वक्तव्यतां सर्वजनकृतदुर्भाषणविषयतां व्रजन्ति ॥ ६ ॥

सर्वज्ञोऽप्यज्ञ इव भगवान् लोकापवादं भगवान् दयया सत्यं चिकीर्षुः सीतावियोगमिच्छन्निव देशवृत्तान्तं पृच्छति । गृहीतमनुष्यरूपतया व्यवहारानुसारेण लोकनिन्द्यं सदपि कर्म त्याज्यमिति बोधनायेति बोध्यम् । पुरवासिनां सम्बन्धितया स्थिताः कथाः शुभा वर्त्तन्त इति सम्बन्धः ॥ ७ ॥

विजयमिति । उद्दिश्येति शेषः । कथ्यन्ते वार्त्ता इति शेषः ॥ ८ ॥
निरवशेषतः शुभाशुभविषयं सर्वं कथयेत्यर्थः ॥ ९ ॥

कथयस्व च विस्रब्धो निर्भयं विगतज्वरः ।
कथयन्ति यथा पौराः पापा जनपदेषु च ॥ ११ ॥
राघवेणैव मुक्तस्तु भद्रः सुरुचिरं वचः ।
प्रत्युवाच महाबाहुं प्राञ्जलिः सुसमाहितः ॥ १२ ॥
शृणु राजन् ! यथा पौराः कथयन्ति शुभाशुभम् ।
चत्वरापणरथ्यासु वनेषूपवनेषु च ॥ १३ ॥
दुष्करं कृतवान् रामः समुद्रे सेतुबन्धनम् ।
अश्रुतं पूर्वकैः कैश्चिद्देवैरपि सदानवैः ॥ १४ ॥
रावणश्च दुराधर्षो हतः सबलवाहनः ।
वानराश्च वशन्नीता ऋक्षाश्च सह राक्षसैः ॥ १५ ॥
हत्वा च रावणं संख्ये सीतामाहृत्य राघवः ।
अमर्षं पृष्ठतः कृत्वा स्ववेश्म पुनरानयत् ॥ १६ ॥

नन्वशुभश्रवणे किं प्रयोजनं तत्राह,—शुभेत्यादि ॥ १० ॥

ननु राजसमक्षमशुभवाक्यकथनमशक्यमित्यत आह,—कथयस्वेति । निर्भयं विस्रब्धो मम किं रामो वदिष्यतीति भयशून्यं विश्वस्तः । विगतज्वरः एवमशुभं कथं वाच्यमिति मनःसन्तापशून्यः । पापाः पापानि । ॥ ११ ॥ १२ ॥ १३ ॥

पूर्वकैराजभिर्देवैरपि कृतमित्यश्रुतमश्रुतपूर्वम् ॥ १४ ॥ १५ ॥

सीतामाहृत्य ततोजातं सीताविषयं रावणस्पर्शजममर्षं क्रोधं पृष्ठतः कृत्वा । विस्मृत्येत्यर्थः ॥ १६ ॥

कीदृशं हृदये तस्य सीतासम्भोगजं सुखम्।
अङ्कमारोप्य तु पुरा रावणेन बलाद्धृताम्॥ १७॥
लङ्कामपि पुरा नीतामशोकवनिकाङ्गताम्।
रक्षसां वशमापन्नां कथं रामो न कुत्स्यति॥ १८॥
अस्माकमपि दारेषु सहनीयं भविष्यति।
यथा हि कुरुते राजा प्रजास्तमनुवर्त्तते॥ १९॥
एवं बहुविधा वाचो वदन्ति पुरवासिनः।
नगरेषु च सर्वेषु राजन्! जनपदेषु च॥ २०॥
तस्यैवं भाषितं श्रुत्वा राघवः परमार्त्तवत्।
उवाच सुहृदः सर्वान् कथमेतद्वदन्तु माम्॥ २१॥
सर्वे तु शिरसा भूमावभिवाद्य प्रणम्य च।
प्रत्यूचू राघवं दीनमेवमेतन्न संशयः॥ २२॥
श्रुत्वा तु वाक्यं काकुत्स्थः सर्वेषां समुदीरितम्।

कीदृशं सुखम्। कुत्सितमेवेत्यर्थः। तत्र हेतुरङ्कमित्यादि॥ १७॥ न कुत्स्यति न जुगुप्सते इत्यर्थः॥ १८॥

सहनीयं भविष्यति। एवम्विधं कश्मलमिति भावः। तत्र हेतुर्यथाहीति। प्रजास्तमनुवर्त्तते अनुवर्त्तन्ते॥ १९॥ २०॥

परमार्त्तवत्परमदुःखीवाकारं कृत्वा। वस्तुतो भगवति हर्षदुःखयोरभावादेवमुक्तिः। सर्वान् सुहृदो भद्रव्यतिरिक्तानपि। कथमेतत्

विसर्जयामास तदा वयस्यांश्चसूदन: ॥ २३ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
त्रिचत्वारिंश सर्ग: ॥ ४३ ॥

भद्रोक्तमेतदयशोवाक्यं तत्त्वमतत्त्वं वेति भवन्तोऽपि वदन्त्वित्युवाच।
भद्रोक्तमेव तत्त्वमेव ॥ २१ ॥ २२ ॥ २३ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे त्रिचत्वारिंश: सर्ग: ॥ ४३ ॥

# चतुश्चत्वारिंशः सर्गः।



विसृज्य तु सुहृद्वर्गं बुद्ध्या निश्चित्य राघवः।
समीपे द्वाःस्थमासीनमिदं वचनमब्रवीत्॥ १॥
शीघ्रमानय सौमित्रिं लक्ष्मणं शुभलक्षणम्।
भरतञ्च महाभागं शत्रुघ्नमपराजितम्॥ २॥
रामस्य वचनं श्रुत्वा द्वाःस्थो मूर्ध्नि कृताञ्जलिः।
लक्ष्मणस्य गृहं गत्वा प्रविवेशानिवारितः॥ ३॥
उवाच सुमहात्मानं वर्धयित्वा कृताञ्जलिः।
द्रष्टुमिच्छति राजा त्वां गम्यतां तत्र मा चिरम्॥ ४॥
बाढमित्येव सौमित्रिः कृत्वा राघवशासनम्।
प्राद्रवद्रथमारुह्य राघवस्य निवेशनम्॥ ५॥
प्रयान्तं लक्ष्मणं दृष्ट्वा द्वाःस्थो भरतमन्तिकात्।

अथ स्वचिकीर्षितकथनाय भ्रात्रानयनम्। विसृज्येति। निश्चित्य कार्त्तव्यमिति शेषः॥ १॥ २॥ ३॥

वर्धयित्वा जयाशिषेति शेषः। मा चिरम्। विलम्बो न कार्य्य इत्यर्थः॥ ४॥ ५॥

उवाच भरतं तत्र वर्धयित्वा कृताञ्जलिः ॥ ६ ॥
विनयावनतो भूत्वा राजा त्वां द्रष्टुमिच्छति।
भरतस्तु वचः श्रुत्वा द्वाःस्थाद्रामसमीरितम् ॥ ७ ॥
उत्पपातासनात्तूर्णं पद्भ्यामेव महाबलः।
दृष्ट्वा प्रयान्तं भरतं त्वरमाणः कृताञ्जलिः ॥ ८ ॥
शत्रुघ्नभवनं गत्वा ततो वाक्यमुवाच ह।
एह्यागच्छ रघुश्रेष्ठ! राजा त्वां द्रष्टुमिच्छति ॥ ९ ॥
गतो हि लक्ष्मणः पूर्वं भरतश्च महायशाः।
श्रुत्वा तु वचनं तस्य शत्रुघ्नः परमासनात् ॥ १० ॥
शिरसा वन्द्य धरणीं प्रययौ यत्र राघवः।
द्वाःस्थस्त्वागम्य रामाय सर्वानेव कृताञ्जलिः ॥ ११ ॥
निवेदयामास तथा भ्रातॄन् स्वान् समुपस्थितान्।
कुमारानागतान् श्रुत्वा चिन्ताव्याकुलितेन्द्रियः ॥ १२ ॥
अवाङ्मुखो दीनमना द्वाःस्थं वचनमब्रवीत्।
प्रवेशय कुमारांस्त्वं मत्समीपं त्वरान्वितः ॥ १३ ॥

भरतमन्तिकाद्भरतसमीपं प्राप्येत्यर्थः। कृताञ्जलिर्भरतायेति शेषः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

शिरसा वन्द्य धरणीं शिरसा धरणीं प्राप्य। रामाय वन्दित्वे-त्यर्थः ॥ ११ ॥ १२ ॥ १३ ॥

एतेषु जीवितं मह्यमेते प्राणाः प्रिया मम।
आज्ञप्तास्तु नरेन्द्रेण कुमाराः शुक्लवाससः॥ १४॥
प्रह्वाः प्राञ्जलयो भूत्वा विविशुस्ते समाहिताः।
ते तु दृष्ट्वा मुखं तस्य सग्रहं शशिनं यथा॥ १५॥
सन्ध्यागतमिवादित्यं प्रभया परिवर्जितम्।
बाष्पपूर्णे च नयने दृष्ट्वा रामस्य धीमतः।
हतशोभं यथा पद्मं मुखं वीक्ष्य च तस्य ते॥ १६॥
ततोऽभिवाद्य त्वरिताः पादौ रामस्य मूर्धभिः।
तस्थुः समाहिताः सर्वे रामस्त्वश्रूण्यवर्त्तयत्॥ १७॥
तान् परिष्वज्य बाहुभ्यामुत्थाप्य च महाबलः।
आसनेष्वासतेत्युक्त्वा ततो वाक्यं जगाद ह॥ १८॥
भवन्तो मम सर्वस्वं भवन्तो जीवितं मम।
भवद्भिश्च कृतं राज्यं पालयामि नरेश्वराः!॥ १९॥
भवन्तः कृतशास्त्रार्थाः बुद्ध्या च परिनिष्ठिताः।
सम्भूय च मदर्थोऽयमन्वेष्टव्यो नरेश्वराः!॥ २०॥
तथा वदति काकुत्स्थे अवधानपरायणाः।

मह्यं मम जीवितमतेषु स्थितमिति शेषः॥ १४॥
सग्रहं सोपरागम्॥ १५॥ १६॥ १७॥ १८॥
भवद्भिः कृतं सम्पादितम्॥ १९॥

उद्विग्नमनसः सर्वे किन्नु राजाभिधास्यति ॥ २१ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

कृतशास्त्रार्था अनुष्ठितशास्त्रार्थानुष्ठानाः । मदर्था वक्ष्यमाणः । अन्विष्यो ऽनुसरणीयः ॥ २० ॥ २१ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

## पञ्चचत्वारिंशः सर्गः ।



तेषां समुपविष्टानां सर्वेषां दीनचेतसाम् ।
उवाच वाक्यं काकुत्स्थो मुखेन परिशुष्यता ॥ १ ॥
सर्वे शृणुत भद्रं वो मा कुरुध्वं मनोऽन्यथा ।
पौराणां मम सीतायां यादृशी वर्त्तते कथा ॥ २ ॥
पौरापवादः सुमहांस्तथा जनपदस्य च ।
वर्त्तते मयि बीभत्सा सा मे मर्माणि कृन्तति ॥ ३ ॥
अहं किल कुले जात इक्ष्वाकूणां महात्मनाम् ।
सीतापि सत्कुले जाता जनकानां महात्मनाम् ॥ ४ ॥
जानासि त्वं यथा सौम्य ! दण्डके विजने वने ।
रावणेन हृता सीता स च विध्वंसितो मया ॥ ५ ॥

अथ हेतुकथनपूर्वं लक्ष्मणस्य सीताविसर्जने विनियोगः । तेषामिति ॥ १ ॥

अन्यथा माकुरुध्वम् । मदभिप्रायाननुकूलभावं माकुरुध्वमित्यर्थः । तमेवाभिप्रायमाह,—पौराणामिति । सीताविषये पौराणां यादृशी कथा वर्त्तते तां मत्तः शृणुतेति सम्बन्धः ॥ २ ॥

तां कथामाह,—पौरापवाद इति । पौराणां मयि मद्विषये बीभत्सा कुत्सा वर्त्तते सा मे मम मर्माणि कृन्तति ॥ ३ ॥ ४ ॥ ५ ॥

तच मे बुद्धिरुत्पन्ना जनकस्य सुतां प्रति।
अचोषिता मिमां सीतामानयेयं कथं पुरीम् ॥ ६ ॥
प्रत्ययार्थं ततः सीता विवेश ज्वलनं तदा।
प्रत्यक्षं तव सौमित्रे! देवानां हव्यवाहनः ॥ ७ ॥
अपापां मैथिलीमाह वायुश्चाकाशगोचरः।
चन्द्रादित्यौ च शंसेते सुराणां सन्निधौ पुरा ॥ ८ ॥
ऋषीणाञ्चैव सर्वेषामपापां जनकात्मजाम्।
एवं शुद्धसमाचारा देवगन्धर्वसन्निधौ ॥ ९ ॥
लङ्काद्वीपे महेन्द्रेण मम हस्ते निवेदिता।
अन्तरात्मा च मे वेत्ति सीतां शुद्धां यशस्विनीम् ॥ १० ॥
ततो गृहीत्वा वैदेहीमयोध्यामहमागतः।
अयन्तु मे महान्वादः शोकश्च हृदि वर्त्तते ॥ ११ ॥

कथमानयेयं न कथमपि ॥ ६ ॥

सीताया अपापतां प्रख्यापयति भाष्यः। प्रत्ययार्थमिति। देवानां सन्निधाविति शेषः ॥ ७ ॥ ८ ॥

ऋषीणाञ्चेति। सन्निधावित्यर्थः ॥ ९ ॥

लङ्काद्वीपे महेन्द्रेणेति। लङ्काद्वीपे तदाग्निनेति पाठान्तरम् ॥ १० ॥

अयमित्यति। प्राक्प्रतिपादितरीत्या तत्त्वार्थन्यस्मिन् स्थितेऽपीति शेषः। महान्वादो वर्त्तते निन्दा वर्त्तते। तच्छ्रवणाच्छोकश्च हृदि-वर्त्तते ॥ ११ ॥

पौरापवादः सुमहांस्तथा जनपदस्य च।
अकीर्त्तिर्यस्य गीयेत लोके भूतस्य कस्यचित्॥ १२॥
पतत्येवाधमान् लोकान् यावच्छब्दः प्रकीर्त्यते।
अकीर्त्तिर्निन्द्यते देवैः कीर्त्तिर्लोकेषु पूज्यते॥ १३॥
कीर्त्त्यर्थन्तु समारम्भः सर्वेषां सुमहात्मनाम्।
अप्यहं जीवितं जह्यां युष्मान्वा पुरुषर्षभाः!॥ १४॥
अपवादभयाद्भीतः किं पुनर्जनकात्मजाम्।
तस्माद्भवन्तः पश्यन्तु पतितं शोकसागरे॥ १५॥
न हि पश्याम्यहं भूतं किञ्चिद्दुःखमतोऽधिकम्।
श्वस्त्वं प्रभाते सौमित्रे! सुमन्त्राधिष्ठितं रथम्॥ १६॥
आरुह्य सीतामारोप्य विषयान्ते समुत्सृज।
गङ्गायास्तु परे पारे वाल्मीकेस्तु महात्मनः॥ १७॥

लोकापवादमाह,—पौरेति। सीताविषया पौरनिन्दा। भूतस्य प्राणिनः॥ १२॥

शब्दः अकीर्त्तिबोधकः। अधमान् लोकान्निरयान्॥ १३॥ १४॥

शोकसागरे अकीर्त्तिजे॥ १५॥

भूतम् उत्पन्नम्। अतः एतदकीर्त्तिजात्। अतः श्वः प्रभाते त्वं रथमारुह्य विषयान्ते प्रदेशान्तरतः सीतामुत्सृज॥ १६॥

तं विषयान्तरं प्रमाह,—गङ्गाया इति। परे पारे गङ्गायाः अन्ये पारे॥ १७॥

आश्रमो दिव्यसङ्काशस्तमसातीरमाश्रितः ।
तत्रैनां विजने देशे विसृज्य रघुनन्दन ! ॥ १८ ॥
शीघ्रमागच्छ सौमित्रे ! कुरुष्व वचनं मम ।
न चास्मि प्रतिवक्तव्यः सीतां प्रति कथञ्चन ॥ १९ ॥
तस्मात्त्वं गच्छ सौमित्रे ! नात्र कार्य्या विचारणा ।
अप्रीतिर्हि परा मह्यं त्वयैतत्प्रतिवारिते ॥ २० ॥
शापिता हि मया यूयं पादाभ्यां जीवितेन च ।
ये मां वाक्यान्तरे ब्रूयुरनुनेतुं कथञ्चन ।
अहिता नाम ते नित्यमदभीष्टविघातनात् ॥ २१ ॥
मानयन्तु भवन्तो मां यदि मच्छासने स्थिताः ।
इतोऽद्य नीयतां सीता कुरुष्व वचनं मम ॥ २२ ॥
पूर्वमुक्तोऽहमनया गङ्गातीरेऽहमाश्रमान् ।

तमसासंज्ञं नदीद्वयम् । अयोध्यासमीपे गङ्गावोऽन्नत्परपारे च । दिव्यसङ्काशः दिव्यदेशसदृशः ॥ १८ ॥

सीतां प्रतिसीतापरित्यागमुद्दिश्य ॥ १९ ॥

मह्यं मम एतत्प्रतिवारिते एतस्य प्रतिवारणे इत्यर्थः ॥ २० ॥

भुजाभ्यामिति । पाठेऽपि पादाभ्यामित्येवार्थः । ये वाक्यान्तरे अस्मद्वाक्यमध्ये मा मनुनेतुं ये ब्रूयुस्ते मदभीष्टविघातनान्नित्यं ममाहिता नाम अहिता इति प्रसिद्धम् ॥ २१ ॥

किन्तर्हि कर्त्तव्यं तत्राह,—मानयन्त्विति ॥ २२ ॥

पश्येयमिति तस्याश्च कामः संवर्त्त्यतामयम् ॥ २३ ॥
एवमुक्त्वा तु काकुत्स्थो बाष्पेण पिहितेक्षणः।
संविवेश स धर्मात्मा भ्रातृभिः परिवारितः ॥
शोकसंविग्नहृदयो निशश्वास यथा द्विपः ॥ २४ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

ननु सीते विसर्जनाय वनप्रवेशेति कथं वक्तुं शक्यं तत्राह,—पूर्वमिति। संवर्त्त्यतामनुष्ठीयताम् ॥ २३ ॥

भ्रातृभिः परिवारितः प्रविवेश। तान्विसृज्य स्ववेश्मेति शेषः ॥२४॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे एकचत्वारिंशः सर्गः ॥ ४५ ॥

---

## षट्चत्वारिंशः सर्गः ।



ततो रजन्यां व्युष्टायां लक्ष्मणो दीनचेतनः ।
सुमन्त्रमब्रवीद्वाक्यं मुखेन परिशुष्यता ॥ १ ॥
सारथे ! तुरगान् शीघ्रान् योजयस्व रथोत्तमे ।
स्वास्तीर्णं राजवचनात् सीतायाश्चासनं शुभम् ॥ २ ॥
सीता हि राजवचनादाश्रमं पुण्यकर्मणाम् ।
मया नेया महर्षीणां शीघ्रमानीयतां रथः ॥ ३ ॥
सुमन्त्रस्तु तथेत्युक्त्वा युक्तं परमवाजिभिः ।
रथं सुरुचिरप्रख्यं स्वास्तीर्णं सुखशय्यया ॥ ४ ॥
आनीयोवाच सौमित्रिं मित्राणां मानवर्धनम् ।
रथोऽयं समनुप्राप्तो यत्कार्य्यं क्रियतां प्रभो ! ॥ ५ ॥
एवमुक्तः सुमन्त्रेण राजवेश्मनि लक्ष्मणः ।
प्रविश्य सीतामासाद्य व्याजहार नरर्षभः ॥ ६ ॥

अथ लक्ष्मणेन सीतानयनम् । तत इति ॥ १ ॥
सीतायाः शुभमासनं राजभवनादानीय स्वास्तीर्य रथस्य ॥ २ ॥
किमर्थं सीताया आसनं तत्राह,—सीता हीति ॥ ३ ॥
सुरुचिरप्रख्यं सुन्दरशोभनम् ॥ ४ ॥ ५ ॥ ६ ॥

त्वया किलैष नृपतिर्वरं वै याचितः प्रभुः।
नृपेण च प्रतिज्ञातमाज्ञप्तश्चाश्रमं प्रति ॥ ७ ॥
गङ्गातीरे मया देवि! ऋषीणामाश्रमान् शुभान्।
शीघ्रं गत्वा तु वैदेहि! शासनात्पार्थिवस्य नः ॥ ८ ॥
अरण्ये मुनिभिर्जुष्टे अवनेया भविष्यसि।
एवमुक्ता तु वैदेही लक्ष्मणेन महात्मना ॥ ९ ॥
प्रहर्षमतुलं लेभे गमनञ्चाप्यरोचयत्।
वासांसि च महार्हाणि धनानि विविधानि च ॥ १० ॥
गृहीत्वा तानि वैदेही गमनायोपचक्रमे।
इमानि मुनिपत्नीनां दास्याम्याभरणान्यहम् ॥ ११ ॥
वस्त्राणि च महार्हाणि धनानि विविधानि च।
सौमित्रिस्तु तथेत्युक्त्वा रथमारोप्य मैथिलीम् ॥ १२ ॥
प्रययौ शीघ्रतुरगं रामस्याज्ञामनुस्मरन्।
अब्रवीच्च तदा सीता लक्ष्मणं लक्ष्मिवर्धनम् ॥ १३ ॥
अशुभानि बहून्येव पश्यामि रघुनन्दन!।

एष नृपतिः रामः। प्रतिज्ञातमङ्गीकृतम्। आश्रमं प्रतिनयनमिति शेषः। आज्ञप्तः। आश्रमं नेतुमिति शेषः। ७॥

शीघ्रं गत्वा। गङ्गातीरमिति शेषः। मुनीनामाश्रमान् प्रति अवनेया अवरोप्य प्रापणीया ॥ ८ ॥ ९। १०। ११॥

तथेत्युक्त्वा यथेदं प्रयच्छेत्युक्त्वा। १२॥१३॥

नयनं मे स्फुरत्यद्य गात्रोत्कम्पश्च जायते ॥ १४ ॥
हृदयञ्चैव सौमित्रे ! अस्वस्थमिव लक्षये ।
औत्सुक्यं परमञ्चापि अधृतिश्च परा मम ॥ १५ ॥
शून्यामेव च पश्यामि पृथिवीं पृथुलोचन ! ।
अपि स्वस्ति भवेत्तस्य भ्रातुस्ते भ्रातृवत्सल ॥ १६ ॥
श्वश्रूणाञ्चैव मे वीर ! सर्वासामविशेषतः ।
पुरे जनपदे चैव कुशलं प्राणिनामपि ॥ १७ ॥
इत्यञ्जलिकृता सीता देवता अभ्ययाचत ।
लक्ष्मणोऽर्थं ततः श्रुत्वा शिरसा वन्द्य मैथिलीम् ॥ १८ ॥
शिवमित्यब्रवीद्धृष्टो हृदयेन विशुष्यता ।
ततो वासमुपागम्य गोमतीतीरआश्रमे ॥ १९ ॥
प्रभाते पुनरुत्थाय सौमित्रिः सूतमब्रवीत् ।
योजयस्व रथं शीघ्रमद्य भागीरथीजलम् ॥ २० ॥
शिरसा धारयिष्यामि त्र्यम्बक इवौजसा ।
सोऽश्वान्विचारयित्वा तु रथे युक्तान् मनोजवान् ॥ २१ ॥

नयनं दक्षिणम् ॥ १४ ॥
हृदयं मनः । औत्सुक्यं नगरविषयं रामविषयं वा ॥ १५ ॥
शून्यां सुखशून्याम् ॥ १६ ॥ १७ ॥
अञ्जलिकृता कृताञ्जलिः । अर्थं दुर्निमित्तवैकृतम् ॥ १८ ॥
शिवमित्यब्रवीद्धृष्टः शुष्क इव ॥ १९ ॥ २० ॥

आरोहस्वेति वैदेहीं सूतः प्राञ्जलिरब्रवीत्।
सा तु सूतस्य वचनादारुरोह रथोत्तमम्॥ २२॥
सीता सौमित्रिणा सार्धं सुमन्त्रेण च धीमता।
आससाद विशालाक्षी गङ्गां पापविनाशिनीम्॥ २३॥
अथार्धदिवसङ्गत्वा भागीरथ्या जलाशयम्।
निरीक्ष्य लक्ष्मणो दीनः प्ररुरोद महास्वनः॥ २४॥
सीता तु परमायत्ताः दृष्ट्वा लक्ष्मणमातुरम्।
उवाच वाक्यं धर्मज्ञा किमिदं रुद्यते त्वया॥ २५॥
जाह्नवीतीरमासाद्य चिराभिलषितं मम।
हर्षकाले किमर्थं मां विषादयसि लक्ष्मण!॥ २६॥
नित्यन्त्वं राम पार्श्वेषु वर्त्तसे पुरुषर्षभ!।
कच्चिद्विनाकृतस्तेन द्विरात्रं शोकमागतः॥ २७॥
ममापि दयितो रामो जीवितादपि लक्ष्मण!।
नचाहमेवं शोचामि मैवं त्वं बालिशो भव॥ २८॥
तारयस्व च मां गङ्गां दर्शयस्व च तापसान्।
ततो मुनिभ्यो वासांसि दास्याम्याभरणानि च॥ २९॥

पर्वतस्त्र्यम्बको यथेति पाठे उपमाद्वयम्। त्र्यम्बक इव पर्वतो हिम-वानिवेति वा। अश्वान् चतुरः। २१। २२। २३।

जलाश्रयं जलप्रवाहम्। २४॥ २५।

मम चिराभिलषितं जाह्नवीतीरमासाद्य किं रुद्यते इत्यन्वयः। २६॥

ततः कृत्वा महर्षीणां यथार्हमभिवादनम्।
तत्र चैकां निशामुष्य यास्यामस्तां पुरीं पुनः॥ २०॥
ममापि पद्मपत्राक्षं सिंहोरस्कं कृशोदरम्।
त्वरते हि मनो द्रष्टुं रामं रमयतांवरम्॥ २१॥
तस्यास्तद्वचनं श्रुत्वा प्रमृज्य नयने शुभे।
नाविकानाह्वयामास लक्ष्मणः परवीरहा॥
इयञ्च सज्जा नौश्चेति दाशाः प्राञ्जलयोऽब्रुवन्॥ २२॥
तितीर्षुर्लक्ष्मणो गङ्गां शुभां नावमुपारुहत्।
गङ्गां सन्तारयामास लक्ष्मणस्तां समाहितः॥ २३॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
षट्चत्वारिंशः सर्गः॥ ४६॥

द्विरावृत्तेन विनाकृतः श्लोकमागतः क्वचित्॥ १७॥ १८॥ १९॥
॥ २०॥ २१॥ २२॥ २३॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे षट्चत्वारिंशः सर्गः॥ ४६॥

---

## सप्तचत्वारिंशः सर्गः।



अथ नावं सुविस्तीर्णां नैषादीं राघवानुजः।
आरुरोह समायुक्तां पूर्वमारोप्य मैथिलीम्॥ १॥
सुमन्त्रञ्चैव सरथं स्थीयतामिति लक्ष्मणः।
उवाच शोकसन्तप्तः प्रयाहीति च नाविकम्॥ २॥
ततस्तीरमुपागम्य भागीरथ्याः स लक्ष्मणः।
उवाच मैथिलीं वाक्यं प्राञ्जलिर्बाष्पसंवृतः॥ ३॥
हृद्गतं मे महच्छल्यं यस्मादार्य्येण धीमता।
अस्मिन्निमित्ते वैदेहि! लोकस्य वचनीकृतः॥ ४॥
श्रेयो हि मरणं मेऽद्य मृत्युर्वा यत्परं भवेत्।

नैषादीं निषादोपनीताम्। गुहाख्यनिषादसम्बन्धिनीमिति वा। समायुक्तां सज्जीकृताम्॥ १॥

स्थीयताम्। अत्रैवाऽऽगङ्गातीरे इत्येति शेषः। प्रयाहि परन्तीरमिति शेषः। २।

तीरं परन्तीरम्। उवाच। सीतामिति शेषः॥ ३।

वैदेहि। अस्मिन्निमित्ते यस्माद्धीमताप्यार्य्येण लोकनिन्दाहेतुभूते कार्य्ये यदहं नियुक्तस्तस्माल्लोकस्य वचनीकृतः। यत्नेऽपि आर्षः। वचनीया निन्द्यः कृतः। अतो मे महच्छल्यं हृद्गतं हृदयं प्रविष्टम्॥ ४॥

न चास्मिन्नीदृशे कार्य्ये नियोज्यो लोकनिन्दिते ॥ ५ ॥
प्रसीद च न मे पापं कर्तुमर्हसि शोभने ।
इत्यञ्जलिकृतो भूमौ निपपात स लक्ष्मणः ॥ ६ ॥
रुदन्तं प्राञ्जलिं दृष्ट्वा काङ्क्षन्तं मृत्युमात्मनः ।
मैथिली भृशसंविग्ना लक्ष्मणं वाक्यमब्रवीत् ॥ ७ ॥
किमिदं नावगच्छामि ब्रूहि तत्त्वेन लक्ष्मण ।
पश्यामि त्वां न च स्वस्थमपि क्षेमं महीपतेः ॥ ८ ॥
शापितोऽसि नरेन्द्रेण यत्त्वं सन्तापमागतः ।
तद्ब्रूयाः सन्निधौ मह्यमहमाज्ञापयामि ते ॥ ९ ॥
वैदेह्या चोद्यमानस्तु लक्ष्मणो दीनचेतनः ।
अवाङ्मुखो बाष्पगलो वाक्यमेतदुवाच ह ॥ १० ॥

एवं महच्छल्यं प्राप्तवतो मे यन्मरणं तत्प्रागवस्था मूर्च्छा मृत्युसुखं मरणं वा यद्भवेत्। न च ननु ईदृशे लोकनिन्द्ये अस्मिन् वक्ष्यमाणे कार्य्येऽहं नियोज्य नियोक्तुमर्हो भवामि। अथापि राजनियोगस्य सर्वथा कर्तव्यत्वान्नियोगङ्करोमीति शेषः ॥ ५ ॥

यदेवमतः प्रसीदेति। पापं कर्तुं दोषं दातुमित्यर्थः। अञ्जलिकृतः कृताञ्जलिः ॥ ६ ॥

मृत्युं काङ्क्षन्तं परमदुःखवशात् ॥ ७ ॥

नावगच्छामि रोदनादिहेतुमिति शेषः। महीपतेः रामस्य क्षेममपि सौख्यमपि न पश्यामि ॥ ८ ॥

यस्मात्त्वमेवं सन्तापमागतस्तस्मात्त्वं नरेन्द्रेण मत्त्वरया शापपूर्वं

श्रुत्वा परिषदो मध्ये ह्यपवादं सुदारुणम्।
पुरे जनपदे चैव त्वत्कृते जनकात्मजे!॥ ११॥
रामः सन्तप्तहृदयो मां निवेद्य गृहं गतः।
न तानि वचनीयानि मया देवि! तवाग्रतः॥ १२॥
यानि राज्ञा हृदि न्यस्तान्यमर्षात् पृष्ठतः कृतः।
सा त्वं त्यक्ता नृपतिना निर्दोषा मम सन्निधौ॥ १३॥
पौरापवादभीतेन ग्राह्यं देवि! न तेऽन्यथा।
आश्रमान्तेषु च मया त्यक्तव्या त्वं भविष्यसि॥ १४॥
राज्ञः शासनमादाय तथैव किल दौर्हृदम्।
तदेतज्जाह्नवीतीरे ब्रह्मर्षीणां तपोवनम्॥ १५॥

क्रूरे कर्मण्याक्षम इति मन्ये इति शेषः। मत्तं मम सन्निधौ श्रावा-
पयामि। ते त्वामित्यर्थः॥ ९॥ १०॥

त्वत्कृतेऽपवादं निन्दां श्रुत्वा सन्तप्तहृदयो गृहङ्गत इत्यन्वयः॥ ११॥

कोऽसावमन्निमित्तः पौरापवादस्तत्राह,—न तानीति। यानि वचनानि
राज्ञाऽमर्षाद्धृदि न्यस्तानि तानि हे देवि मया तवाग्रतो न वचनीयानि
न वक्तुं शक्यानि। अतएव तेषां वादो मया पृष्ठतः कृतः॥ १२॥

ननु मदीयनिर्दोषत्वं राजा किं न जानाति किं तत्राह,—निर्दो-
षेति। यद्यपि त्वं मम सन्निधौ अग्न्यादिभिर्निर्दोषा ख्यापिता तथापि
पौरापवादभीतेन सा निर्दोषापि त्वं त्यक्ता। अन्यथा वाच्यदोष-
बुद्ध्येति ते त्वया न ग्राह्यम्। यदेवमत आश्रमान्तेषु आश्रमसमी-
पेषु॥ १३॥ १४॥

पुण्यञ्च रमणीयञ्च माविषादङ्कथाः शुभे!।
राज्ञो दशरथस्यैव पितुर्मे मुनिपुङ्गवः॥ १६॥
सखा परमको विप्रो वाल्मीकिः सुमहायशाः।
पादच्छायामुपागम्य सुखमस्य महात्मनः॥
उपवासपरैकाग्रा वस त्वं जनकात्मजे!॥ १७॥
पतिव्रतात्वमास्थाय रामं कृत्वा सदा हृदि।
श्रेयस्ते परमं देवि! तथा कृत्वा भविष्यति॥ १८॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
सप्तचत्वारिंशः सर्गः॥ ४७॥

दौर्हृदस्याशाय गर्भिण्या अभिलषितमवश्यं कार्य्यमिति भावार्थः॥ १५॥

पुण्यं रमणीयं तपोवनं प्राप्य मा विषादङ्कृथाः॥ १६॥

परमक इत्यनुकम्पायाङ्कन्। अस्य पादच्छायां पादमूलम्। उपागम्य। रततारतम्यं प्राप्येत्यर्थः॥ १७॥ १८॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे सप्तचत्वारिंशः सर्गः॥ ४७॥

---

## अष्टचत्वारिंशः सर्गः ।



लक्ष्मणस्य वचः श्रुत्वा दारुणं जनकात्मजा ।
परं विषादमागम्य वैदेही निपपात ह ॥ १ ॥
सा मुहूर्त्तमिवासंज्ञा बाष्पपर्य्याकुलेक्षणा ।
लक्ष्मणं दीनया वाचा उवाच जनकात्मजा ॥ २ ॥
मामिकेयं तनुर्नूनं सृष्टा दुःखाय लक्ष्मण ! ।
धात्रा यस्यास्तथा मेऽद्य दुःखमूर्त्तिः प्रदृश्यते ॥ ३ ॥
किन्नु पापं कृतं पूर्वं को वा दारैर्वियोजितः ।
याहं शुद्धसमाचारा त्यक्ता नृपतिना सती ॥ ४ ॥
पुराहमाश्रमे वासं रामपादानुवर्त्तिनी ।
अनुरुध्यापि सौमित्रे ! दुःखे च परिवर्त्तिनी ॥ ५ ॥

अथ त्यक्तसीतासन्देशं गृहीत्वा लक्ष्मणपरावृत्तिः । लक्ष्मणस्येति ॥ १ ॥

बाष्पपर्य्याकुलेक्षणा । संज्ञां प्राप्येति शेषः ॥ २ ॥

दुःखमूर्त्तिः सकलदुःखसमूहः ॥ ३ ॥

सती पतिव्रता ॥ ४ ॥

हे सौमित्रे पुरा पूर्वकाले रामपादानुवर्त्तिनी भूत्वा दुःखे वनवास-

सा कथं ह्याश्रमे सौम्य ! वत्स्यामि विजनीकृता ।
आख्यास्यामि च कस्याहं दुःखं दुःखपरायणा: ॥ ६ ॥
किन्नु वक्ष्यामि मुनिषु कर्म चासत्कृतं प्रभो ! ।
कस्मिन्वा कारणे त्यक्ता राघवेण महात्मना ॥ ७ ॥
न खल्वद्यैव सौमित्रे ! जीवितं जाह्नवीजले ।
त्यजेयं राजवंशस्तु भर्तुर्मे परिहास्यते ॥ ८ ॥
यथाज्ञां कुरु सौमित्रे ! त्यज्य मां दुःखभागिनीम् ।
निदेशे स्थीयतां राज्ञः शृणु चेदं वचो मम ॥ ९ ॥
श्वश्रूणामविशेषेण प्राञ्जलिप्रग्रहेण च ।

दुःखे परिवर्त्तिनी निवर्त्तमानापि । अनुबध्यतत्सोढ़ा आश्रमे वासम-रोचयमिति शेषः ॥ ५ ॥

साहमिदानीं विजनीकृता इष्टजनरहिता सती । कथमाश्रमे वत्स्यामि । कस्य च स्वीयं दुःखमहमाख्यास्यामि । विजनवनस्येति शेषः ॥ ६ ॥

किन्न्विति । महात्मना राघवेण केन कारणेन त्यक्ता किम्वा त्याग-कारणमसत्कर्मत्वयाकृतमिति प्रश्नेषु मुनिषु किन्नु वक्ष्यामि । त्याग-कारणपापस्य कस्याप्यकरणादतस्तं प्रत्युत्तरं न किमपि वक्ष्यामित्या-शयः ॥ ७ ॥

अपि च जीवितत्यागोऽप्यशक्य इत्याह,—न खल्विति । तदत्याग-हेतुमाह,—राजवंश इति । राजवंशः परिहास्यते विच्छिद्यते इत्यर्थः । मयि गर्भस्य विद्यमानत्वादिति भावः ॥ ८ ॥

शिरसा वन्द्य चरणौ कुशलं ब्रूहि पार्थिवम् ॥ १० ॥
शिरसाभिनतो ब्रूयाः सर्वासामेव लक्ष्मण ! ।
वक्तव्यश्चापि नृपतिर्धर्मेषु सुसमाहितः ॥ ११ ॥
जानासि च यथा शुद्धा सीता तत्त्वेन राघव ! ।
भक्त्या च परया युक्ता हिता च तव नित्यशः ॥ १२ ॥
अहं त्यक्ता च ते वीर ! अयशोभीरुणा जने ।
यच्च ते वचनीयं स्यादपवादः समुत्थितः ॥ १३ ॥
मया च परिहर्त्तव्यं त्वं हि मे परमा गतिः ।
वक्तव्यश्चैव नृपतिर्धर्मेण सुसमाहितः ॥ १४ ॥
यथा भ्रातृषु वर्त्तेथास्तथा पौरेषु नित्यदा ।
परमो ह्येष धर्मस्ते तस्मात्कीर्त्तिरनुत्तमा ॥ १५ ॥
यत्तु पौरजने राजन् ! धर्मेण समवाप्नुयात् ।
अहन्तु नानुशोचामि स्वशरीरं नरर्षभ ! ॥ १६ ॥

राजशासनं कुर्वित्याह,—यथाज्ञामिति । इदं वचः मत्सन्देशरूपम् ॥ ९ ॥

प्रग्रहेण प्रशस्ताञ्जलिग्रहणसमेतेन शिरसेत्यन्वयः । चरणौ वन्द्य मत्प्रतिनिधितयेति भावः । पार्थिवञ्च वन्दयित्वा कुशलं ब्रूहि ॥ १०।११।१२।

जनेऽयशोभीरुणा जननिमित्तायशोभीरुणैव त्वया त्यक्ता नान्यथेति जानामीति शेषः । वचनीयं निन्दा । अपवादोऽभिशापः ॥ १३ ॥

अथ प्रजाविषये सन्देशमाह,—वक्तव्येति ॥ १४ ॥ १ ॥

यथापवादः पौराणां तथैव रघुनन्दन ! ।
पतिर्हि देवता नार्य्याः पतिर्बन्धुः पतिर्गुरुः ॥ १७ ॥
प्राणैरपि प्रियं तस्मात् भर्त्तुः कार्य्यं विशेषतः ।
इति मद्वचनाद्रामो वक्तव्यो मम संग्रहः ॥ १८ ॥
निरीक्ष्य माद्य गच्छ त्वमृतुकालातिवर्तिनीम् ।
एवं ब्रुवन्त्यां सीतायां लक्ष्मणो दीनचेतनः ॥ १९ ॥
शिरसा वन्द्य धरणीं व्याहर्तुं न शशाक ह ।
प्रदक्षिणञ्च तां कृत्वा रुदन्नेव महास्वनः ॥ २० ॥
ध्यात्वा मुहूर्त्तन्तामाह किं मां वक्ष्यसि शोभने ! ।
दृष्टपूर्वं न ते रूपं पादौ दृष्टौ तवानघे ! ॥ २१ ॥
कथमत्र हि पश्यामि रामेण रहितां वने ।
इत्युक्त्वा तां नमस्कृत्य पुनर्नावमुपारुहत् ॥ २२ ॥
आरुरोह पुनर्नावं नाविकञ्चाभ्यचोदयत् ।

एष धर्मः आत्तचाह,—यस्तु इति। धर्म्मेण धर्मज्ञतलक्षणेन यद्-वाप्नुयात् पुण्यम् एष एव परमो धर्मः ॥ १६ ॥

यथा पौराणामपवादं परिहृत्य स्थितिर्भवति तथैव रघुनन्दन वर्त्त-स्वेति शेषः ॥ १७ ॥

मम संग्रहः मया रामं प्रति वक्तव्यसन्देशस्य संग्रह इत्यर्थः ॥ १८ ॥

ऋतुकालातिवर्त्तिनीं गर्भलक्षणवतीं मा मां निरीक्ष्य गच्छ। पुना-रामादिकृतापवादप्रसक्तिनिवृत्तये इति भावः ॥ १९ ॥ २० ॥

स गत्वा चोत्तरं तीरं शोकभारसमन्वितः ॥ २३ ॥
संमूढ इव दुःखेन रथमध्यारुहद्द्रुतम्।
मुहुर्मुहुः परावृत्य दृष्ट्वा सीतामनाथवत् ॥ २४ ॥
चेष्टन्तीं परतीरस्थां लक्ष्मणः प्रययावथ।
दूरस्थं रथमालोक्य लक्ष्मणञ्च मुहुर्मुहुः।
निरीक्षमाणान्तूद्विग्नां सीतां शोकः समाविशत् ॥ २५ ॥
सा दुःखभारावनता यशस्विनी
यशोधरा नाथमपश्यती सती।
रुरोद सा बर्हिणनादिते वने
महास्वनं दुःखपरायणा सती ॥ २६ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

किं मां वक्ष्यसि निरीक्ष्य मां गच्छेति किं वदसीत्यर्थः। शोका-कान्तरे प्रयोगो न दोषाय। तथा निरीक्षणादस्यायोग्यतोपपादकं दृष्टपूर्वमिति ॥ २१ ॥ २२ ॥ २३ ॥

अनाथवदनाथेव। न तु वस्तुतोऽनाथा। पूर्णचिह्नगर्भरूपत्वादिति भावः ॥ २४ ॥ २५ ॥

दुःखभारावनता सेव। यशोधरा पातिव्रत्ययशोवती ॥ २६ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

## एकोनपञ्चाशः सर्गः ।



सीतान्तु रुदतीं दृष्ट्वा ते तत्र मुनिदारकाः ।
प्राद्रवन्यत्र भगवानास्ते वाल्मीकिरुग्रधीः ॥ १ ॥
अभिवाद्य मुनेः पादौ मुनिपुत्रा महर्षये ।
सर्वं निवेदयामासुस्तस्यास्तु रुदितस्वनम् ॥ २ ॥
अदृष्टपूर्वा भगवन् ! कस्याप्येषा महात्मनः ।
पत्नी श्रीरिव संमोहाद्विरौति विकृतानना ॥ ३ ॥
भगवन् ! साधु पश्येस्त्वं देवतामिव खाच्युताम् ।
नद्यास्तु तीरे भगवन् ! वरस्त्री कापि दुःखिता ॥ ४ ॥
दृष्टाऽस्माभिः प्ररुदिता दृढं शोकपरायणा ।
अनर्हा दुःखशोकाभ्यामेका दीना अनाथवत् ॥ ५ ॥
न ह्येनां मानुषीं विद्मः सत्क्रियास्याः प्रयुज्यताम् ।

अथ वाल्मीकिना स्वाश्रमे सीतानयनम् । सीतान्त्विति । मुनिदारकाः मुनिपुत्राः । उग्रधीः उग्रतपोविषयबुद्धिः ॥ १ ॥ २ ॥

निवेदयामासुरित्यस्य विकरोऽदृष्टेति ॥ ३ ॥ ४ ॥

अनर्हा । दुःखस्येति शेषः । दुःखशोकाभ्यां दीना अनाथवद्वर्त्तते तामिमां साधुपश्ये दृष्टानुग्रहाय च ॥ ५ ॥

आश्रमस्याविदूरे च त्वामियं शरणङ्गता ॥
त्रातारमिच्छते साध्वी भगवंस्त्रातुमर्हसि ।
तेषान्तु वचनं श्रुत्वा बुद्ध्या निश्चित्य धर्मवित् ॥
तपसा लब्धचक्षुष्मान् प्राद्रवद्यत्र मैथिली ।
तं प्रयान्तमभिप्रेत्य शिष्या ह्येनं महामतिम् ॥
तन्तु देशमभिद्रुत्य किञ्चित्पद्भ्यां महामतिः ।
अर्घ्यमादाय रुचिरं जाह्नवीतीरमागमत् ॥
ददर्श राघवस्येष्टां सीतां पत्नीमनाथवत् ।
तां सीतां शोकभारार्त्तां वाल्मीकिर्मुनिपुङ्गवः ॥
उवाच मधुरां वाणीं ह्लादयन्निव तेजसा ॥ ६ ॥
स्नुषा दशरथस्य त्वं रामस्य महिषी प्रिया ।
जनकस्य सुता राज्ञः स्वागतन्ते पतिव्रते ! ॥ ७ ॥
आयान्ती चासि विज्ञाता मया धर्मसमाधिना ।
कारणञ्चैव सर्वं मे हृदयेनोपलक्षितम् ॥ ८ ॥

एतदुत्तरं तां सीतामिति श्लोकः। मध्ये श्लोकचतुष्टयमर्धाधिकं प्रक्षिप्तमिति कतकः। तां सीतां मुनिपुत्रैर्दृष्टानुग्राह्यत्वेनोक्तां शोकयुक्तां तां सीतां तत्समीपे गत्वा दृष्ट्वा वाल्मीकिरुवाचेति सोपस्कारः सम्बन्धः ॥ ६ ॥ ७ ॥

धर्मसमाधिना योगजधर्मलब्धध्यानपरिपाकेन। कारणञ्च त्यागमनकारणम्। हृदयेनोपलक्षितम्। ध्यानेनेति भावः ॥ ८ ॥

तव चैव महाभागे। विदितं मम तत्त्वतः।
सर्वञ्च विदितमस्मां त्रैलोक्ये यद्धि वर्त्तते ॥ ९ ॥
अपापां वेद्मि सीते! ते तपोलब्धेन चक्षुषा।
विस्रब्धा भव वैदेहि! साम्प्रतं मयि वर्त्तसे ॥ १० ॥
आश्रमस्याविदूरे मे तापस्यस्तपसि स्थिताः।
तास्त्वां वत्से! यथा वत्सं पालयिष्यन्ति नित्यशः ॥ ११ ॥
इदमर्घ्यं प्रतीच्छ त्वं विस्रब्धा विगतज्वरा।
यथा स्वगृहमभ्येत्य विषादञ्चैव मा कृथाः ॥ १२ ॥
श्रुत्वा तु भाषितं सीता मुनेः परममद्भुतम्।
शिरसा वन्द्य चरणौ तथेत्याह कृताञ्जलिः ॥ १३ ॥
तं प्रयान्तं मुनिं सीता प्राञ्जलिः पृष्ठतोऽन्वगात्।
तं दृष्ट्वा मुनिमायान्तं वैदेह्या मुनिपत्नयः ॥
उपाजग्मुर्मुदा युक्ता वचनञ्चेदमब्रुवन् ॥ १४ ॥
स्वागतन्ते मुनिश्रेष्ठ! चिरस्यागमनञ्च ते।

तव चैवेति। तत्त्वतः तत्त्वं तव तत्त्वं शुद्धभावत्वरूपं मम मया विदितम्। तदेवाह,—सर्वञ्चेति। मह्यं मम ॥ ९ ॥

तदेव पुनराहापापामिति। ते त्वाम्। मयि वर्त्तसे। मत्समीपे निवसिष्यसीत्यर्थः ॥ १० ॥

आश्रमस्याविदूरे समीपे एकान्ते तपश्चरणार्थं तापस्योऽपि स्थिताः सन्ति तासां निवासोऽस्तीत्यर्थः। यथा वत्सं पुत्रमिव ॥ ११ ॥

यथा स्वगृहमभ्येत्य तिष्ठसि तथैव तिष्ठेति शेषः ॥ १२ ॥ १३ ॥

अभिवादयामस्त्वां सर्वा उच्यतां किञ्च कुर्महे ॥ १५ ॥
तासां तद्वचनं श्रुत्वा वाल्मीकिरिदमब्रवीत्।
सीतेयं समनुप्राप्ता पत्नी रामस्य धीमतः ॥ १६ ॥
स्नुषा दशरथस्यैषा जनकस्य सुता सती।
अपापा पतिना त्यक्ता परिपाल्या मया सदा ॥ १७ ॥
इमां भवत्यः पश्यन्तु स्नेहेन परमेण हि।
गौरवान् मम वाक्याच्च पूज्या वोऽस्तु विशेषतः ॥ १८ ॥
मुहुर्मुहुश्च वैदेहीं परिदाय महायशाः।
स्वमाश्रमं शिष्यवृतः पुनरायान् महातपाः ॥ १९ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
एकोनपञ्चाशः सर्गः ॥ ४९ ॥

वैदेह्या सहेति शेषः। मुनिपत्न्यस्तापस्योमुदा युक्ता अब्रुवन् वाल्मीकिम् । १४ ।

चिरस्य तवागमनं दृष्ट्वा स्थिता वय मभिवादयामः किञ्च कुर्महे । १५ । १६ ।

सदेति। पूर्वं पूर्वावतारेष्वप्येवमेव परिपालितेत्यर्थः ॥ १७ । १८ ।

परिदाय तापसीनां हस्ते दत्त्वा । १९ ।

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

---

## पञ्चाशः सर्गः ।



दृष्ट्वा तु मैथिलीं सीतामाश्रमे संप्रवेशिताम् ।
सन्तापमगमद्घोरं लक्ष्मणो दीनचेतनः ॥ १ ॥
अब्रवीच्च महातेजाः सुमन्त्रं मन्त्रसारथिम् ।
सीतासन्तापजं दुःखं पश्य रामस्य सारथे ! ॥ २ ॥
ततो दुःखतरं किन्नु राघवस्य भविष्यति ।
पत्नीं शुद्धसमाचारां विसृज्य जनकात्मजाम् ॥ ३ ॥
व्यक्तं दैवादहं मन्ये राघवस्य विनाभवम् ।
वैदेह्या सारथे ! नित्यं दैवं हि दुरतिक्रमम् ॥ ४ ॥
यो हि देवान् सगन्धर्वान् सुरान् सह राक्षसैः ।
निहन्याद्राघवः क्रुद्धः स दैवं पर्य्युपासते ॥ ५ ॥

अथ लक्ष्मणस्य सुमन्त्रेणाश्वासनम् । दृष्ट्वात्विति । उदक्काणे स्थित्वा वाल्मीकिकर्तृकसीताप्रवेशदर्शनम् ॥ १ ॥

मन्त्रसारथिं मन्त्रसहायभूतं सारथिम् । सीतासन्तापजं सीतावियोगजसन्तापजम् ॥ २ ॥

पत्नीं विसृज्य यत्स्थितः । ततः विसृज्यस्थितेः ॥ ३ ॥

वैदेह्या विनाभवं वैदेहीवियोगेनावस्थानं दैवात् प्राचीनदुरदृष्टवशादहं मन्ये । अतो दैवं दुरतिक्रमम् ॥ ४ ॥

पुरा रामः पितुर्वाक्याद्दण्डके विजने वने ।
उषित्वा नव वर्षाणि पञ्च चैव महावने ॥ ६ ॥
ततो दुःखतरं भूयः सीताया विप्रवासनम् ।
पौराणां वचनं श्रुत्वा नृशंसं प्रतिभाति मे ॥ ७ ॥
कोनुधर्माश्रयः सूत ! कर्मण्यस्मिन् यशोहरे ।
मैथिलीं समनुप्राप्तः पौरैर्हीनार्थवादिभिः ॥ ८ ॥
एता वाचो बहुविधाः श्रुत्वा लक्ष्मणभाषिताः ।
सुमन्त्रः श्रद्धया प्राज्ञो वाक्यमेतदुवाच ह ॥ ९ ॥
न सन्तापस्त्वया कार्य्यः सौमित्रे ! मैथिलीं प्रति ।
दृष्टमेतत्पुरा विप्रैः पितुस्ते लक्ष्मणाग्रतः ॥ १० ॥

दैवं पर्य्युपासते दैवमनुवर्त्तते । न तु तन्निरसितुं शक्नोतीत्यर्थः ॥५॥ यत्पुरा दण्डके उषित्वा दुःखमन्वभूत्तत्पितृवाक्यगौरवादुचितमिति शेषः ॥ ६ ॥

इदन्तु अपरिपाल्यवचसां पौराणां वचनं श्रुत्वा अपरिमितकालत्वाद्दुःखतरं सीताविप्रवासनं यत्कृतवांस्तन्नृशंसं क्रूरकल्पमिति भाति॥७॥

कोन्विति । हीनार्थवादिभिर्न्यायहीनार्थवादिभिः पौरैर्हेतुभिर्मैथिलीं प्रति यशोहरे साध्वीं वने विसृष्टवानित्ययशस्करेऽस्मिन् कर्मणि सीतापरित्यागकर्मण्यनुष्ठिते सति कोनुधर्माश्रयो धर्मपरिग्रहः संप्राप्तो रामेण । धर्माणां सत्यमूलत्वात् । तत्त्यागे सर्वोऽपि धर्मो नाशित एवेत्यर्थः ॥ ८ ॥ ९ ॥

भविष्यति दृढं रामो दुःखप्रायो विसौख्यभाक्।
प्राप्स्यते च महाबाहुर्विप्रयोगं प्रियैर्द्रुतम् ॥ ११ ॥
त्वाञ्चैव मैथिलीञ्चैव शत्रुघ्नभरतौ तथा।
स त्यजिष्यति धर्मात्मा कालेन महता महान् ॥ १२ ॥
इदन्त्वयि न वक्तव्यं सौमित्रे भरतेऽपि वा।
राज्ञा वो व्याहृतं वाक्यं दुर्वासा यदुवाच ह ॥ १३ ॥
महाजनसमीपे च मम चैव नरर्षभ!।
ऋषिणा व्याहृतं वाक्यं वसिष्ठस्य च सन्निधौ ॥ १४ ॥
ऋषेस्तु वचनं श्रुत्वा मामाह पुरुषर्षभः।

दृष्टमिति। पुरा पूर्वस्मिन् काले। तव पितुरग्रतः। एतत् सीता विप्रवासनादिवक्ष्यमाणम्। विप्रैर्दृष्टमेव दृष्टमित्यर्थः ॥ १० ॥

तदेवाह,—भविष्यतीति। दृढं ध्रुवम्। दुःखप्रायो दुःखबहुलः। अतो विसौख्यभाक् सौख्यवियोगभाक् च भविष्यति इति दृष्टमित्यन्वयः। यदेव मतः प्राप्स्यते चेत्यादि ॥ ११ ॥

प्रियैर्वियोगमित्येतदेव विवृणोति। त्वाञ्चेति। दुर्वासःसम्भाषणनिमित्तको निर्य्याणकाले लक्ष्मणत्यागः। शत्रुघ्नभरतयोस्तु मधुराराज्यगन्धर्वराज्ययोः करणाय प्रतिष्ठापनमेव त्यागः ॥ १२ ॥

राज्ञा दशरथेन वो युष्मान् प्रति व्याहृतम् एषां कथमग्रे भावीत्येवं प्रश्नवाक्यं श्रुत्वा यद्दुर्वासा उवाच तदिदन्त्वयि त्वया सौमित्रे शत्रुघ्ने भरते च न वाच्यम् ॥ १३ ॥

दुर्वासो वाक्यश्रवणं कथमवगतं तत्राह,—महाजनेति। महाजनो

सूत ! न क्वचिदेवन्ते वक्तव्यं जनसन्निधौ ॥ १५ ॥
तस्माहं लोकपालस्य वाक्यं तत्सुसमाहितः।
नैव जात्वनृतं कुर्य्यामिति मे सौम्य ! दर्शनम् ॥ १६ ॥
सर्वथैव न वक्तव्यं मया सौम्य ! तवाग्रतः।
यदि ते श्रवणे श्रद्धा श्रूयतां रघुनन्दन ! ॥ १७ ॥
यद्यप्यहं नरेन्द्रेण रहस्यं श्रावितं पुरा।
तथाप्युदाहरिष्यामि दैवं हि दुरतिक्रमम् ॥ १८ ॥

जना यस्य दशरथस्य तस्य मम च सन्निधा। राजसमीपस्थितं मामनत्याप्यैव वसिष्ठसन्निधौ च ऋषिणोक्तम्। एवं चयाणामग्रे एतदुक्तमिति चय एतत् परिषा इत्युक्तम् ॥ १४ ॥

ऋषेर्दुर्वाससः। पुरुषर्षभो दशरथः। एवन्ते श्रुतमतिरहस्यन्त्वया न क्वचिद्वक्तव्यमित्यर्थः ॥ १५ ॥

तस्य लोकपालस्य दशरथस्य वाक्यमन्नृतं कार्य्यमिति सुसमाहितः सावधानचित्तो भविष्यामीति मे दर्शनं सङ्कल्पः ॥ १६ ॥

यदेवमतः सर्वथेति। तवाग्रे न वक्तव्यम्। रहस्यश्रवणेऽत्युत्कटश्रद्धारहितस्येत्यर्थः। श्रद्धायान्तु वक्ष्यामीत्याह,—यदि ते इति। कथ्यमानस्य परमाप्तत्वाद्राजपुत्रत्वाच्च जनसन्निधावेव नरेन्द्रेण प्रतिषेधाच्च दुःखितदुःखनिवारणाय रहस्यप्रकाटनेऽपि न दोष इति सुमन्त्राशयः॥१७॥

पुनस्तदेवाह,—यद्यपीति। यद्यपि नरेन्द्रेण रहस्यमप्रकाश्यमित्युक्तं तथापि कथनयोग्ये काले एतस्य निकटे उदाहरिष्यामि। एवं ज्ञात्वा दुःखं न कार्य्यमित्याह,—दैवं हीति। येन दैवेनेदृशं दुःखं

येनेदमीदृशं प्राप्तं दुःखं शोकसमन्वितम् ।
न त्वया भरतस्याग्रे शत्रुघ्नस्यापि सन्निधौ ॥ १९ ॥
तच्छ्रुत्वा भाषितं तस्य गम्भीरार्थपदं महत् ।
तथ्यं ब्रूहीति सौमित्रिः सूतं तं वाक्यमब्रवीत् ॥ २० ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
पञ्चाशः सर्गः ॥ ५० ॥

प्राप्तं तद्दैवं दुरतिक्रममिति ज्ञात्वा शोकं त्यजेत्यर्थः । दैवं हि सुमहद्भूतं येनेदमीदृशं प्राप्यमिति च पाठे राज्ञाऽप्रकाश्यत्वोक्तौ हेतुर्दैवं हीत्यादि । येन दैवेन प्राचीनकर्मणा शोकसममीदृशं दुःखं त्वया प्राप्यं प्रापणीयं तद्दैवं हि यस्मात् सुमहद्भूतञ्जेनापि दुःशकज्ञानमतो राज्ञाऽप्रकाश्यमुक्तम् । यदि तु पूर्वं भवदादीनामग्रे उक्तं स्यात् तदास्यार्थस्यावश्यभावित्वज्ञानात्तवेदृशं दुःखं न स्यादिति कतकादयः । अतो न त्वया भरतादिसन्निधौ वाच्यमिति शेषः ॥ १८ ॥ १९ ॥

गम्भीरार्थपदं प्रागुक्तं सत्यं तथ्यं भाषितं श्रुत्वा सौमित्रिः शोकनिवृत्तये तद्ब्रूहि विस्तरेण ब्रूहीत्यब्रवीत् ॥ २० ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

## एकपञ्चाशः सर्गः ।



तथा सञ्चोदितः सूतो लक्ष्मणेन महात्मना ।
तद्वाक्यमृषिणा प्रोक्तं व्याहर्त्तुमुपचक्रमे ॥ १ ॥
पुरा नाम्ना हि दुर्वासा अत्रेः पुत्रो महामुनिः ।
वसिष्ठस्याश्रमे पुण्ये वार्षिक्यं समुवास ह ॥ २ ॥
तमाश्रमं महातेजाः पिता ते सुमहायशाः ।
पुरोहितं महात्मानं दिदृक्षुरगमत्स्वयम् ॥ ३ ॥
स दृष्ट्वा सूर्य्यसङ्काशं ज्वलन्तमिव तेजसा ।
उपविष्टं वसिष्ठस्य सव्यपार्श्वे महामुनिम् ॥ ४ ॥
तौ मुनी तापसश्रेष्ठौ विनीतावभ्यवादयत् ।
स ताभ्यां पूजितो राजा स्वागतेनासनेन च ॥ ५ ॥
पाद्येन फलमूलैश्च उवास मुनिभिः सह ॥ ६ ॥

अथ तत्प्रयनम् । तथा सञ्चोदित इति ॥ १ ॥

वार्षिक्यं वर्षासु भवञ्चातुर्मास्यनियममुद्दिश्योवास । यतीनां वर्षाकाले भ्रमणनिषेधात् । वार्षिकमासचतुष्टयमेकत्रैव स्थितवानित्यर्थः ॥२॥३॥

महामुनिं दुर्वाससंदृष्ट्वा ॥ ४ ॥ ५ ॥ ६ ॥

तेषां तत्रोपविष्टानान्तास्ताः सुमधुराः कथाः ।
बभूवुः परमर्षीणां मध्यादित्यगतेऽहनि ॥ ७ ॥
ततः कथायां कस्याञ्चित् प्राञ्जलिः प्रग्रहो नृपः ।
उवाच तं महात्मानमत्रेः पुत्रं तपोधनम् ॥ ८ ॥
भगवन् ! किं प्रमाणेन मम वंशो भविष्यति ।
किमायुश्च हि मे रामः पुत्राश्चान्ये किमायुषः ॥ ९ ॥
रामस्य च सुता येस्यु स्तेषामायुः कियद्भवेत् ।
काम्यया भगवन् ! ब्रूहि वंशस्यास्य गतिं मम ॥ १० ॥
तच्छ्रुत्वा व्याहृतं वाक्यं राज्ञो दशरथस्य तु ।
दुर्वासाः सुमहातेजा व्याहर्त्तुमुपचक्रमे ॥ ११ ॥
शृणु राजन् ! पुरा वृत्तं तदा देवासुरे युधि ।
दैत्याः सुरैर्भर्त्स्यमाना भृगुपत्नीं समाश्रिताः ॥
तया दत्ताभयास्तत्र न्यवसन्नभयास्तदा ॥ १२ ॥
तया परिगृहीतांस्तान् दृष्ट्वा क्रुद्धः सुरेश्वरः ।
चक्रेण शितधारेण भृगुपत्न्याः शिरोऽहरत् ॥ १३ ॥

मध्यादित्यगते मध्यगतादित्ये ॥ ७ ॥
प्रग्रहः ऊर्द्ध्वबाहुः ॥ ८ ॥
किं प्रमाणेन मत्पुत्रपर्य्यन्तं ततोऽप्यधिकं वा ॥ ९ ॥ १० ॥
एवं रामस्य शापवशाद्दुःखोपेतं चिरायुष्यं वक्तुं पीठिकामाह,—

ततस्तां निहतां दृष्ट्वा पत्नीं भृगुकुलोद्वहः ।
शशाप सहसा क्रुद्धो विष्णुं रिपुकुलार्दनम् ॥ १४ ॥
यस्मादवध्यां मे पत्नीमवधीः क्रोधमूर्च्छितः ।
तस्मात्त्वं मानुषे लोके जनिष्यसि जनार्दन ! ॥ १५ ॥
तत्र पत्नीवियोगन्त्वं प्राप्स्यसे बहुवार्षिकम् ।
शापाभिहतचेतास्तु स्वात्मना भावितोभवेत् ॥ १६ ॥
अर्चयामास तं देवं भृगुः शापेन पीड़ितः ।
तपसाराधितो देवोह्यब्रवीद्भक्तवत्सलः ॥ १७ ॥
लोकानां सम्प्रियार्थन्तु तं शापं गृह्यमुक्तवान् ।
इति शप्तो महातेजा भृगुणा पूर्वजन्मनि ॥ १८ ॥

शृणु राजन्निति । पुरा पूर्वस्मिन् काले । भृगुपत्नीं स्वपुरोहितमातरम् ॥ १२ ॥ १३ ॥ १४ ॥

अवध्यां स्त्रीत्वात् ऋषिपत्नीत्वाच्च वधानर्हाम् ॥ १५ ॥

शापाभिहतचेताः धर्मपक्षाश्रयदेवानुग्रहाय प्रवृत्त ईश्वरः सोपास्तो मया स्वाभिमानेन शप्तः । ईश्वरत्वाद्यदि तं निरस्येत् तदा मिथ्यावचनत्वेन नरकप्राप्तिः स्यादिति पश्चात्तापपरीतचित्तः । स्वात्मनान्तर्यामिणा भावितः स्वशापस्वीकारार्थमीश्वरं प्रति तपश्चरणार्थं प्रेरित इत्यर्थः ॥ १६ ॥

शापेन शापस्य मोघत्वभयेन पीड़ितो भृगुस्तं देवमर्चयामास ॥ १७ ॥

इहागतो हि पुत्रत्वं तव पार्थिवसत्तम ! ।
राम इत्यभिविख्यातस्त्रिषु कालेषु मानद ! ॥ १९ ॥
तत् फलं प्राप्यते चापि भृगुशापकृतं महत् ।
अयोध्यायाः पतीरामो दीर्घकालं भविष्यति ॥ २० ॥
सुखिनश्च समृद्धाश्च भविष्यन्त्यस्य येऽनुगाः ।
दशवर्षसहस्राणि दशवर्षशतानि च ॥ २१ ॥
रामोराज्यमुपासित्वा ब्रह्मलोकं गमिष्यति ।
समृद्धैश्चाश्वमेधैश्च इष्ट्वा परमदुर्जयः ॥ २२ ॥

किमब्रवीत्तदाह,—लोकानामिति । लोकानाम्भूरादीनाम् । सम्भियार्थं सम्यगावशवधादिरूपप्रियसम्पादनार्थम् । तं शापं मनुष्यत्वादिप्रापकं शप्तम् अङ्गीकार्य्यमेव स्वस्योक्तवान् । इति शप्तः उक्तप्रकारेण शप्तः पूर्वजन्मनि कश्यपपुत्ररूपेपेन्द्रावतारे । अत्र पूर्वजन्मनि भृगुना शप्त इत्युक्त्या तद्दंशविशापेभावो अत्रापि शरीरे भगवतः सूचितः । सपाशे दर्शितः । आहूय लक्ष्मणं प्राह रामो राजीवलोचनः । शृणु मे वचनं गुह्यं सीतासंत्यागकारणम् । वाल्मीकिनाथ भृगुणा शप्तोऽस्मिकिल लक्ष्मण । तस्मादेनां त्यजाम्यद्य जनोनैवात्र कारणमिति । वाल्मीकेरपि प्राचेतसत्वात् भृगुवंश्यत्वेन भृगुत्वमस्तीति वदन्ति । एतच्च निरूपितं बालकाण्डे विस्तरेणास्माभिर्ग्रन्थोपक्रमे मा निषादेति श्लोके ॥ १८ ॥

तच्छापवशादेव स्वेच्छया तव पुत्रत्वमागतः ॥ १९ ॥

तत्फलं पत्नीवियोगेन चिरवासलक्षणं प्राप्यते ॥ २० ॥ २१ ॥

राजवंशाश्च बहुशो बहून् संस्थापयिष्यति।
द्वौ पुत्रौ तु भविष्येते सीतायां राघवस्य तु ॥ २३ ॥
स सर्वमखिलं राज्ञो वंशस्याह गतागतम्।
आख्याय सुमहातेजास्तूष्णीमासीन् महामुनिः ॥ २४ ॥
तूष्णींभूते तदा तस्मिन् राजा दशरथो मुनौ।
अभिवाद्य महात्मानौ पुनरायात् पुरोत्तमम् ॥ २५ ॥
एतद्वचो मया तत्र मुनिना व्याहृतं पुरा।
श्रुतं हृदि च निक्षिप्तं नान्यथा तद्भविष्यति ॥ २६ ॥
सीतायाश्च ततः पुत्रावभिषेक्ष्यति राघवः।
अन्यत्र न त्वयोध्यायां मुनेस्तु वचनं यथा ॥ २७ ॥
एवङ्गते न सन्तापं कर्तुमर्हसि राघव !।
सीतार्थे राघवार्थे वा दृढ़ो भव नरोत्तम ! ॥ २८ ॥
श्रुत्वा तु व्याहृतं वाक्यं सूतस्य परमाद्भुतम्।
प्रहर्षमतुलं लेभे साधु साध्विति चाब्रवीत् ॥ २९ ॥

ब्रह्मलोकं हिरण्यगर्भस्य लोकं वैकुण्ठम्। तस्यापि हिरण्यगर्भलोकैकदेशत्वमिति भावः ॥ २२ ॥

बहून् राजवंशान् लक्ष्मणादिपुत्रद्वारेति भावः। एतेन रामपुत्राणामपि चिरजीवित्वमुक्तप्रायमेव ॥ २३ ॥

स दुर्वासाः ॥ २४ ॥ २५ ॥

ततः संवदतोरेवं सूतलक्ष्मणयोः पथि ।
अस्तमर्के गते वासं केशिन्यान्तावथोषतुः ॥ ३० ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
एकपञ्चाशः सर्गः ॥ ५१ ॥

नान्यथा भविष्यति सत्यमेव भविष्यतीत्यर्थः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

---

## द्विपञ्चाशः सर्गः ।



तत्र तां रजनीमुष्य केशिन्यां रघुनन्दनः ।
प्रभाते पुनरुत्थाय लक्ष्मणः प्रययौ तदा ॥ १ ॥
ततोऽर्धदिवसे प्राप्ते प्रविवेश महारथः ॥ २ ॥
अयोध्यां रत्नसम्पूर्णां हृष्टपुष्टजनावृताम् ॥ २ ॥
सौमित्रिस्तु परं दैन्यं जगाम सुमहामतिः ।
रामपादौ समासाद्य वक्ष्यामि किमहङ्गतः ॥ ३ ॥
तस्यैवं चिन्तयानस्य भवनं शशिसन्निभम् ।
रामस्य परमोदारं पुरस्तात्समदृश्यत ॥ ४ ॥
राज्ञस्तु भवनद्वारि सोऽवतीर्य्य नरोत्तमः ।
अवाङ्मुखो दीनमनाः प्रविवेशानिवारितः ॥ ५ ॥
स दृष्ट्वा राघवं दीनमासीनं परमासने ।
नेत्राभ्यामश्रुपूर्णाभ्यां ददर्शाग्रजमग्रतः ॥ ६ ॥
जग्राह चरणौ तस्य लक्ष्मणो दीनचेतनः ।

अथागतेन लक्ष्मणेन रामाश्वासनम् । तत्रेति । केशिनीनामिन-
दीति कतकः ॥ १ ॥

दिवसस्यार्धमर्धदिवसम् ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

उवाच दीनया वाचा प्राञ्जलिः सुसमाहितः ॥ ७ ॥
आर्य्यस्याज्ञां पुरस्कृत्य विसृज्य जनकात्मजाम् ।
गङ्गातीरे यथोद्दिष्टे वाल्मीकेराश्रमे शुभे ॥ ८ ॥
तत्र ताञ्च शुभाचारामाश्रमान्ते यशस्विनीम् ।
पुनरप्यागतो वीर ! पादमूलमुपासितुम् ॥ ९ ॥
मा शुचः पुरुषव्याघ्र ! कालस्य गतिरीदृशी ।
त्वद्विधा न हि शोचन्ति बुद्धिमन्तो मनस्विनः ॥ १० ॥
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तञ्च जीवितम् ॥ ११ ॥
तस्मात् पुत्रेषु दारेषु मित्रेषु च धनेषु च ।
नातिप्रसङ्गः कर्त्तव्यो विप्रयोगो हि तैर्ध्रुवम् ॥ १२ ॥

अश्रुपूर्णाभ्यां नेत्राभ्यामुपलक्षितम् ॥ ६ ॥ ७ ॥ ८ ॥

उपासितुमागतवेति शेषः ॥ ९ ॥

मा शुचः सीतावियोगेनेति शेषः ॥ १० ॥

यया बुद्ध्या मनस्विनो न शोचन्ति तां बुद्धिमाह,—सर्वे इति । निचया रावणादेरिव महत्तरैश्वर्य्याणि । अवश्यं क्षयान्तान्येव नाशा-न्तान्येव । समुच्छ्रयाः इन्द्रजिदादेरिव शौर्य्यवीर्य्यादिजनितोन्नत्यानि पतनान्तान्येव । संयोगा युवयोरिव विप्रयोगान्ताः । सर्वस्य जनि-मतो जीवितं मरणान्तमेव ॥ ११ ॥

यत एवं तस्मादेषु अतिप्रसङ्गोऽत्यासक्तिः ॥ १२ ॥

शक्तस्त्वमात्मनात्मानं विनेतुं मनसा मनः।
लोकान् सर्वांश्च काकुत्स्थ! किं पुनः शोकमात्मनः॥ १३॥
नेदृशेषु विमुह्यन्ति तद्विधाः पुरुषर्षभाः।
अपवादः स किल ते पुनरेष्यति राघव!॥ १४॥
यदर्थं मैथिली त्यक्ता अपवादभयान्नृप!।
सोपवादः पुरे राजन्! भविष्यति न संशयः॥ १५॥

निजस्वरूपपर्य्यालोचनयापि शोको न कार्य्य इत्याह,—शक्त इति विनेतुं शिक्षितुम्। निग्रहीतुं सांसारिकदुःखाद्दारयितुमित्यर्थः। आत्मनेत्यत्र अन्तःकरणोपाधिर्जीवाभिन्नात्मा। आत्मानमन्तःकरणम्। मनसान्तःकरणेन। मनस्तद्वृत्तिविशेषरूपम्। अत्र मनःशब्दो भोगोपकरणेन्द्रियोपलक्षणम्। हे काकुत्स्थ सर्वलोकांश्च विनेतुमन्तर्य्यामिरूपेण शिक्षितुं समर्थस्त्वमात्मनः शोकं निवारयितुं समर्थ इति किं वक्तव्यमित्यर्थः॥ १३॥

तदेवाह,—नेदृशेष्विति। किञ्चैवं शोके क्रियमाणे अयप्रजानिबन्धनोऽनर्थं उभयतः पाशरज्जुरिव दुर्मोच इत्याह्वापवाद इति॥१४॥

हे नृप अपवादभयाद्भीतेन त्वया यदर्थं यदपवादनिवृत्तये सीता त्यक्ता। सोऽपवादः हे राजन् परगृहोषितां स्त्रियं त्यक्ता सर्वदा तामेवानुशोचतीति प्रकारान्तरेण स भविष्यति नात्र संशयः। यत्तु कतकेनामरादिना शुद्धत्वेनात्तां स्वयं दृष्टशुद्धिं गर्भिणीमपि रामः प्राकृतवद्विसृष्टवानिति पुरे अपवादो भविष्यतीति व्याख्यानम्। तत्तु शोकत्यागानुपपादकतयोपेक्षितम्॥ १५॥

स त्वं पुरुषशार्दूल ! धैर्य्येण सुसमाहितः ।
त्यजेमां दुर्बलां बुद्धिं सन्तापं मा कुरुष्व ह ॥ १६ ॥
एवमुक्तः स काकुत्स्थो लक्ष्मणेन महात्मना ।
उवाच परया प्रीत्या सौमित्रिं मित्रवत्सलः ॥ १७ ॥
एवमेतन्नरश्रेष्ठ ! यथा वदसि लक्ष्मण ! ।
परितोषश्च मे वीर ! मम कार्य्यानुशासने ॥ १८ ॥
निवृत्तिश्चागता सौम्य ! सन्तापश्च निराकृतः ।
भवद्वाक्यैः सुरुचिरैरनुनीतोऽस्मि लक्ष्मण ! ॥ १९ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
द्विपञ्चाशः सर्गः ॥ ५२ ॥

यदेवमत इमां बुद्धिं शोकबुद्धिं त्यज ॥ १६ ॥ १७ ॥

प्रजापालनाय मामेवं बोधयतीति लक्ष्मणाशयं ज्ञात्वा तदङ्गीकृत्यो-त्तरमाह,—एवमेतदिति श्लोकद्वयेन । हे लक्ष्मण वीर सौम्य लक्ष्मणेत्या-दरेण बहुशः सम्बोधनम् । राज्यपरिपालनं त्यक्त्वा एवं शोकोऽपवाद-इत्युक्तं त्वया । एतदेवमेव सत्यमेवातस्त्वद्वाक्यैरनुनीतोऽस्मि अतो मम-दुःखनिवृत्तिरागता जाता सन्तापश्च मया निराकृतः । अतएव मम-कार्य्यानुशासने प्रजारक्षणकार्य्यस्यानुष्ठाने मे मया परितोषः प्राप्त इति शेषः ॥ १८ ॥ १९ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

---

## त्रिपञ्चाशः सर्गः ।



लक्ष्मणस्य तु तद्वाक्यं निशम्य परमाद्भुतम् ।
सुप्रीतश्चाभवद्रामो वाक्यमेतदुवाच ह ॥ १ ॥
दुर्लभस्त्वीदृशो बन्धुरस्मिन् काले विशेषतः ।
यादृशस्त्वं महाबुद्धिर्मम सौम्य ! मनोनुगः ॥ २ ॥
यच्च मे हृदये किञ्चिद्वर्त्तते शुभलक्षण ! ।
तन्निशामय च श्रुत्वा कुरुष्व वचनं मम ॥ ३ ॥
चत्वारो दिवसाः सौम्य ! कार्य्यं पौरजनस्य च ।
अकुर्वाणस्य सौमित्रे ! तन् मे मर्माणि कृन्तति ॥ ४ ॥
आहूयन्तां प्रकृतयः पुरोधा मन्त्रिणस्तथा ।
कार्य्यार्थिनश्च पुरुषास्त्रियो वा पुरुषर्षभ ! ॥ ५ ॥
पौरकार्य्याणि यो राजा न करोति दिने दिने ।

अथ रामेण लक्ष्मणोक्तस्यौचित्यप्रदर्शनाय प्रजारक्षणस्यावश्यकत्व-बोधनं प्रजाकृत्यावेक्षणफलकप्रजाह्वानाय लक्ष्मणप्रेषणञ्च । लक्ष्मणस्य त्विति । परमाद्भुतं सर्वं कथान्ता इत्यादि वाक्यम् ॥ १ ॥ २ ॥ ३ ॥
चत्वारोदिवसा गता इति शेषः । तत्प्रजानानुशासनम् ॥ ४ ॥
स्त्रियो वा । कार्य्यार्थिन्य इति शेषः ॥ ५ ॥

संवृते नरके घोरे पतितो नात्र संशयः ॥ ६ ॥
श्रूयते हि पुरा राजा नृगो नाम महायशाः ।
बभूव पृथिवीपालो ब्रह्मण्यः सत्यवाक् शुचिः ॥ ७ ॥
स कदाचिद्गवां कोटीः सवत्साः स्वर्णभूषिताः ।
नृदेवो भूमिदेवेभ्यः पुष्करेषु ददौ नृपः ॥ ८ ॥
ततः सङ्गाद्गता धेनुः सवत्सा स्पर्शिताऽनघ ! ।
ब्राह्मणस्याहिताग्नेस्तु दरिद्रस्योञ्छवर्त्तिनः ॥ ९ ॥
स नष्टाङ्गां क्षुधार्त्तो वै अन्विषंस्तत्र तत्र ह ।
नापश्यत्सर्वराष्ट्रेषु संवत्सरगणान् बहून् ॥ १० ॥
ततः कनखलङ्गत्वा जीर्णवत्सां निरामयाम् ।
ददर्श तां स्वकां धेनुं ब्राह्मणस्य निवेशने ॥ ११ ॥

संवृते वायुस्पर्शहीने । पतितः भवेदिति शेषः ॥ ६ ॥

ब्रह्मण्यः ब्राह्मणभक्तः ॥ ७ ॥

पुष्करेषु पुष्करतीर्थेषु ॥ ८ ॥

सङ्गाद्राजदानार्थं नीयमानबहुगोसङ्गात् । स्पर्शिता ब्राह्मणाय दत्ता । बहुदोहिनीति पाठान्तरम् । आहिताग्नेर्दरिद्रस्येत्यनेनाग्निहोत्रहविरर्थमपि धेन्वन्तराभाव उक्तः । उञ्छः क्षेत्रपतितान्नस्य कणश आदानम् ॥ ९ ॥

स नष्टगुः ॥ १० ॥

जीर्णवत्साम् । संवत्सरगणान् बहूनित्युक्तः ॥ ११ ॥

अथ तां नामधेयेन स्वकेनोवाच ब्राह्मणः ।
आगच्छ शबलेत्येवं सा तु शुश्राव गौः स्वरम् ॥ १२ ॥
तस्य तं स्वरमाज्ञाय क्षुधार्त्तस्य द्विजस्य वै ।
अन्वगात् पृष्ठतः सा गौर्गच्छन्तं पावकोपमम् ॥ १३ ॥
योऽपि पालयते विप्रः सोऽपि गामन्वगाद् द्रुतम् ।
गत्वा च तमृषिं चष्टे मम गौरिति च त्वरन् ॥ १४ ॥
स्पर्शिता राजसिंहेन मम दत्ता नृगेण च ।
तयोर्ब्राह्मणयोर्वादो महानासीद्विपश्चितोः ॥ १५ ॥
विवदन्तौ ततोऽन्योन्यं दातारमभिजग्मतुः ।
तौ राजभवनद्वारि न प्राप्तौ नृगशासनम् ॥ १६ ॥
अहोरात्राण्यनेकानि वसन्तौ क्रोधमीयतुः ।
ऊचतुश्च महात्मानौ तावुभौ द्विजसत्तमौ ॥
क्रुद्धौ परमसंप्राप्तौ वाक्यं घोराभिसंहितम् ॥ १७ ॥

स्वकेन स्वकृतेन । १२ । १३ ।

योऽपि ख्यातो वत्सदानः । तमृषिं नृगवाग्दत्तमानमृषिम् । ख्यातकीर्त्तिं तु । तमृषिं यस्य गेहे स्थितामन्वगात् सः प्रतिग्रहीतावेषी द्विजो नृगेण स्पर्शिता दत्तेत्याचष्टे इत्यन्वयः इति व्याचख्युः । मम तु भाति गवानुगमनादन्येनूनाक्षमीयत्वं सिद्धम् । ख्यातो मया वर्धिते परेण सोऽभियुक्तोऽन्यगादित्यत्र दातुरेव गमनेन वक्तृत्वप्रतीतिरुपकारस्य सिद्धत्वमेवेति । १४ । १५ ।

अर्थिनां कार्य्यसिद्ध्यर्थं यस्मात्त्वं नैषि दर्शनम् ।
अदृश्यः सर्वभूतानां कृकलासो भविष्यसि ॥ १८ ॥
बहुवर्षसहस्राणि बहुवर्षशतानि च ।
श्वभ्रे लङ्कलीभूतो दीर्घकालं निवत्स्यसि ॥ १९ ॥
उत्पत्स्यते हि लोकेऽस्मिन्यदूनां कीर्त्तिवर्धनः ।
वासुदेव इति ख्यातो विष्णुः पुरुषविग्रहः ॥ २० ॥
स ते मोचयिता शापाद्राजंस्तस्माद्भविष्यसि ।
कृता च तेन कालेन निष्कृतिस्ते भविष्यति ॥ २१ ॥
भारावतरणार्थं हि नरनारायणावुभौ ।
उत्पत्स्येते महावीर्य्यौ कलौ युग उपस्थिते ॥ २२ ॥
एवन्तौ शापमुत्सृज्य ब्राह्मणौ विगतज्वरौ ।

न्यग्शासनं राजसविधे प्रवेशनियोगे । १६ ॥ १७ ॥ १८ ॥

कृकलीभूतः कृकलासीभूतः ॥ १९ ॥

एवं शापं दत्त्वा समनुतप्तचित्तौ स्वयमेव शापावसानं चक्रतुरित्याहोत्पत्स्यत इति । वासुदेवः वसुदेवापत्यम् । यद्वा सर्वभूतेषु वासाद्वासुः स चासौ देवः पुरुषविग्रहः पुरुषशरीरसदृशशरीरः ॥ २० ॥

स ते त्वां शापात् मोचयिता । हे राजंस्तस्मात् भविष्यसि । कृकलास इति शेषः । तेन कालेन कृष्णावतारावधिकालेन । गांस्पेशेत्यर्थः । निष्कृतिः शापमोक्षः ॥ २१ ॥

तं कालमाह,—भारेति । कलौ । यस्मिन्चतुर्युगीस्थे कलाविन्यर्थः ॥ २२ ॥

तां गां हि दुर्बलां वृद्धां ददतुर्ब्राह्मणाय वै ॥ १३ ॥
एवं स राजा तं शापमुपभुंक्ते सुदारुणम्।
कार्य्यार्थिनां विमर्द्दो हि राज्ञां दोषाय कल्पते ॥ १४ ॥
तच्छीघ्रं दर्शनं मह्यमभिवर्त्तन्तु कार्य्यिण:।
सुकृतस्य हि कार्य्यस्य फलमाप्नोति पार्थिव: ॥ १५ ॥
तस्माद्गच्छ प्रतीक्षस्व सौमित्रे ! कार्य्यवान् जनः ॥ १६ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
त्रिपञ्चाशः सर्गः ॥ ५३ ॥

ब्राह्मणाय। अन्यस्मै इति शेषः ॥ १३ ॥

न्मगवच्छीघ्रं प्रजागुणदोषाविचारे राज्ञां दोष इत्याह,—कार्य्यार्थिनामिति। विमर्द्दः कलहः। राज्ञां प्रजानां न्यायान्यायविचारमकुर्वताम् ॥ २४ ॥

अभिवर्त्तन्तु अभिवर्त्तयन्तु। मह्यं मम कार्य्यिणः प्रजाः अधिकारिणश्च। ननु न्मगस्याप्येवमवस्था चेत् अलं सुकृतकर्म्मणेति प्रश्नावन्तं लक्ष्मणं लक्षयित्वाह,—सुकृतस्येति। कार्य्यस्य कर्त्तव्यस्य। सुकृतस्य प्रजापालनधर्मस्य फलं पार्थिवोऽमाप्नोति। काकुः। प्राप्नोत्येवेत्यर्थः ॥२५॥

कार्य्यवान् जनः क आयाति तत्प्रतीक्षस्व। द्वारि स्थित्वेति शेषः॥२६

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

## चतुःपञ्चाशः सर्गः ।



रामस्य भाषितं श्रुत्वा लक्ष्मणः परमार्थवित् ।
उवाच प्राञ्जलिर्वाक्यं राघवं दीप्ततेजसम् ॥ १ ॥
अल्पापराधे काकुत्स्थ ! द्विजाभ्यां शाप ईदृशः ।
महान्नृगस्य राजर्षेर्यमदण्ड इवापरः ॥ २ ॥
श्रुत्वा तु पापसंयुक्तमात्मानं पुरुषर्षभ ! ।
किमुवाच नृगो राजा द्विजौ क्रोधसमन्वितौ ॥ ३ ॥
लक्ष्मणेनैव मुक्तस्तु राघवः पुनरब्रवीत् ।
शृणु सौम्य ! यथा पूर्वं स राजा शापविक्षतः ॥ ४ ॥
अथाध्वनि गतौ विप्रौ विज्ञाय स नृपस्तदा ।
आहूय मन्त्रिणः सर्वान्नैगमान् सपुरोधसः ॥ ५ ॥

अथ लक्ष्मणेन विस्मित्य नृगवृत्तान्तप्रश्ने तदुत्तरं रामस्येति ॥ १ ॥

ईदृशः शापोदत्त इति शेषः ॥ २ ॥

पापसंयुक्तं शापरूपपापसंयुक्तम् ॥ ३ ॥

शापविक्षतः स राजा यथा पूर्वमुवाच तद्वक्ष्यामि शृण्विति सम्बन्धः ॥ ४ ॥

द्विजौ प्रति किमुवाचेति प्रश्नायान्तयोरदर्शनमेवाभूदित्याशयेति ।

तानुवाच नृगो राजा सर्वांश्च प्रकृतीस्तथा ।
दुःखेन सुसमाविष्टः श्रूयतां मे समाहिताः ॥ ६ ॥
नारदः पर्वतश्चैव मम दत्त्वा महद्भयम् ।
गतौ त्रिभुवनं भद्रौ वायुभूतावनिन्दितौ ॥ ७ ॥
कुमारोऽयं वसुर्नाम स चेहाद्याभिषिच्यताम् ।
श्वभ्रञ्च यत् सुखस्पर्शं क्रियतां शिल्पिभिर्मम ॥ ८ ॥
यत्राहं संचयिष्यामि शापं ब्राह्मणनिःसृतम् ।
वर्षघ्नमेकं श्वभ्रन्तु हिमघ्नमपरं तथा ॥ ९ ॥
ग्रीष्मघ्नन्तु सुखस्पर्शमेकं कुर्वन्तु शिल्पिनः ।
फलवन्तश्च ये वृक्षाः पुष्पवत्यश्च या लताः ॥ १० ॥
विरोप्यन्तां बहुविधाश्छायावन्तश्च गुल्मिनः ।
क्रियतां रमणीयञ्च श्वभ्राणां सर्वतो दिशम् ॥ ११ ॥

अध्वनि व्योमाध्वनि गतौ तौ विज्ञाय । ध्यानेनामुक्ताविति वास्मितार्थः । नैगमाः पौराः ॥ ५ ॥

श्रूयतां मे वचनमिति शेषः ॥ ६ ॥

नारदपर्वतौ मुनी यदृच्छया समागत्य द्विजेन्द्रप्रयुक्तस्य शापस्य निवेदनेन मम महद्भयं दत्त्वा उक्त्वा त्रिभुवनं त्रितीयं भुवनं ब्रह्मलोकं गतौ वायुभूतौ वायुवदतिवेगौ । यद्वा । तौ आत्मयावेवौ तत्संज्ञौ । तत्प्रयुक्तशापश्रवणस्य राज्ञो ध्यानेनेति बोध्यम् ॥ ७ ॥

श्वभ्रङ्गर्तः ॥ ८ ॥ ९ ॥ १० ॥

सुखमत्र वसिष्यामि यावत्कालस्य पर्य्ययः।
पुष्पाणि च सुगन्धीनि क्रियतां तेषु नित्यशः॥ १२॥
परिवार्य्य यथा मे स्युरध्यर्धं योजनन्तथा।
एवं कृत्वा विधानं स सन्निवेश्य वसुन्धरा॥ १३॥
धर्मनित्यः प्रजाः पुत्र! क्षत्रधर्मेण पालय।
प्रत्यचन्ते यथा शापो द्विजाभ्यां मयि पातितः॥ १४॥
नरश्रेष्ठ! सरोषाभ्यामपराधेऽपि तादृशे।
मा कृथास्त्वनुसन्तापं मत्कृते हि नरर्षभ!॥ १५॥
कृतान्तः कुशलः पुत्र! येनास्मि व्यसनीकृतः।
प्राप्तव्यान्येव प्राप्नोति गन्तव्यान्येव गच्छति॥ १६॥

गुल्मिनः कक्षवत्यः॥ ११॥

अध्यर्धं योजनं परिवार्य्य यथा पुष्पाणि स्युस्तथा क्रियतामित्य-न्वयः॥ १२॥ १३॥

हे पुत्र धर्मनित्यो भूत्वा प्रजाः क्षत्रधर्मेण पालयेत्यदेदेवमुक्त्वे-त्यनेन अष्टादशश्लोकस्यप्रथमपादेन सम्बन्धः॥ १४॥

तादृशेऽपि अल्पेऽपि॥ १५॥

कृतान्तः प्राचीनकर्म। कुशलः सुखदुःखप्रापणप्रभुः। व्यसनी व्यसनवान्। प्राप्तव्यानि प्राप्नोतीत्यत्रापि योजना। प्राप्तव्यानि स्वकत्र-स्थले एव तिष्ठतो यत्नं विना प्राप्याणि। गन्तव्यानि स्वयमन्यत्र गत्वा प्राप्याणि॥ १६॥

लब्धव्यान्येव लभते दुःखानि च सुखानि च।
पूर्वे जात्यन्तरे वत्स! मा विषादं कुरुष्व ह॥ १७॥
एवमुक्त्वा नृपस्तत्र सुतं राजा महायशाः।
श्वभ्रं जगाम सुकृतं वासाय पुरुषर्षभ!॥ १८॥
एवं प्रविश्यैव नृपस्तदानीं
श्वभ्रं महद्रत्नविभूषितं तत्।
सम्पादयामास तदा महात्मा
शापं द्विजाभ्यां हि रुषा विमुक्तम्॥ १९॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
चतुःपञ्चाशः सर्गः॥ ५४॥

लब्धव्यानि स्थले एव तिष्ठतो यत्नलभ्यानि। पूर्वे जात्यन्तरे। सम्पादितकारणानीति शेषः। सुखानि दुःखानि प्रामव्यादीनि प्राप्नोतीत्यर्थः। अनेन दुःखाद्यनुभवे नान्यो मूलं किन्तु स्वकृतकर्मैवेत्युक्तम्॥ १७॥

सुकृतं सुष्ठुकृतम्॥ १८॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे चतुःपञ्चाशः सर्गः॥ ५०॥

## पञ्चपञ्चाशः सर्गः ।



एष ते नृपशापस्य विस्तरोऽभिहितो मया ।
यद्यस्ति श्रवणे श्रद्धा शृणुष्वेहापरां कथाम् ॥ १ ॥
एवमुक्तस्तु रामेण सौमित्रिः पुनरब्रवीत् ।
तृप्तिराश्चर्य्यभूतानां कथानां नास्ति मे नृप ! ॥ २ ॥
लक्ष्मणेनैवमुक्तस्तु राम इक्ष्वाकुनन्दनः ।
कथां परमधर्मिष्ठां व्याहर्तुमुपचक्रमे ॥ ३ ॥
आसीद्राजा निमिर्नाम इक्ष्वाकूणां महात्मनाम् ।
पुत्रो द्वादशमो वीर्य्ये धर्मे च परिनिष्ठितः ॥ ४ ॥
स राजा वीर्य्यसम्पन्नः पुरन्देवपुरोपमम् ।
निवेशयामास तदा अभ्याशे गौतमस्य तु ॥ ५ ॥

सम्पादयामास सम्पादयाञ्चकार अनुभवति स्मेत्यर्थः ॥ १९ ॥

अथ रामेण पुनर्ब्राह्मणापराधेन शापप्राप्तिकथाभाषणम् । एष ते इति । इह राज्ञामपराधविषये ॥ १ ॥

कथानां श्रवणे इति शेषः ॥ २ ॥ ३ ॥

इक्ष्वाकूणाम् इक्ष्वाकुपुत्राणाम् । द्वादशमः द्वादशसंख्यापूरणः । संख्यादेरपि मड़ार्षः ॥ ४ ॥

गौतमस्य अभ्याशे गौतमाश्रमसमीपे ॥ ५ ॥

पुरस्य सुकृतं नाम वैजयन्तमिति श्रुतम्।
निवेशं यत्र राजर्षिर्निमिश्चक्रे महायशाः॥ ६॥
तस्य बुद्धिः समुत्पन्ना निवेश्य सुमहापुरम्।
यजेयं दीर्घसत्रेण पितुः प्रह्लादयन्मनः॥ ७॥
ततः पितरमामन्त्र्य इक्ष्वाकुं हि मनोः सुतम्।
वसिष्ठं वरयामास पूर्वं ब्रह्मर्षिसत्तमम्॥ ८॥
अनन्तरं स राजर्षिर्निमिरिक्ष्वाकुनन्दनः।
अत्रिमङ्गिरसञ्चैव भृगुञ्चैव तपोनिधिम्॥ ९॥
तमुवाच वसिष्ठस्तु निमिं राजर्षिसत्तमम्।
वृतोऽहं पूर्वमिन्द्रेण अन्तरं प्रतिपालय॥ १०॥
अनन्तरं महाविप्रो गौतमः प्रत्यपूरयत्।
वसिष्ठोऽपि महातेजा इन्द्रयज्ञमथाकरोत्॥ ११॥
निमिस्तु राजा विप्रांस्तान् समानीय नराधिपः।

सुकृतं सुष्ठुकृतं निवेशं वासं यत्र चक्रे तस्य पुरस्येत्यन्वयः॥ ६॥

पितुरिक्ष्वाकोः। दीर्घसत्रं बहुकालसाध्यो बहुयजमानकः सत्राख्यो यागः॥ ७॥

पूर्वं वसिष्ठवरणं ततोऽत्र्यादिवरणम्॥ ८॥ ९॥

अन्तरं प्रतिपालय इन्द्रयागसमाप्तिपर्य्यन्तावकाशं प्रतिपालय प्रतीक्षस्व। इन्द्रं याजयित्वा त्वां याजयिष्य इति भावः। देवानामपि यज्ञाधिकारः प्राक् निरूपितः॥ १०॥

अयजद्धिमवत्पार्श्वे स्वपुरस्य समीपतः ॥ १२ ॥
पञ्चवर्षसहस्राणि राजा दीक्षामथाकरोत् ।
इन्द्रयज्ञावसाने तु वसिष्ठो भगवानृषिः ॥ १३ ॥
सकाशमागतो राज्ञो हौत्रं कर्तुमनिन्दितः ।
तदन्तरमथापश्यद्गौतमेनाभिपूरितम् ॥ १४ ॥
कोपेन महताविष्टो वसिष्ठो ब्रह्मणः सुतः ।
स राज्ञो दर्शनाकाङ्क्षी मुहूर्तं समुपाविशत् ।
तस्मिन्नहनि राजर्षिर्निद्रयापहृतो भृशम् ॥ १५ ॥
ततो मन्युर्वसिष्ठस्य प्रादुरासीन् महात्मनः ।
अदर्शनेन राजर्षेर्व्याहर्तुमुपचक्रमे ॥ १६ ॥
यस्मात्त्वमन्यं कृतवान्मामवज्ञाय पार्थिव ! ।
चेतनेन विनाभूतो देहस्ते पार्थिवैष्यति ॥ १७ ॥
ततः प्रबुद्धो राजा तु श्रुत्वा शापमुदाहृतम् ।
ब्रह्मयोनिमथोवाच स राजा क्रोधमूर्च्छितः ॥ १८ ॥

अनन्तरं वसिष्ठागमनानन्तरम् । गौतमः प्रत्यपूरयद्वसिष्ठकर्तव्यं होत्रमार्त्विज्यम् । राम इति शेषः ॥ ११ ॥

तान् विप्रानत्र्यादीनित्यर्थः ॥ १२ ॥ १३ ॥

तदन्तरं वसिष्ठेन प्रविश्यमानीयमित्युक्तमवकाशं गौतमेन पूरित-मपश्यत् । कर्तव्यमार्त्विज्यं गौतमेन क्रियमाणमपश्यदित्यर्थः ॥ १४ ॥

निद्रयापहृतः । असमाप्ते एव सत्रे इति भावः ॥ १५ ॥ १६ ॥

अजानतः शयानस्य क्रोधेन कलुषीकृतः।
उक्तवान् मम शापाग्निं यमदण्डमिवापरम् ॥ १९ ॥
तस्मात्त्वापि ब्रह्मर्षे! चेतनेन विनाकृतः।
देहः स सुचिरप्रख्यो भविष्यति न संशयः ॥ २० ॥
इति रोषवशादुभौ तदानी-
मन्योन्यं शपितौ नृपद्विजेन्द्रौ।
सहसैव बभूवतुर्विदेहौ
तत्तुल्याधिगतप्रभाववन्तौ ॥ २१ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

मामवध्यायेत्यस्य सपितिचेति शेषः। चेतनेन विनाभूतः। मृत इत्यर्थः। स्यति भविष्यति ॥ १७ ॥ १८ ॥ १९ ॥

चेतनेम विनाकृतोऽमृतः। सुचिरा प्रख्या शोभा यस्य सः ॥ २० ॥

तदिति ब्रह्मनाम। ब्रह्मयत्तुल्यं तुल्यतया अधिगतः प्राप्तो यः प्रभावस्तद्वन्तौ। ब्रह्मतुल्यप्रभावाविति यावत् ॥ २१ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

## षट्पञ्चाशः सर्गः ।



रामस्य भाषितं श्रुत्वा लक्ष्मणः परवीरहा ।
उवाच प्राञ्जलिर्भूत्वा राघवं दीप्ततेजसम् ॥ १ ॥
निक्षिप्य देहौ काकुत्स्थ ! कथन्तौ द्विजपार्थिवौ ।
पुनर्देहेन संयोगं जग्मतुर्देवसम्मतौ ॥ २ ॥
लक्ष्मणेनैव मुक्तस्तु राम इक्ष्वाकुनन्दनः ।
प्रत्युवाच महातेजा लक्ष्मणं पुरुषर्षभः ॥ ३ ॥
तौ परस्परशापेन देहमुत्सृज्य धार्मिकौ ।
अभूतां नृपविप्रर्षी वायुभूतौ तपोधनौ ॥ ४ ॥
अशरीरः शरीरस्य कृतेन्यस्य महामुनिः ।
वसिष्ठस्तु महातेजा जगाम पितुरन्तिकम् ॥ ५ ॥
सोभिवाद्य ततः पादौ देवदेवस्य धर्मवित् ।
पितामहमथोवाच वायुभूतः इदं वचः ॥ ६ ॥

अथ त्यक्तदेहयोः पुनर्देहप्राप्तिप्रश्नोत्तरे । रामस्येति ॥ १ ॥
देवसम्मतौ देवपूजितौ ॥ २ ॥ ३ ॥ ४ ॥
अन्यस्य शरीरस्य कृते अन्यस्थूलशरीरप्राप्तिनिमित्तम् ॥ ५ ॥

भगवन्निमिशापेन विदेहत्वमुपागमम्।
देवदेव महादेव! वायुभूतोऽहमण्डज!॥ ७॥
सर्वेषां देहहीनानां महद्दुःखं भविष्यति।
लुप्यन्ते सर्वकार्य्याणि हीनदेहस्य वै प्रभो!॥ ८॥
देहस्यान्यस्य सद्भावे प्रसादं कर्त्तुमर्हसि।
तमुवाच ततो ब्रह्मा स्वयम्भूरमितप्रभः॥ ९।
मित्रावरुणजन्तेज आविश त्वं महायशः।
अयोनिजस्त्वम्भविता तत्रापि द्विजसत्तम!॥
धर्म्मेण महता युक्तः पुनरेष्यसि मे वशम्॥ १०॥
एवमुक्तस्तु देवेन अभिवाद्य प्रदक्षिणम्।
कृत्वा पितामहं तूर्णं प्रययौ वरुणालयम्॥ ११॥

अभिवाद्य। अभिवादनादि अशरीरस्यापि तपःप्रभावात्लिङ्ग-देहेनोपपन्नम्॥ ६॥

उपागमं प्राप्तः॥ ७॥

महद्दुःखस्य भविष्यत्वे सर्वकार्य्यविलोपः। सर्वकार्य्याणि ऐहिकामुष्मिकसर्वप्रयोजनानि॥ ८॥

सद्भावे प्राप्तौ॥ ९॥

मित्रावरुणजन्तद्विरहम्। तत्रापि मित्रावरुणरेतःप्रवेशेऽपि। मे वशं मत्पुत्रत्वेन पूर्ववत् प्रजापतित्वमपि प्राप्स्यसीति भावः॥ १०॥

वरुणालयं समुद्रम्॥ ११॥

तमेव कालं मित्रोऽपि वरुणत्वमकारयत् ।
क्षीरोदेन सहोपेतः पूज्यमानः सुरेश्वरैः ॥ १२ ॥
एतस्मिन्नेव काले तु उर्वशी परमाप्सरा ।
यदृच्छया तमुद्देशमागता सखिभिर्वृता ॥ १३ ॥
तां दृष्ट्वा रूपसम्पन्नां क्रीड़न्तीं वरुणालये ।
तदाविशत्परो हर्षो वरुणश्चोर्वशीकृते ॥ १४ ॥
स तां पद्मपलाशाक्षीं पूर्णचन्द्रनिभाननाम् ।
वरुणो वरयामास मैथुनायाप्सरोवराम् ॥ १५ ॥
प्रत्युवाच ततः सा तु वरुणं प्राञ्जलिः स्थिता ।
मित्रेणाहं वृता साक्षात् पूर्वमेव सुरेश्वर ! ॥ १६ ॥

तमेव कालं तस्मिन्नेव काले वसिष्ठागमनकाले । मित्रः पूषार्य्यमादिवत् सूर्य्यमण्डलस्थमूर्त्तिभेदः । सुरेश्वरैः पूज्यमानः सन् क्षीरोदेन क्षीरोदात्मकेन वरुणेनोपेतः सन् वरुणत्वं वरुणतादात्म्यमकारयत् भावयति स्म । यद्वा मित्रोऽपि वरुणत्वं वरुणाधिकारमकरोदित्यर्थः । एवञ्च मित्रतादात्म्यापन्नेन वरुणेन विसृष्टत्वात् वरुणरेतो विसर्गस्यापि पूर्वं मित्रकृतोर्वशीनिमित्तत्वाच्च वरुणरेतोऽपि मित्रावरुणरेतो भवतीति मित्रावरुणजन्तोज आविवेशेत्यनेन न विरोधः ॥ १२ ॥

एतस्मिन्नेव काले वरुणात्मना मित्रावस्थानकाले । १३ ।

वरुणालये क्षीरोदे । १४ ॥ १५ ॥ १६ ॥

वरुणस्त्वब्रवीद्वाक्यं कन्दर्पशरपीड़ितः।
इदं तेजः समुत्स्रक्ष्ये कुम्भेऽस्मिन् देवनिर्मिते॥ १७॥
एवमुत्सृज्य सुश्रोणि! त्वय्यहं वरवर्णिनि!।
कृतकामो भविष्यामि यदि नेच्छसि सङ्गमम्॥ १८॥
तस्य तल्लोकनाथस्य वरुणस्य सुभाषितम्।
उर्वशी परमप्रीता श्रुत्वा वाक्यमुवाच ह॥ १९॥
काममेतद्भवत्वेवं हृदयं मे त्वयि स्थितम्।
भावश्चाप्यधिकं तुभ्यं देहो मित्रस्य तु प्रभो!॥ २०॥
उर्वश्या एवमुक्तस्तु रेतस्तन्महदद्भुतम्।
ज्वलदग्निसमप्रख्यं तस्मिन् कुम्भे न्यवासृजत्॥ २१॥
उर्वशीत्वगमत्तत्र मित्रो वै यत्र देवता।
तान्तु मित्रः सुसंक्रुद्ध उर्वशीमिदमब्रवीत्॥ २२॥

इदन्तेजः तद्दर्शनक्षुभितवीर्य्यरूपम्। देवनिर्मिते कुम्भे पुत्रोत्पत्ति समर्थतया ब्रह्मसृष्टे॥ १७॥

त्वयि। त्वन्निमित्तमित्यर्थः। कृतकामः कृतकामभोगः॥ १८॥ १९॥

कामम् अधिकम्। मे हृदयं चित्तं त्वयि स्थितम्। तुभ्यन्तवच भावोऽधिकं मयि स्थितोऽत एतदेवं भवतु कुम्भे वीर्य्योत्सर्गो भवतु। हे प्रभो देहस्तु मम पूर्व्वंवृतस्य मित्रस्यास्तु। भावेन भोगस्त्वया सह मम देहेन भोगो मित्रेणास्थितयुक्तो भवति॥ २०॥

मयाऽभिमन्त्रिता पूर्वं कस्मात्त्वमवसर्जिता ।
पतिमन्यं वृतवती किमर्थं दुष्टचारिणि ! ॥ २३ ॥
अनेन दुष्कृतेन त्वं मत्क्रोधकलुषीकृता ।
मनुष्यलोकमास्थाय कञ्चित्कालं निवत्स्यसि ॥ २४ ॥
बुधस्य पुत्रो राजर्षिः काशिराजः पुरूरवाः ।
तमभ्यागच्छ दुर्बुद्धे ! स ते भर्त्ता भविष्यति ॥ २५ ॥
ततः सा शापदोषेण पुरूरवसमभ्यगात् ।
प्रतिष्ठाने पुरूरवं बुधस्यात्मजमौरसम् ॥ २६ ॥
तस्य जज्ञे ततः श्रीमानायुः पुत्रो महाबलः ।
नहुषो यस्य पुत्रस्तु बभूवेन्द्रसमद्युतिः ॥ २७ ॥
वज्रमुत्सृज्य वृत्राय श्रान्तेथ त्रिदिवेश्वरे ।
शतं वर्षसहस्राणि येनेन्द्रत्वं प्रशासितम् ॥ २८ ॥
　　सा तेन शापेन जगाम भूमिं
　　तदोर्वशी चारुदती सुनेत्रा ।

रेतस्कन्दावसम्भोगयुभितम् ॥ २१ ॥ २२ ॥
अवसर्जिता विसृष्टवती । मामिति शेषः ॥ २३ ॥
अनेन दुष्कृतेन एकं पतिमङ्गीकृत्यतत्समये द्वितीयवरणं साधारणस्त्रीणामपि महद्दुष्कृतमित्यनेन बोधितम् । मनुष्यलोकमास्थाय । अनेन देवरूपेणैवेति शेषः ॥ २४ ॥ २५ ॥

बहूनि वर्षाण्यवसच्च सुभ्रूः
शापक्षयादिन्द्रसदो ययौ च ॥ २८ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
षट्पञ्चाशः सर्गः ॥ ५६ ॥

पुरूरवं पुरूरवसम् ॥ २६ ॥ २७ ॥ २८ ॥ २८ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

# सप्तपञ्चाशः सर्गः ।



तां श्रुत्वा दिव्यसङ्काशां कथामद्भुतदर्शनाम् ।
लक्ष्मणः परमप्रीतो राघवं वाक्यमब्रवीत् ॥ १ ॥
निक्षिप्तदेहौ काकुत्स्थ ! कथन्तौ द्विजपार्थिवौ ।
पुनर्देहेन संयोगं जग्मतुर्देवसम्मतौ ॥ २ ॥
तस्य तद्भाषितं श्रुत्वा रामः सत्यपराक्रमः ।
तां कथां कथयामास वसिष्ठस्य महात्मनः ॥ ३ ॥
यः स कुम्भो रघुश्रेष्ठ ! तेजःपूर्णो महात्मनोः ।
तस्मिंस्तेजोमयौ विप्रौ सम्भूतावृषिसत्तमौ ॥ ४ ॥

अथ तद्विस्तरेतःसकाशाद्देहोत्पत्तिप्रकारकथनम् । तामिति । दिव्यसङ्काशां दिव्यरूपाम् ॥ १ ॥

निक्षिप्तदेहौ विसृष्टदेहौ पुनर्देहसंयोगं कथं जग्मतुः ॥ २ ॥

कुम्भे वरुणेन रेतोविसर्ग उक्तः । तावता देहसिद्धिप्रश्नोत्तरं न लब्धमिति पुनः प्रश्नः । तां कथां वसिष्ठस्य देहोत्पत्तिविषयामवशिष्टां कथाम् ॥ ३ ॥

महात्मनोर्मित्रावरुणयोस्तेजः पूर्णः । अत्रैवमाख्यायिका । प्रथममुर्वशीं मित्रो दृष्ट्वा तामामन्त्रितवान् । तया च त्वन्निवासमागच्छामीत्युक्तस्तदा वरुणलोकस्थ एव मित्रस्तद्दर्शनात् हठस्खलितं निजतेजः

एवं समभवत्तत्र अगस्त्यो भगवानृषिः।
नाहं सुतस्तवेत्युक्त्वा मित्रं तस्मादपाक्रमत् ॥ ५ ॥
तद्धि तेजस्तु मित्रस्य उर्वश्याः पूर्वमाहितम्।
तस्मिन् समभवत् कुम्भे तत्तेजो यत्र वारुणम् ॥ ६ ॥
कस्यचित्त्वथ कालस्य मित्रावरुणसम्भवः।
वसिष्ठस्तेजसा युक्तो जज्ञे इक्ष्वाकुदैवतम् ॥ ७ ॥
तमिक्ष्वाकुर्महातेजा जातमात्रमनिन्दितम्।
वव्रे पुरोधसं सौम्य! वंशस्यास्य हिताय नः ॥ ८ ॥

कुम्भे उत्सृज्य स्वनिवासं जगाम। पश्चाद्वरुणोऽपि तां दृष्ट्वा स्खलितं तेजः कुम्भे व्यसृजत्। ततो मित्रनिवासकृता मित्रेण सृष्टा चेति ॥ ४ ॥

नाहं सुतस्तवेति। यद्यपि मित्रेणापि कुम्भे रेत उत्सृष्टं तथापि तवैकस्य पुत्रो न भवामीत्युक्त्वाऽपाक्रमत् ॥ ५ ॥

एवमुक्तौ बीजमाह,—तद्धि तेज इति। अगस्त्योत्पत्तिहेतुभूतं मित्रस्य तेजः उर्वश्याः पूर्वमुर्वशीनिमित्तवरुणवीर्यविसर्गात् पूर्वमाहितम्। तस्मिन् कुम्भे तस्मिन्नेव कुम्भे वारुणं तेजः समभवत् सङ्गतमभवत्। यत्र कुम्भे तत्तेजः मित्रस्य तेज आसीत्। अतस्तेजोन्तरसङ्गादुत्पत्तेर्नैकस्य तव सुत इत्युक्तमगस्त्येन। अतएव मैत्रावरुणिरित्यगस्त्यनाम ॥ ६ ॥

तदनन्तरं कस्यचित्कालस्य मित्रावरुणसम्भवः। अन्योत्पत्तिरुक्ता। वसिष्ठो जज्ञे। तेजसा युक्तो मित्रावरुणयोर्दिव्यतेजसा युक्तः ॥ ७ ॥ ८ ॥

एवन्त्वपूर्वदेहस्य वसिष्ठस्य महात्मनः ।
कथितो निर्गमः सौम्य ! निमेः शृणु यथाभवत् ॥ ९ ॥
दृष्ट्वा विदेहं राजानमृषयः सर्व एव ते ।
तञ्च ते याजयामासुर्यज्ञदीक्षां मनीषिणः ॥ १० ॥
तञ्च देहं नरेन्द्रस्य रक्षन्ति स्म द्विजोत्तमाः ।
गन्धैर्माल्यैश्च वस्त्रैश्च पौरभृत्यसमन्विताः ॥ ११ ॥
ततो यज्ञे समाप्ते तु भृगुस्तत्रेदमब्रवीत् ।
आनयिष्यामि ते चेतस्तुष्टोऽस्मि तव पार्थिव ! ॥ १२ ॥
सुप्रीताश्च सुराः सर्वे निमेश्चेतस्तदाब्रुवन् ।
वरं वरय राजर्षे ! क्व ते चेतो निरूप्यताम् ॥ १३ ॥
एवमुक्तः सुरैः सर्वैर्निमेश्चेतस्तदाब्रवीत् ।
नेत्रेषु सर्वभूतानां वसेयं सुरसत्तमाः ! ॥ १४ ॥

अपूर्वदेहस्य नूतनदेहवतो वसिष्ठस्य निर्गम उत्पत्तिप्रकारः कथितः। यथाभवद्वृत्तान्त इति शेषः ॥ ९ ॥ १० ॥

रक्षन्ति स्म तैलकटाहे इति शेषः ॥ ११ ॥

भृगुस्तत्र यज्ञसमाप्तिकाले इत्यर्थः। इदं वक्ष्यमाणम् । हे पार्थिव पार्थिवदेहाभिमानिप्रत्यगात्मन् । तव तुष्टोऽस्मि । अतस्ते चेतो जीवं देहे आनयिष्यामीत्यब्रवीत् ॥ १२ ॥

तथा सुप्रीताः सर्वे सुराश्च निमेश्चेत आनयिष्याम इत्यब्रुवन् । हे राजन् वरम्वरय । ते चेतः क्व निरूप्यतां स्थाप्यतामिति चाब्रुवन् ॥ १३ ॥

बाढ़मित्येव विबुधा निमेश्चेतस्तदाब्रुवन्।
नेत्रेषु सर्वभूतानां वायुभूतश्चरिष्यसि॥ १५ ॥
त्वत्कृते च निमिष्यन्ति चक्षूंषि पृथिवीपते !।
वायुभूतेन चरता विश्रामार्थं मुहुर्मुहुः॥ १६ ॥
एवमुक्त्वा तु विबुधाः सर्वे जग्मुर्यथागतम्।
ऋषयोऽपि महात्मानो निमेर्देहं समाहरन्॥ १७ ॥
अरणिं तत्र निक्षिप्य मथनञ्चक्रुरोजसा।
मन्त्रहोमैर्महात्मानः पुत्रहेतोर्निमेस्तदा॥ १८ ॥
अरण्यां मथ्यमानायां प्रादुर्भूतो महातपाः।
मथनान्मिथिरित्याहुर्जननाज्जनकोभवत्॥ १९ ॥
यस्माद्विदेहात् सम्भूतो वैदेहस्तु ततः स्मृतः।

निमश्चेतः चेतोभिमानी प्रत्यगात्मा अब्रवीत्। योगवशाल्लिङ्ग-देहेनैवेति भावः। किमब्रवीत्तदाह,—सर्वभूतानां नेत्रेषु देहवर्त्ति-सर्वस्थानेभ्यः सूर्य्याग्निकत्वेन प्रशस्ततया स्ववैभवाद्युगपद्वसेयम्॥ १४॥

वायुभूतः वायुसदृशलघुभूतलिङ्गदेहाभिन्न इत्यर्थः॥ १५॥

निमिष्यन्ति निमेषधर्मं प्राप्स्यन्ति। चक्षूंषि सर्वभूतानामिति शेषः। वायुभूतेन चरता त्वया कारणेन विश्रामार्थं त्वत्सम्बन्धेन जाय-मानस्य खेदस्यापनोदार्थमित्यर्थः॥ १६॥ १७॥

तत्र यज्ञभूमौ अरणिं निक्षिप्य निमेर्देहमेवारणिं कृत्वा। मन्त्र-होमैः पुत्रीयमन्त्रपूर्वकहोमैः॥ १८॥ १९॥

एवं विदेहराजश्च जनकः पूर्वकोभवत् ॥
मिथिर्नाम महातेजास्तेनायं मैथिलोभवत् ॥ २० ॥

इति सर्वमशेषतो मया
कथितं सम्भवकारणन्तु सौम्य ! ।
नृपपुङ्गव ! शापजं द्विजस्य
द्विजशापाच्च यदद्भुतं नृपस्य ॥ २१ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
सप्तपञ्चाशः सर्गः ॥ ५७ ॥

विदेहाद्विगतचेतो देहात् । अयं जनकवंशः । २० । २१ ।

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

## अष्टपञ्चाशः सर्गः ।



एवं ब्रुवति रामे तु लक्ष्मणः परवीरहा ।
प्रत्युवाच महात्मानं ज्वलन्तमिव तेजसा ॥ १ ॥
महदद्भुतमाश्चर्यं विदेहस्य पुरातनम् ।
निर्वृत्तं राजशार्दूल ! वसिष्ठस्य मुनेश्च ह ॥ २ ॥
निमिस्तु क्षत्रियः शूरो विशेषेण च दीक्षितः ।
न क्षमङ्कृतवान् राजा वसिष्ठस्य महात्मनः ॥ ३ ॥
एवमुक्तस्तु तेनार्यं रामः क्षत्रियपुङ्गवः ।
उवाच लक्ष्मणं वाक्यं सर्वशास्त्रविशारदम् ॥ ४ ॥
रामो रमयतां श्रेष्ठो भ्रातरं दीप्ततेजसम् ।
न सर्वत्र क्षमा वीर ! पुरुषेषु प्रदृश्यते ॥ ५ ॥

अथ लक्ष्मणस्य ब्राह्मणं प्रति शापायुक्तत्वशङ्कायां तादृशक्षमाशीला अपि सन्तीत्याह,—प्रसङ्गाद्रामः । एवं ब्रुवतीति ॥ १ ॥
महदिति मुनेः वसिष्ठस्य मुनेः सह प्रसङ्ग इति शेषः ॥ २ ॥
न क्षमं कृतवान् । अनुचितमेव कृतवानित्यर्थः ॥ ३ ॥ ४ ॥ ५ ॥

सौमित्रे ! दुःसहो रोषो यथा चान्तो ययातिना ।
सत्त्वानुगं पुरस्कृत्य तन्निबोध समाहितः ॥ ६ ॥
नहुषस्य सुतो राजा ययातिः पौरवर्धनः ।
तस्य भार्य्याद्वयं सौम्य ! रूपेणाप्रतिमं भुवि ॥ ७ ॥
एका तु तस्य राजर्षेर्नाहुषस्य पुरस्कृता ।
शर्मिष्ठा नाम दैतेयी दुहिता वृषपर्वणः ॥ ८ ॥
अन्या तूशनसः पत्नी ययातेः पुरुषर्षभ ! ।
न तु सा दयिता राज्ञो देवयानी सुमध्यमा ॥ ९ ॥
तयोः पुत्रौ तु सम्भूतौ रूपवन्तौ समाहितौ ।
शर्मिष्ठाऽजनयत्पूरुन्देवयानी यदुन्तदा ॥ १० ॥
पूरुस्तु दयितो राज्ञो गुणैर्मातृकृतेन च ।
ततो दुःखसमाविष्टो यदुर्मातरमब्रवीत् ॥ ११ ॥
भार्गवस्य कुले जाता देवस्याक्लिष्टकर्मणः ।

सत्त्वानुगं सत्त्वगुणानुगतम् । मार्गमिति शेषः । पुरस्कृत्यावलम्ब्य तं प्रकारन्निबोध ॥ ६ ॥

पौरान्वर्धयतीति पौरवर्धनः ॥ ७ ॥

पुरस्कृता पूजिता । दैतेयी दितेः पौत्री ॥ ८ ॥

अन्या तूशनसः सुता ययातेः पत्नी देवयानी । सा तु न दयिता नेष्टा ॥ ९ ॥ १० ॥

सहसे ह्रुतं दुःखमवमानञ्च दुःसहम् ॥ १२ ॥
आवाञ्च सहितौ देवि ! प्रविशाव हुताशनम्।
राजा तु रमतां सार्द्धं दैत्यपुत्र्या बहूत्समाः ॥ १३ ॥
यदि वा सहनीयन्ते मामनुज्ञातुमर्हसि।
क्षम त्वं न क्षमिष्येऽहं मरिष्यामि न संशयः ॥ १४ ॥
पुत्रस्य भाषितं श्रुत्वा परमार्त्तस्य रोदतः।
देवयानी तु संक्रुद्धा सस्मार पितरन्तदा ॥ १५ ॥
इङ्गितं तदभिज्ञाय दुहितुर्भार्गवस्तदा।
आगतस्त्वरितं तत्र देवयानी स्म यत्र सा ॥ १६ ॥
दृष्ट्वा चाप्रकृतिस्थान्तामप्रहृष्टामचेतनाम्।
पिता दुहितरं वाक्यं किमेतदिति चाब्रवीत् ॥ १७ ॥
पृच्छन्तमसकृत्तं वै भार्गवं दीप्तचेतसम्।
देवयानी तु संक्रुद्धा पितरं वाक्यमब्रवीत् ॥ १८ ॥
अहमग्निं विषं तीक्ष्णमपो वा मुनिसत्तम !।
भक्षयिष्ये प्रवेक्ष्ये वा न तु शक्ष्यामि जीवितुम् ॥ १९ ॥

मातृकृतेन राजप्रियमातृत्वेनेति शेषः ॥ ११ ॥ १२ ॥ १३ ॥
मामनुज्ञातुमर्हसि। अग्निप्रवेशार्थमिति शेषः ॥ १४ ॥ १५ ॥
इङ्गितमिति पाठे सखेदरोषभावमित्यर्थः। इष्टितमिति पाठान्तरम् ॥ १६ ॥

न मां त्वमवजानीषे दुःखितामवमानिताम् ।
वृत्तस्यावज्ञया ब्रह्मं श्छिद्यन्ते वृत्तजीविनः ॥ २० ॥
अवज्ञया च राजर्षिः परिभूय च भार्गव ! ।
मय्यवज्ञां प्रयुङ्क्ते हि न च मां बहु मन्यते ॥ २१ ॥
तस्यास्तद्वचनं श्रुत्वा कोपेनाभिपरीवृतः ।
व्याहर्तुमुपचक्राम भार्गवो नहुषात्मजम् ॥ २२ ॥
यस्मान्मामवजानीषे नाहुष त्वं दुरात्मवान् ।
वयसा जरया जीर्णः शैथिल्यमुपयास्यसि ॥ २३ ॥
एवमुक्त्वा दुहितरं समाश्वास्य स भार्गवः ।
पुनर्जगाम ब्रह्मर्षिर्भवनं स्वं महायशाः ॥ २४ ॥
स एवमुक्त्वा द्विजपुङ्गवाग्र्यः
सुतां समाश्वास्य च देवयानीम् ।

अप्रहृतिस्थामस्वस्थाम् । अप्रहृष्टां हर्षहीनाम् । अचेतनां क्षुभित-
चित्ताम् ॥ १७ ॥ १८ ॥ १९ ॥

दुःखितामपमानितां मां त्वं न जानीषे न जानासि । अवप्रयोगो-
ऽत्यर्थमात्रे आर्षः । इदञ्च मदवमाननं राज्ञस्त्वदवगणनमूलमेवेत्य-
र्थापदेशेनाह,—वृत्तस्येति । वृत्तस्यावज्ञया कोटस्यादिलक्षणया । वृत्त-
जीविनः ब्राह्मितपुण्यप्रसादयश्छिद्यन्ते नाश्यन्ते ॥ २० ॥

पुत्रयंयौ सूर्य्यसमानतेजा
दत्वा च शापं नहुषात्मजाय ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
अष्टपञ्चाशः सर्गः ॥ ५८ ॥

प्रश्नते किं तत्राह,—हे भार्गव राजर्षिस्त्वय्यवज्ञया हेतुभूतया मां परिभूय मय्यवज्ञां प्रयुङ्क्ते ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे अष्टपञ्चाशः सर्गः ॥ ५८ ॥

---

## एकोनषष्टितमः सर्गः ।



श्रुत्वा तूशनसं क्रुद्धं तदार्त्तो नहुषात्मजः ।
जरां परमिकां प्राप्य यदुं वचनमब्रवीत् ॥ १ ॥
यदो ! त्वमसि धर्मज्ञ मदर्थं प्रतिगृह्यताम् ।
जरां परमिकां पुत्र ! भोगै रंस्ये महायशः ! ॥ २ ॥
न तावत् कृतकृत्योस्मि विषयेषु नरर्षभ ! ।
अनुभूय तदा कामं ततः प्राप्स्याम्यहं जराम् ॥ ३ ॥
यदुस्तद्वचनं श्रुत्वा प्रत्युवाच नरर्षभम् ।
पुत्रस्ते दयितः पूरुः प्रतिगृह्णातु वै जराम् ॥ ४ ॥
बहिष्कृतोऽहमर्थेषु सन्निकर्षाच्च पार्थिव ! ।
प्रतिगृह्णातु वै राजन्यैः सहाश्नामि भोजनम् ॥ ५ ॥
तस्य तद्वचनं श्रुत्वा राजा पूरुमथाब्रवीत् ।
इयं जरा महाबाहो ! मदर्थं प्रतिगृह्यताम् ॥ ६ ॥
नाहुषेणैवमुक्तस्तु पूरुः प्राञ्जलिरब्रवीत् ।
धन्योस्म्यनुगृहीतोस्मि शासनेस्मि तव स्थितः ॥ ७ ॥

अथ शापसहनमाह,—श्रुत्वेति । जरां पलितताम् उशनःप्रसादादन्यसंक्रमयोग्यां प्राप्य । यदुं देवयानीपुत्रम् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

पूरोर्वचनमाज्ञाय नाहुषः परया मुदा।
प्रहर्षमतुलं लेभे जरां संक्रामयच्च ताम्॥ ८॥
ततः स राजा तरुणः प्राप्य यज्ञान् सहस्रशः।
बहुवर्षसहस्राणि पालयामास मेदिनीम्॥ ९॥
अथ दीर्घस्य कालस्य राजा पूरुमथाब्रवीत्।
आनयस्व जरां पुत्र! न्यासं निर्यातयस्व मे॥ १०॥
न्यासभूता मया पुत्र! त्वयि संक्रामिता जरा।
तस्मात् प्रतिग्रहीष्यामि तां जरां मा व्यथाकृथाः॥ ११॥
प्रीतश्चास्मि महाबाहो! शासनस्य प्रतिग्रहात्।
त्वाञ्चाहमभिषेक्ष्यामि प्रीतियुक्तो नराधिपम्॥ १२॥
एवमुक्त्वा सुतं पूरुं ययातिर्नहुषात्मजः।
देवयानीसुतं क्रुद्धो राजा वाक्यमुवाच ह॥ १३॥
राक्षसस्त्वं मया जातः क्षत्ररूपो दुरासदः।
प्रतिहंसि ममाज्ञान्त्वं प्रजार्थे विफलोभव॥ १४॥

सन्निकर्षाच्च समीपावस्थानोपलालनादिहेतुत्वाच्च बहिष्कृतः॥ ५॥ ६॥ ७॥

जरां संक्रामयत् असंक्रामयत्। योगत्वादिति शेषः॥ ८॥ ९॥ १०॥

तस्मात्त्वरोमया जातः प्रतिदेहि जरां ममेति पाठे यस्मान्मयान्यासभूता जरा त्वयि संक्रामिता तस्मान्मया जातो मनोजात इत्यर्थः॥ ११॥ १२॥ १३॥

पितरं गुरुभूतं मां यस्मात्त्वमवमन्यसे ।
राक्षसान्यातुधानांस्त्वं जनयिष्यसि दारुणान् ॥ १५ ॥
न तु सोमकुलोत्पन्ने वंशे स्थास्यति दुर्मतेः ।
वंशोऽपि भवतस्तुल्यो दुर्विनीतो भविष्यति ॥ १६ ॥
तमेवमुक्त्वा राजर्षिः पूरुं राज्यविवर्धनम् ।
अभिषेकेण संपूज्य आश्रमं प्रविवेश ह ॥ १७ ॥
ततः कालेन महता दिष्टान्तमुपजग्मिवान् ।
त्रिदिवं स गतो राजा ययातिर्नहुषात्मजः ॥ १८ ॥
पूरुश्चकार तद्राज्यं धर्मेण महतावृतः ।
प्रतिष्ठाने पुरवरे काशिराज्ये महायशाः ॥ १९ ॥
यदुस्तु जनयामास यातुधानान् सहस्रशः ।
पुरे क्रौञ्चवने दुर्गे राजवंशबहिष्कृते ॥ २० ॥
एष तूशनसा मुक्तः शापोत्सर्गो ययातिना ।
धारितः क्षत्रधर्मेण यं निमिश्चक्षमे न च ॥ २१ ॥

प्रजाय प्रजानामाधिपत्यलक्षणप्रयोजने विफलो भव राज्याधिपत्यरहितो भवेत्यर्थः ॥ १४ ॥ १५ ॥

दुर्मतेस्तवसन्तान इति शेषः । योप्यराक्षसस्तवसन्तानः सोऽपि क्षत्रियमात्रमेव न तु सोमवंशराजपदाभिषिक्तः । भवत्तुल्यदुर्विनीतत्वादिति भावः ॥ १६ ॥

आश्रमं वानप्रस्थाश्रमम् ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

एतत्ते सर्वमाख्यातं दर्शनं सर्वकारिणाम् ।
अनुवर्त्तामहे सौम्य ! दोषो न स्यात् यथा नृगे ॥ २२ ॥

इति कथयति रामे चन्द्रतुल्याननेन
प्रविरलतरतारं व्योम जज्ञे तदानीम् ।
अरुणकिरणरक्ता दिग्बभौ चैव पूर्वा
कुसुमरसविमुक्तं वस्त्रमागुण्ठितेव ॥ २३ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
एकोनषष्टितमः सर्गः ॥ ५९ ॥

यस्वविशापं निमिर्न चक्षमे न क्षान्तवान् तादृश उग्रवसा मुक्तः शापोत्सर्गो महाशापो ययातिना धारितः ॥ २१ ॥

एतत्ते सर्वं प्रजाकार्य्यानवलोकने शापः केषाञ्चित्तदक्षमा केषाञ्चित्-क्षमेत्यादिकं सर्वमाख्यातम् । अतः कारः कृतयन्तयेषामस्ति ते कारिणः-स्तेषां कार्य्यापेक्षिणां सर्वेषां दर्शनमनुवर्त्तामहेऽङ्गीकुर्मः । यथा नृगे दोषो जातस्तथा दोषो मम न स्यान्न भवेदित्येतदर्थमित्यर्थः ॥ २१ ॥

विमुक्तं युक्तम् ॥ २३ ॥

एतदुत्तरं श्वमातुराख्यानं गृध्रोलूकाख्यानञ्च क्वचिद्दृश्यते तत् तीर्थ-कतकाद्यस्पृष्टत्वेन प्रक्षिप्तमिति न व्याख्यातम् ।

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

---

## ७ एतदग्रे प्रक्षिप्ताः सर्गाः ।



ततः प्रभाते विमले कृत्वा पौर्वाह्णिकीं क्रियाम् ।
धर्मासनगतो राजा रामो राजीवलोचनः ॥ १ ॥
राजधर्मानवेक्षन्वै ब्राह्मणैर्नैगमैः सह ।
पुरोधसा वसिष्ठेन ऋषिणा कश्यपेन च ॥ २ ॥
मन्त्रिभिर्व्यवहारज्ञैस्तथान्यैर्धर्मपाठकैः ।
नीतिज्ञैरथ सभ्यैश्च राजभिः सा सभा वृता ॥ ३ ॥
सभा यथा महेन्द्रस्य यमस्य वरुणस्य च ।
शुशुभे राजसिंहस्य रामस्याक्लिष्टकर्मणः ॥ ४ ॥
अथ रामोऽब्रवीत्तत्र लक्ष्मणं शुभलक्षणम् ।
निर्गच्छ त्वं महाबाहो ! सुमित्रानन्दवर्धन ! ॥ ५ ॥
कार्य्यार्थिनश्च सौमित्रे ! व्याहर्तुं त्वमुपाक्रम ।
रामस्य भाषितं श्रुत्वा लक्ष्मणः शुभलक्षणः ॥ ६ ॥
द्वारदेशमुपागम्य कार्य्यिणश्चाकृयत्स्वयम् ।
न कश्चिदब्रवीत्तत्र मम कार्य्यमिहाद्य वै ॥ ७ ॥
नाधयो व्याधयश्चैव रामे राज्यं प्रशासति ।
पक्कसस्या वसुमती सर्वौषधिसमन्विता ॥ ८ ॥

न बालो म्रियते तत्र न युवा न च मध्यम:।
धर्मेण शासितं सर्वं न च बाधा विधीयते॥ ९॥
दृश्यते न च कार्य्यार्थी रामे राज्यं प्रशासति।
लक्ष्मण: प्राञ्जलिर्भूत्वा रामायैवं न्यवेदयत्॥ १०॥
अथ राम: प्रसन्नात्मा सौमित्रिमिदमब्रवीत्।
भूय एव तु गच्छ त्वं कार्य्यिण: प्रविचारय॥ ११॥
सम्यक्प्रणीतया नीत्या नाधर्मो विद्यते क्वचित्।
तस्माद्राजभयात् सर्वं रक्षन्तीह परस्परम्॥ १२॥
बाणा इव मया मुक्ता इह रक्षन्ति मे प्रजा:।
तथापि त्वं महाबाहो! प्रजा रक्षस्व तत्पर:॥ १३॥
एवमुक्तस्तु सौमित्रिर्निर्जगाम नृपालयात्।
अपश्यद्द्वारदेशे वै श्वानं तावदवस्थितम्॥ १४॥
तमेवं वीक्षमाणो वै विक्रोशन्तं मुहुर्मुहु:।
दृष्ट्वाथ लक्ष्मणस्तस्मै स पप्रच्छाथ वीर्य्यवान्॥ १५॥
किन्ते कार्य्यं महाभाग! ब्रूहि विस्रब्धमानस:।
लक्ष्मणस्य वच: श्रुत्वा सारमेयोऽभ्यभाषत॥ १६॥
सर्वभूतशरण्याय रामायाक्लिष्टकर्मणे।
भयेष्वभयदात्रे च तस्मै वक्तुं समुत्सहे॥ १७॥
एतच्छ्रुत्वा च वचनं सारमेयस्य लक्ष्मण:।
राघवाय तदाख्यातुं प्रविवेशालयं शुभम्॥ १८॥

निवेश्य रामस्य पुनर्निर्जगाम नृपालयात् ।
वक्तव्यं यदि ते किञ्चित् तच्चं ब्रूहि नृपाय वै ॥ १९ ॥
लक्ष्मणस्य वचः श्रुत्वा सारमेयोऽभ्यभाषत ।
देवागारे नृपागारे द्विजवेश्मसु वै तथा ॥ २० ॥
वह्निः शतक्रतुश्चैव सूर्य्यो वायुश्च तिष्ठति ।
नात्र योग्यास्तु सौमित्रे ! योनीनामधमा वयम् ॥ २१ ॥
प्रवेष्टुं नात्र शक्यामि धर्मो विग्रहवान् नृपः ।
सत्यवादी रणपटुः सर्वसत्वहिते रतः ॥ २२ ॥
षाड्गुण्यस्य पदं वेत्ति नीतिकर्त्ता स राघवः ।
सर्वज्ञः सर्वदर्शी च रामो रमयतां वरः ॥ २३ ॥
स सोमः स च मृत्युश्च स यमो धनदस्तथा ।
वह्निः शतक्रतुश्चैव सूर्य्यो वै वरुणस्तथा ॥ २४ ॥
तस्य त्वं ब्रूहि सौमित्रे ! प्रजापालः स राघवः ।
अनाज्ञप्तस्तु सौमित्रे ! प्रवेष्टुं नेच्छयाम्यहम् ॥ २५ ॥
आनृशंस्यान् महाभाग प्रविवेशः महाद्युतिः ।
नृपालयं प्रविश्याथ लक्ष्मणो वाक्यमब्रवीत् ॥ २६ ॥
श्रूयतां मम विज्ञाप्यं कौशल्यानन्दवर्धन ! ।
यन्मयोक्तं महाबाहो ! तव शासनजं विभो ! ॥ २७ ॥
श्वा वै ते तिष्ठते द्वारि कार्य्यार्थी समुपागतः ।
लक्ष्मणस्य वचः श्रुत्वा रामो वचनमब्रवीत् ॥ २८ ॥

सम्प्रवेशय वै क्षिप्रं कार्य्यार्थी योऽत्र तिष्ठति ॥ २८ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
प्रक्षिप्तोऽयं प्रथमः सर्गः ॥ १ ॥

---

## २ सर्गः ।



श्रुत्वा रामस्य वचनं लक्ष्मणस्त्वरितस्तदा ।
श्वानमाहूय मतिमान् राघवाय न्यवेदयत् ॥ १ ॥
दृष्ट्वा समागतं श्वानं रामो वचनमब्रवीत् ।
विवक्षितार्थं मे ब्रूहि सारमेय ! न ते भयम् ॥ २ ॥
अथापश्यत तत्रस्थं रामं श्वा भिन्नमस्तकः ।
ततो दृष्ट्वा स राजानं सारमेयोऽब्रवीत् वचः ॥ ३ ॥
राजैव कर्त्ता भूतानां राजा चैव विनायकः ।
राजा सुप्तेषु जागर्त्ति राजा पालयति प्रजाः ॥ ४ ॥
नीत्या सुनीतया राजा धर्मं रक्षति रक्षिता ।
यदा न पालयेद्राजा क्षिप्रं नश्यन्ति वै प्रजाः ॥ ५ ॥
राजा कर्त्ता च गोप्ता च सर्वस्य जगतः पिता ।
राजा कालो युगश्चैव राजा सर्वमिदं जगत् ॥ ६ ॥
धारणाद्धर्ममित्याहुर्धर्मेण विधृताः प्रजाः ।
यस्माद्धारयते सर्वं त्रैलोक्यं सचराचरम् ॥ ७ ॥
धारणात् विद्विषाञ्चैव धर्मेणारञ्जयन् प्रजाः ।

तस्मात्कारणमित्युक्तं स धर्म इति निश्चयः ॥ ८ ॥
एष राजन्! परो धर्मः फलवान् प्रेत्य राघव!।
न हि धर्माद्भवेत् किञ्चित् दुष्प्रापमिति मे मतिः ॥ ९ ॥
दानं दया सतां पूजा व्यवहारेषु चार्जवम्।
एष राम! परो धर्मो रक्षणात् प्रेत्य चेह च ॥ १० ॥
त्वं प्रमाणं प्रमाणानामसि राघव! सुव्रत!।
विदितश्चैव ते धर्मः सद्भिराचरितस्तु वै ॥ ११ ॥
धर्माणां त्वं परं धाम गुणानां सागरोपमः।
अज्ञानाच्च मया राजन्! उक्तस्त्वं राजसत्तम! ॥ १२ ॥
प्रसादयामि शिरसा न त्वं क्रोद्धुमिहार्हसि।
शुनः स वचनं श्रुत्वा राघवो वाक्यमब्रवीत् ॥ १३ ॥
किं ते कार्य्यं करोम्यद्य ब्रूहि विस्रब्धमा चिरम्।
रामस्य वचनं श्रुत्वा सारमेयोऽब्रवीदिदम् ॥ १४ ॥
धर्मेण राष्ट्रं विन्देत धर्मेणैवानुपालयेत्।
धर्माच्छरणतां याति राजा सर्वभयापहः ॥ १५ ॥
इदं विज्ञाय यत् कृत्यं श्रूयतां मम राघव!।
भिक्षुः सर्वार्थसिद्धश्च ब्राह्मणावसथे वसन् ॥ १६ ॥
तेन दत्तः प्रहारो मे निष्कारणमनागसः।
एतच्छ्रुत्वा तु रामेण द्वाःस्थः संप्रेषितस्तदा ॥ १७ ॥
आनीतश्च द्विजस्तेन सर्वसिद्धार्थकोविदः।

अथ द्विजवरस्तत्र रामं दृष्ट्वा महाद्युतिः ॥ १८ ॥
किं ते कार्य्यं मया राम ! तत् ब्रूहि त्वं ममानघ ! ।
एवमुक्तस्तु विप्रेण रामो वचनमब्रवीत् ॥ १९ ॥
त्वया दत्तः प्रहारोऽयं सारमेयस्य वै द्विज ! ।
किं तवापकृतं विप्र ! दण्डेनाभिहतो यतः ॥ २० ॥
क्रोधः प्राणहरः शत्रुः क्रोधो मित्रमुखो रिपुः ।
क्रोधो ह्यसिर्महातीक्ष्णः सर्वं क्रोधोऽपकर्षति ॥ २१ ॥
तपते यजते चैव यच्च दानं प्रयच्छति ।
क्रोधेन सर्वं हरति तस्मात् क्रोधं विसर्जयेत् ॥ २२ ॥
इन्द्रियाणां प्रदुष्टानां हयानामिव धावताम् ।
कुर्वीत धृत्या सारथ्यं संहृत्येन्द्रियगोचरम् ॥ २३ ॥
मनसा कर्मणा वाचा चक्षुषा च समाचरेत् ।
श्रेयो लोकस्य चरतो न द्वेष्टि न च लिप्यते ॥ २४ ॥
न तत् कुर्य्यादसिस्तीक्ष्णः सर्पो वा व्याहतः पदा ।
अरिर्वा नित्यसंक्रुद्धो यथात्मा दुरनुष्ठितः ॥ २५ ॥
विनीतविनयस्यापि प्रकृतिर्न विधीयते ।
प्रकृतिं गूहमानस्य निश्चयेन कृतिर्ध्रुवा ॥ २६ ॥
एवमुक्तः स विप्रो वै रामेणाक्लिष्टकर्मणा ।
द्विजः सर्वार्थसिद्धस्तु अब्रवीद्रामसन्निधौ ॥ २७ ॥
मयादत्तः प्रहारोऽयं क्रोधेनाविष्टचेतसा ।

भिक्षार्थमटमानेन काले विगतभैक्षके ॥ २८ ॥
रथ्यास्थितस्त्वयं श्वा वै गच्छ गच्छेति भाषितः।
अथ स्वैरेण गच्छंस्तु रथ्यान्ते विषमस्थितः ॥ २९ ॥
क्रोधेन क्षुधयाविष्टस्ततो दत्तोऽस्य राघव !।
प्रहारो राजराजेन्द्र ! शाधि मामपराधिनम् ॥ ३० ॥
त्वया शस्तस्य राजेन्द्र ! नास्ति मे नरकात् भयम्।
अथ रामेण संपृष्टाः सर्व्व एव सभासदः ॥ ३१ ॥
किं कार्य्यमस्य वै ब्रूत दण्डो वै कोऽस्य पात्यताम्।
सम्यक् प्रणिहिते दण्डे प्रजा भवति रक्षिता ॥ ३२ ॥
भृग्वाङ्गिरसकुत्साद्या वसिष्ठश्च सकाश्यपः।
धर्मपाठकमुख्याश्च सचिवा नैगमास्तथा ॥ ३३ ॥
एते चान्ये च बहवः पण्डितास्तत्र सङ्गताः।
अवध्यो ब्राह्मणो दण्डैरिति शास्त्रविदो विदुः ॥ ३४ ॥
ब्रुवते राघवं सर्व्वे राजधर्मेषु निष्ठिताः।
अथ ते मुनयः सर्व्वे राममेवाब्रुवंस्तदा ॥ ३५ ॥
राजा शास्ता हि सर्व्वस्य त्वं विशेषेण राघव !।
त्रैलोक्यस्य भवान् शास्ता देवो विष्णुः सनातनः ॥ ३६ ॥
एवमुक्ते तु तैः सर्व्वैः श्वा वै वचनमब्रवीत्।
यदि तुष्टोऽसि मे राम ! यदि देयो वरो मम ॥ ३७ ॥
प्रतिज्ञातं त्वया वीर ! किं करोमीति विश्रुतम्।

प्रयच्छ ब्राह्मणस्यास्य कौलपत्यं नराधिप ! ॥ ३८ ॥
कालञ्जरे महाराज ! कौलपत्यं प्रदीयताम् ।
एतच्छ्रुत्वा तु रामेण कौलपत्येऽभिषेचितः ॥ ३९ ॥
प्रययौ ब्राह्मणो हृष्टो गजस्कन्धेन योऽर्चितः ।
अथ ते रामसचिवाः स्मयमाना वचोऽब्रुवन् ॥ ४० ॥
वरोऽयं दत्त एतस्य नायं शापो महाद्युते ! ।
एवमुक्तस्तु सचिवै रामो वचनमब्रवीत् ॥ ४१ ॥
न यूयं गतितत्त्वज्ञाः श्वा वै जानाति कारणम् ।
अथ पृष्टस्तु रामेण सारमेयोऽब्रवीदिदम् ॥ ४२ ॥
अहं कुलपतिस्तत्र आसं शिष्टान्नभोजनः ।
देवद्विजातिपूजायां दासीदासेषु राघव ! ॥ ४३ ॥
संविभागी शुभरतिर्देवद्रव्यस्य रक्षिता ।
विनीतः शीलसम्पन्नः सर्वसत्त्वहिते रतः ॥ ४४ ॥
सोऽहं प्राप्त इमां घोरामवस्थामधमां गतिम् ।
एवं क्रोधान्वितो विप्रस्त्यक्तधर्मोऽहिते रतः ॥ ४५ ॥
क्रुद्धो नृशंसः परुष अविद्वांश्चाप्यधार्मिकः ।
कुलानि पातयत्येव सप्त सप्त च राघवः ॥ ४६ ॥
तस्मात् सर्वास्ववस्थासु कौलपत्यं न कारयेत् ।
यमिच्छेन्नरकं नेतुं सपुत्रपशुबान्धवम् ॥ ४७ ॥
देवेष्वधिष्ठितं कुर्य्यात् गोषु तं ब्राह्मणेषु च ।

ब्रह्मस्वं देवताद्रव्यं स्त्रीणां बालधनञ्च यत् ॥ ४८ ॥
दत्तं हरति यो भूय इष्टैः सह विनश्यति।
ब्राह्मणद्रव्यमादत्ते देवानाञ्चैव राघव ! ॥ ४९ ॥
सद्यः पतति घोरे वै नरके वीचिसंज्ञके।
मनसापि हि देवस्वं ब्रह्मस्वञ्च हरेत्तु यः ॥ ५० ॥
निरयान्निरयञ्चैव पतत्येव नराधिप ।
तच्छ्रुत्वा वचनं रामो विस्मयोत्फुल्ललोचनः ॥ ५१ ॥
स्वाश्रम कन्महातेजा यत एवागतस्ततः।
मनस्वी पर्वजात्या स जातिमात्रोऽपदूषितः ॥ ५२ ॥
वाराणस्यां महाभागः प्रायश्चोपविवेश ह ॥ ५३ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
प्रक्षिप्तोऽयं द्वितीयः सर्गः ॥ २ ॥

७ सर्गः ।



अथ तस्मिन् वनोद्देशे रम्ये पादपशोभिते ।
नदीकीर्णे गिरिवरे कोकिलानेककूजिते ॥ १ ॥
सिंहव्याघ्रसमाकीर्णे नानाद्विजगणावृते ।
गृध्रोलूकौ प्रवसतो बहुवर्षगणानपि ॥ २ ॥
अथोलूकस्य भवनं गृध्रः पापविनिश्चयः ।
ममेदमिति कृत्वासौ कलहं तेन चाकरोत् ॥ ३ ॥
राजा सर्वस्य लोकस्य रामो राजीवलोचनः ।
तं प्रपद्यावहे शीघ्रं यस्यैतद्भवनं भवेत् ॥ ४ ॥
इति कृत्वा मतिं तान्तु निश्चयार्थं सुनिश्चिताम् ।
गृध्रोलूकौ प्रपद्येतां कोपाविष्टौ ह्यमर्षितौ ॥ ५ ॥
रामं प्रपद्य तौ शीघ्रं कलिव्याकुलचेतसौ ।
तौ परस्परविद्वेषात् स्पृशतश्चरणौ तदा ॥ ६ ॥
अथ दृष्ट्वा नरेन्द्रं तं गृध्रो वचनमब्रवीत् ।
सुराणामसुराणाञ्च प्रधानस्त्वं मतो मम ॥ ७ ॥
बृहस्पतेश्च शुक्राच्च विशिष्टोऽसि महाद्युते ! ।
परावरज्ञो भूतानां कान्त्या चन्द्र इवापरः ॥ ८ ॥

दुर्निरीक्ष्यो यथा सूर्य्यो हिमवांश्चैव गौरवे।
सागरश्चैव गाम्भीर्य्ये लोकपालो यमो ह्यसि॥ ९॥
क्षान्त्या धरण्या तुल्योऽसि शीघ्रत्वे ह्यनिलोपमः।
गुरुस्त्वं सर्वसम्पन्नः कीर्त्तियुक्तश्च राघव!॥ १०॥
अमर्षी दुर्जयो जेता सर्वास्त्रविधिपारगः।
शृणुष्व मम वै राम! विज्ञाप्यं नरपुङ्गव!॥ ११॥
ममालयं पूर्वकृतं बाहुवीर्य्येण राघव!।
उलूको हरते राजंस्तत्र त्वं त्रातुमर्हसि॥ १२॥
एवमुक्ते तु गृध्रेण उलूको वाक्यमब्रवीत्।
सोमाच्छतक्रतोः सूर्य्याद्धनदाद्वा यमात्तथा॥ १३॥
जायते वै नृपो राम! किञ्चिद्भवति मानुषः।
त्वन्तु सर्वमयो देवो नारायण इवापरः॥ १४॥
या च ते सौम्यता राजन्! सम्यक् प्रणिहिता विभो!।
समञ्चरसि चान्विष्य तेन सोमांशको भवान्॥ १५॥
क्रोधे दण्डे प्रजानाथ! दाने पापभयापहः।
दाता हर्त्तासि गोप्तासि तेनेन्द्र इव नो भवान्॥ १६॥
अधृष्यः सर्वभूतेषु तेजसा चानलोपमः।
अभीक्ष्णं तपसे लोकांस्तेन भास्करसन्निभः॥ १७॥
साक्षात् वित्तेशतुल्योऽपि अथवा धनदाधिकः।
वित्तेशस्येव पद्मा श्रीर्नित्यं ते राजसत्तम!॥ १८॥

धनदस्य तु कार्य्येण धनदस्तेन नो भवान्।
सम: सर्वेषु भूतेषु स्थावरेषु चरेषु च ॥ १८ ॥
शत्रौ मित्रे च ते दृष्टि: समतां याति राघव ! ।
धर्मेण शासनं नित्यं व्यवहारे विधिक्रमात् ॥ २० ॥
यस्य रुष्यसि वै राम ! तस्य मृत्युर्विधावति ।
गीयसे तेन वै राम ! यम इत्यभिविक्रम: ॥ २१ ॥
यश्चैष मानुषो भावो भवतो नृपसत्तम ! ।
आनृशंस्यपरो राजा सत्वेषु चमयान्वित: ॥ २२ ॥
दुर्बलस्य त्वनाथस्य राजा भवति वै बलम् ।
अचक्षुषोत्तमं चक्षुरगते: स गतिर्भवान् ॥ २३ ॥
अस्माकमपि नाथस्त्वं श्रूयतां मम धार्मिक ! ।
ममालयं प्रविष्टस्तु गृध्रो मां बाधते नृप ! ॥ २४ ॥
त्वं हि देवमनुष्येषु शास्ता वै नरपुङ्गव ! ।
एतत् श्रुत्वा तु वै राम: सचिवानाह्वयत् स्वयम् ॥ २५ ॥
धृष्टिर्जयन्तो विजय: सिद्धार्थो राष्ट्रवर्धन: ।
अशोको धर्मपालश्च सुमन्त्रश्च महाबल: ॥ २६ ॥
एते रामस्य सचिवा राज्ञो दशरथस्य च ।
नीतियुक्ता महात्मान: सर्वशास्त्रविशारदा: ॥ २७ ॥
ह्रीमन्तश्च कुलीनाश्च नये मन्त्रे च कोविदा: ।
तानाहूय च धर्मात्मा पुष्पकादवतीर्य्य च ॥ २८ ॥

गृध्रोलूकविवादन्तं पृच्छति स्म रघूत्तमः ।
कति वर्षाणि वै गृध्र ! तवेदं निलयं कृतम् ॥ २९ ॥
एतन्मे कारणं ब्रूहि यदि जानासि तत्त्वतः ।
एतत् श्रुत्वा तु वै गृध्रो भाषते राघवं स तम् ॥ ३० ॥
इयं वसुमती राम ! मनुष्यैः परितो यदा ।
उत्थितैरावृता सर्वा तदा प्रभृति मे गृहम् ॥ ३१ ॥
उलूकश्चाब्रवीद्रामं पादपैरुपशोभिता ।
यदेयं पृथिवी राजंस्तदा प्रभृति मे गृहम् ।
एतत् श्रुत्वा तु वै रामः सभासदमुवाच ह ॥ ३२ ॥

न सा सभा यत्र न सन्ति वृद्धा
वृद्धा न ते ये न वदन्ति धर्मम् ।
नासौ धर्मो यत्र न सत्यमस्ति
न तत् सत्यं यच्छलेनानुविद्धम् ॥ ३३ ॥

ये तु सभ्याः सदा ज्ञात्वा तूष्णीं ध्यायन्त आसते ।
यथा प्राप्तं न ब्रुवते ते सर्वेऽनृतवादिनः ॥ ३४ ॥
जानन्न वाब्रवीत् प्रश्नान् कामात् क्रोधाद्भयात्तथा ।
सहस्रं वारुणान् पाशानात्मनि प्रतिमुञ्चति ॥ ३५ ॥
तेषां संवत्सरे पूर्णे पाश एकः प्रमुच्यते ।
तस्मात् सत्येन वक्तव्यं जानता सत्यमञ्जसा ॥ ३६ ॥
एतत् श्रुत्वा तु सचिवा राममेवाब्रुवंस्तदा ।

उलूकः शोभते राजन्न तु गृध्रो महामते ! ॥ ३७ ॥
त्वं प्रमाणं महाराज ! राजा हि परमा गतिः ।
राजमूला: प्रजा: सर्वा राजधर्मः सनातनः ॥ ३८ ॥
शास्ता नृणां नृपो येषां ते न गच्छन्ति दुर्गतिम् ।
वैवस्वतेन मुक्तास्तु भवन्ति पुरुषोत्तमाः ॥ ३९ ॥
सचिवानां वचः श्रुत्वा रामो वचनमब्रवीत् ।
श्रूयतामभिधास्यामि पुराणे यदुदाहृतम् ॥ ४० ॥
द्यौः सचन्द्रार्कनक्षत्रा सपर्वतमहावना ।
सलिलार्णवसम्पूर्णं त्रैलोक्यं सचराचरम् ॥ ४१ ॥
एक एव तदा ह्यासीद्युक्तो मेरुरिवापरः ।
पुरा भूः सह लक्ष्म्या च विष्णोर्जठरमाविशत् ॥ ४२ ॥
तां निगृह्य महातेजाः प्रविश्य सलिलार्णवम् ।
सुष्वाप देवो भूतात्मा बहून् वर्षगणानपि ॥ ४३ ॥
विष्णौ सुप्ते तदा ब्रह्मा विवेश जठरं ततः ।
रुद्धस्रोतस्तु तं ज्ञात्वा महायोगी समाविशत् ॥ ४४ ॥
नाभ्यां विष्णोः समुत्पन्ने पद्मे हेमविभूषिते ।
स तु निर्गम्य वै ब्रह्मा योगी भूत्वा महाप्रभुः ॥ ४५ ॥
सिसृक्षुः पृथिवीं वायुं पर्वतान् समहीरुहान् ।
तदन्तरे प्रजाः सर्वाः समनुष्यसरीसृपाः ॥ ४६ ॥
जरायुजाण्डजाः सर्वाः स ससर्ज महातपाः ।

तत्र श्रोत्रमलोत्पन्नः कैटभो मधुना सह ॥ ४७ ॥
दानवौ तौ महावीर्य्यौ घोररूपौ दुरासदौ।
दृष्ट्वा प्रजापतिं तत्र क्रोधाविष्टौ बभूवतुः ॥ ४८ ॥
वेगेन महता तत्र स्वयम्भुवमधावताम्।
दृष्ट्वा स्वयम्भुवा मुक्तो रावो वै विकृतस्तदा ॥ ४९ ॥
तेन शब्देन सम्प्राप्तौ दानवौ हरिणा सह।
अथ चक्रप्रहारेण सूदितौ मधुकैटभौ ॥ ५० ॥
मेदसा प्लाविता सर्वा पृथिवी च समन्ततः।
भूयो विशोधिता तेन हरिणा लोकधारिणा ॥ ५१ ॥
शुद्धां वै मेदिनीं तान्तु वृक्षैः सर्वामपूरयन्।
ओषध्यः सर्वसस्यानि निष्पद्यन्त पृथग्विधाः ॥ ५२ ॥
मेदोगन्धा तु धरणी मेदिनीत्यभिसंज्ञिता।
तस्मान्न गृध्रस्य गृहमुलूकस्येति मे मतिः ॥ ५३ ॥
तस्माद् गृध्रस्तु दण्ड्यो वै पापो हर्त्ता परालयम्।
पीड़ां करोति पापात्मा दुर्विनीतो महानयम् ॥ ५४ ॥
अथाशरीरिणी वाणी अन्तरिक्षात् प्रबोधिनी।
मावधीः रामगृध्रं त्वं पूर्वदग्धं तपोबलात् ॥ ५५ ॥
कालगौतमदग्धोऽयं प्रजानाथो नरेश्वर!।
ब्रह्मदत्तेति नाम्नैष शूरः सत्यव्रतः शुचिः ॥ ५६ ॥
गृहं तस्यागतो विप्रो भोजनं प्रत्यमार्गत।

साग्रं वर्षशतञ्चैव भोक्तव्यं नृपसत्तम ! ॥ ५७ ॥
ब्रह्मदत्तः स वै तस्य पाद्यमर्घ्यं स्वयं नृपः ।
हार्दञ्चैवाकरोत्तस्य भोजनार्थं महाद्युतेः ॥ ५८ ॥
मांसमस्याभवत्तच्च आहारे तु महात्मनः ।
अथ क्रुद्धेन मुनिना शापो दत्तोऽस्य दारुणः ॥ ५९ ॥
गृध्रस्त्वं भव वै राजन् ! मामैनं ह्यथ सोऽब्रवीत् ।
प्रसादं कुरु धर्मज्ञ ! अज्ञानान्मे महाव्रत ! ॥ ६० ॥
शापस्यान्तं महाभाग ! क्रियतां वै ममानघ ! ।
तदज्ञानकृतं मत्वा राजानं मुनिरब्रवीत् ॥ ६१ ॥
उत्पत्स्यति कुले राज्ञां रामो नाम महायशाः ।
इक्ष्वाकूणां महाभागो राजा राजीवलोचनः ॥ ६२ ॥
तेन स्पृष्टो विपापस्त्वं भविता नरपुङ्गव ! ।
स्पृष्टो रामेण तच्छ्रुत्वा नरेन्द्रः पृथिवीपतिः ॥ ६३ ॥
गृध्रत्वं त्यक्तवान् राजा दिव्यगन्धानुलेपनः ।
पुरुषो दिव्यरूपोऽभूदुवाचेदञ्च राघवम् ॥ ६४ ॥
साधु राघव ! धर्मज्ञ ! त्वत्प्रसादादहं विभो ! ।
विमुक्तो नरकाद्घोराच्छापस्यान्तः कृतस्त्वया ॥ ६५ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
प्रक्षिप्तोऽयं तृतीयः सर्गः ॥ ३ ॥

---

## षष्टितमः सर्गः ।



तयोः संवदतोरेवं रामलक्ष्मणयोस्तदा ।
वार्षन्तिकी निशा प्राप्ता न शीता न च घर्मदा ॥ १ ॥
ततः प्रभाते विमले कृतपूर्वाह्णिकक्रियः ।
अभिचक्राम काकुत्स्थो दर्शनं पौरकार्य्यवित् ॥ २ ॥
ततः सुमन्त्रस्त्वागम्य राघवं वाक्यमब्रवीत् ।
एते प्रतिहृता राजन् ! द्वारि तिष्ठन्ति तापसाः ॥ ३ ॥
भार्गवं च्यवनं चैव पुरस्कृत्य महर्षयः ।
दर्शनं ते महाराज ! चोदयन्ति कृततराः ॥ ४ ॥
प्रीयमाणा नरव्याघ्र ! यमुनातीरवासिनः ।

अथ लवणासुरपीड़ितऋषीणां रामसमीपागमनम् । तयोरिति । एवं संवदतोः प्रतिदिवसं धर्मसंवादं कुर्वतोस्तत्पूर्वं प्रजारक्षणं कुर्वतोरिति यावत् । वासन्तिकी वसन्तकालभवा निशा प्राप्ता । कालान्तरे इति शेषः । इदं कालवचनं ऋषिकार्य्योचितत्वदर्शनार्थम् ॥ १ ॥

दर्शनमभिचक्राम । प्रजा दृश्यन्ते यत्र स्थाने तत् स्थानं दर्शनमभिचक्राम ॥ २ ॥

प्रतिहृताः । द्वारि निरुद्धा इत्यर्थः ॥ ३ ॥

तस्य तद्वचनं श्रुत्वा रामः प्रोवाच धर्मवित् ॥ ५ ॥
प्रवेश्यन्तां महाभागा भार्गवप्रमुखा द्विजाः ।
रामस्त्वाज्ञां पुरस्कृत्य द्वाःस्थो मूर्ध्नि कृताञ्जलिः ॥ ६ ॥
प्रवेशयामास तदा तापसान् सुदुरासदान् ।
शतं समधिकं तत्र दीप्यमानं स्वतेजसा ॥ ७ ॥
प्रविष्टं राजभवनं तापसानां महात्मनाम् ।
ते द्विजाः पूर्णकलशैः सर्वतीर्थाम्बुसत्कृतैः ॥ ८ ॥
गृहीत्वा फलमूलञ्च रामस्याभ्याहरन् वहु ।
प्रतिगृह्य तु तत् सर्वं रामः प्रीतिपुरस्कृतः ॥ ९ ॥
तीर्थोदकानि सर्वाणि फलानि विविधानि च ।
उवाच च महाबाहुः सर्वानेव महामुनीन् ॥ १० ॥
इमान्यासनमुख्यानि यथार्हमुपविश्यताम् ।
रामस्य भाषितं श्रुत्वा सर्वे एव महर्षयः ॥ ११ ॥

भृगुगोत्रापत्यं च्यवनं पुरस्कृत्य । हे महाराज तव दर्शनं प्रत्याकांक्षोदयन्ति प्रेरयन्ति ॥ ॥ ५ ॥
भार्गवप्रमुखाः च्यवनप्रमुखाः ॥ ६ ॥
समधिकं किञ्चिदधिकं शतम् ॥ ७ ॥
पूर्णकलशैरुपलक्षिताः ॥ ८ ॥
फलमूलं गृहीत्वा रामस्याभ्याहरन् ॥ ९ ॥ १० ॥

ऋषीषु रुचिराख्यासु निषेदुः काञ्चनीषु ते।
उपविष्टानृषींस्तत्र दृष्ट्वा परपुरञ्जयः।
प्रयतः प्राञ्जलिर्भूत्वा राघवो वाक्यमब्रवीत् ॥ १२ ॥
किमागमनकार्य्यं वः किं करोमि समाहितः।
आज्ञाप्योऽहं महर्षीणां सर्वकामकरः सुखम् ॥ १३ ॥
इदं राज्यञ्च सकलं जीवितञ्च हृदि स्थितम्।
सर्वमेतद्द्विजार्थं मे सत्यमेतद् ब्रवीमि वः ॥ १४ ॥
तस्य तद्वचनं श्रुत्वा साधुकारो महानभूत्।
ऋषीणामुग्रतपसां यमुनातीरवासिनाम् ॥ १५ ॥
ऊचुश्चैव महात्मानो हर्षेण महता वृताः।
उपपन्नं नरश्रेष्ठ ! तवैव भवि नान्यतः ॥ १६ ॥
बहवः पार्थिवा राजन्नतिक्रान्ता महाबलाः।
कार्य्यस्य गौरवं मत्वा प्रतिज्ञां नाभ्यरोचयन् ॥ १७ ॥

उपविश्यताम्। एषु भवद्भिरिति शेषः ॥ ११ ॥
रुचिराख्यासु रुचिरशोभासु ॥ १२ ॥
किं करोमि किं कुर्य्याम्। सर्वकामकरः सर्वाभीष्टसाधकः ॥ १३ ॥
हृदि स्थितम्। हृत्पुण्डरीकप्रदेशे स्थितमित्यर्थः ॥ १४ ॥
साधुकारः साधुसाध्विति शब्दप्रयोगः ॥ १५ ॥
तवैवोपपन्नं त्वय्येवेदृशं वचो युक्तं नान्यतः नान्यस्य ॥ १६ ॥
कार्य्यस्य गौरवं मत्वा तच्छ्रवणादुत्तरमपि करिष्यामीति प्रतिज्ञां

त्वया पुनर्ब्राह्मणगौरवादियं
कृता प्रतिज्ञा ह्यनवेक्ष्य कारणम्।
ततश्च कर्त्ता ह्यसि नाच संशयो
महाभयात्त्रातुमृषींस्त्वमर्हसि ॥ १८ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
षष्टितमः सर्गः ॥ ६० ॥

नाभ्यरोचयन् न कुर्वन्ति। अशक्यत्वेनेति भावः। भवांस्त्वर्थमश्रुत्वैव प्रतिज्ञातवानित्याश्चर्य्यम् ॥ १७ ॥

तदाह,—त्वयेति ॥ १८ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे षष्टितमः सर्गः ॥ ६० ॥

# एकषष्टितमः सर्गः ।



ब्रुवद्भिरेवमृषिभिः काकुत्स्थो वाक्यमब्रवीत् ।
किं कार्य्यं ब्रूत मुनयो भयं तावदपैतु वः ॥ १ ॥
तथा ब्रुवति काकुत्स्थे भार्गवो वाक्यमब्रवीत् ।
भयानां शृणु यन्मूलं देशस्य च नरेश्वर ! ॥ २ ॥
पूर्वं कृतयुगे राजन् ! दैतेयः सुमहामतिः ।
लोलापुत्रोऽभवत् ज्येष्ठो मधुर्नाम महासुरः ॥ ३ ॥
ब्रह्मण्यश्च शरण्यश्च बुद्ध्या च परिनिष्ठितः ।
सुरैश्च परमोदारैः प्रीतिस्तस्यातुलाभवत् ॥ ४ ॥
स मधुर्वीर्य्यसम्पन्नो धर्मे च सुसमाहितः ।
बहुमानाच्च रुद्रेण दत्तस्तस्याद्भुतो वरः ॥ ५ ॥
शूलं शूलाद्विनिष्कृष्य महावीर्य्यं महाप्रभम् ।

अथ ऋषिभिः स्वकार्य्यनिवेदनम् । एवं ब्रुवद्भिः । भयत्राणमिति शेषः । ऋषिभिः प्रेरित इति शेषः । किं कार्य्यं किं भयत्राणं कार्य्यमित्यर्थः ॥ १ ॥

देशस्य च चादस्माकं भयानां यन्मूलं तच्छृणु ॥ २ ॥

लोलायाः पुत्रो लोलापुत्रः ॥ ३ ॥ ४ ॥ ५ ॥

ददौ महात्मा सुप्रीतो वाक्यञ्चैतदुवाच ह ॥ ६ ॥
त्वयायमतुलो धर्मो मत्प्रसादकरः शुभः ।
प्रीत्या परमया युक्तो ददाम्यायुधमुत्तमम् ॥ ७ ॥
यावत् सुरैश्च विप्रैश्च न विरुध्येर्महासुर ! ।
तावच्छूलं तवेदं स्यादन्यथा नाशमेष्यति ॥ ८ ॥
यश्च त्वामभियुञ्जीत युद्धाय विगतज्वरः ।
तं शूलो भस्मसात् कृत्वा पुनरेष्यति ते करम् ॥ ९ ॥
एवं रुद्राद्वरं लब्ध्वा भूय एव महासुरः ।
प्रणिपत्य महादेवं वाक्यमेतदुवाच ह ॥ १० ॥
भगवन् ! मम वंशस्य शूलमेतदनुत्तमम् ।
भवेत्तु सततं देव ! सुराणामीश्वरो ह्यसि ॥ ११ ॥
तं ब्रुवाणं मधुं देवः सर्वभूतपतिः शिवः ।
प्रत्युवाच महादेवो नैतदेवं भविष्यति ॥ १२ ॥
माभूत्ते विफला वाणी मत्प्रसादकृता शुभा ।
भवतः पुत्रमेकन्तु शूलमेतद्भविष्यति ॥ १३ ॥
यावत् करस्थः शूलोऽयं भविष्यति सुतस्य ते ।

विनिष्कृष्य तच्छक्तिमाकृष्य ॥ ६ ॥
यतस्त्वया मत्प्रसादकरो धर्मः कृतोऽतस्त आयुधं ददामि ॥ ७ ॥
यावन्न विबुधैः विरोधं न कुर्याः । अन्यथा नाशमदर्शनम् ॥ ८ ॥
। ९ । १० ॥ ११ । १२ ॥

अवध्यः सर्वभूतानां शूलहस्तो भविष्यति ॥ १४ ॥
एवं मधुर्वरं लब्ध्वा देवात् सुमहदद्भुतम् ।
भवनं सोऽसुरश्रेष्ठः कारयामास सुप्रभम् ॥ १५ ॥
तस्य पत्नी महाभागा प्रिया कुम्भीनसीति या ।
विश्वावसोरपत्यं साप्यनलायां महाप्रभा ॥ १६ ॥
तस्याः पुत्रो महावीर्य्यो लवणो नाम दारुणः ।
बाल्यात्प्रभृति दुष्टात्मा पापान्येव समाचरत् ॥ १७ ॥
तं पुत्रं दुर्विनीतन्तु दृष्ट्वा क्रोधसमन्वितः ।
मधुः स शोकमापेदे न चैनं किञ्चिदब्रवीत् ॥ १८ ॥
स विहाय इमं लोकं प्रविष्टो वरुणालयम् ।
शूलं निवेश्य लवणे वरं तस्मै न्यवेदयत् ॥ १९ ॥
स प्रभावेण शूलस्य दौरात्म्येनात्मनस्तथा ।
सन्तापयति लोकांस्त्रीन् विशेषेण च तापसान् ॥ २० ॥

मत्प्रसादकृता मत्प्रसादजसन्तोषोत्था । भविष्यति प्राप्स्यति ॥ १३ ॥ ॥ १४ ॥ १५ ॥

कुम्भीनसी माल्यवत्सुताया अनलायाः सुता रावणस्वसा पूर्वं मधुना हृतेत्युक्ता । तदेवाहानलायामिति । कुम्भीनसीपितरमाह,—विश्वावसोरिति ॥ १६ ॥ १७ ॥ १८ ॥

वरं यावच्छूलं तव हस्ते तावदवध्यत्वं तवेत्येवं रूपं वरस्तान्तं न्यवेदयत् ॥ १९ ॥ २० ॥

एवम्प्रभावो लवणः शूलञ्चैव तथाविधम्।
श्रुत्वा प्रमाणं काकुत्स्थ! त्वं हि नः परमा गतिः॥ २१॥
बहवः पार्थिवा राम! भयार्त्तैरृषिभिः पुरा।
अभयं याचिता वीर! त्रातारं न च विद्महे॥ २२॥
ते वयं रावणं श्रुत्वा हतं सबलवाहनम्।
त्रातारं विद्महे तात! नान्यं भुवि नराधिपम्॥
तत् परित्रातुमिच्छामो लवणाद्भयपीड़िताः॥ २३॥
इति राम! निवेदितन्तु ते
भयजं कारणमुत्थितञ्च यत्।
विनिवारयितुं भवान् क्षमः
कुरु तं काममहीनविक्रमः॥ २४॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
एकषष्टितमः सर्गः॥ ६१॥

त्वं प्रमाणम्। यथोचितकरणे इति शेषः॥ २१॥ २२॥ २३॥
भयजं भयजनकम्॥ २४॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे एकषष्टितमः सर्गः॥ ६१॥

## द्विषष्टितमः सर्गः।



तथोक्ते तान् ऋषीन् रामः प्रत्युवाच कृताञ्जलिः।
किमाहारः किमाचारो लवणः क्व च वर्त्तते ॥ १ ॥
राघवस्य वचः श्रुत्वा ऋषयः सर्व एव ते।
ततो निवेदयामासुर्लवणो ववृधे यथा ॥ २ ॥
आहारः सर्वसत्त्वानि विशेषेण च तापसाः।
आचारो रौद्रता नित्यं वासो मधुवने तथा ॥ ३ ॥
हत्वा बहुसहस्राणि सिंहव्याघ्रमृगाण्डजान्।
मानुषांश्चैव कुरुते नित्यमाहारमाह्निकम् ॥ ४ ॥
ततोऽन्तराणि सत्त्वानि खादते स महाबलः।
संहारे समनुप्राप्ते व्यादितास्य इवान्तकः ॥ ५ ॥
तच्छ्रुत्वा राघवो वाक्यमुवाच स महामुनीन्।
घातयिष्यामि तद्रक्षो व्यपगच्छतु वो भयम् ॥ ६ ॥
प्रतिज्ञाय तदा तेषां मुनीनामुग्रतेजसाम्।
स भ्रातॄन् सहितान् सर्वानुवाच रघुनन्दनः ॥ ७ ॥

अथ शत्रुघ्नस्य तद्वधार्थं प्रेषणम्। तथोक्ते इति इति। परिज्ञात-मिच्छाम इत्युक्ते ॥ १ ॥

यथा ववृधे यादृगाहारादिमान्‌ववृधे तन्निवेदयामासुः ॥ २ ॥ ३ ॥ ४ ॥

को हन्ता लवणं वीरः कस्यांशः स विधीयताम्।
भरतस्य महाबाहोः शत्रुघ्नस्य च धीमतः॥ ८॥
राघवेणैवमुक्तस्तु भरतो वाक्यमब्रवीत्।
अहमेनं वधिष्यामि ममांशः स विधीयताम्॥ ९॥
भरतस्य वचः श्रुत्वा धैर्य्यशौर्य्यसमन्वितम्।
लक्ष्मणावरजस्तस्थौ हित्वा सौवर्णमासनम्॥ १०॥
शत्रुघ्नस्त्वब्रवीद्वाक्यं प्रणिपत्य नराधिपम्।
कृतकर्मा महाबाहुर्मध्यमो रघुनन्दनः॥ ११॥
आर्य्येण हि पुरा शून्या त्वयोध्या परिपालिता।
सन्तापं हृदये कृत्वा आर्य्यस्यागमनं प्रति॥ १२॥
दुःखानि च बहूनीह अनुभूतानि पार्थिव!।
शयानो दुःखशय्यासु नन्दिग्रामे महायशाः॥ १३॥
फलमूलाशनो भूत्वा जटी चीरधरस्तथा।
अनुभूयेदृशं दुःखमेष राघवनन्दनः॥ १४॥

ततोऽनन्तरामि। अन्यान्यपीत्यर्थः॥ ५॥ ६॥ ७॥

कस्यांश इति पृष्ट्वा स्वयमेव निश्चिनोति। भरतस्येति। लक्ष्मणेन मया च रावणवधवल्लवणवधो भरतशत्रुघ्नाभ्यां कार्य्य इति भावः॥ ॥ ८॥ ९॥

आसनं हित्वा आसनादुत्थायेत्यर्थः॥ १०॥ ११॥

पूर्वं त्वद्वियोगदुःखितस्य भरतस्य पुनरपि क्लेशाय प्रेषणमयुक्त-

प्रेष्ये मयि स्थिते राजन्! न भूयः क्लेशमाप्नुयात्।
तथा ब्रुवति शत्रुघ्ने राघवः पुनरब्रवीत्॥ १५॥
एवं भवतु काकुत्स्थ! क्रियतां मम शासनम्।
राज्ये त्वामभिषेक्ष्यामि मधोस्तु नगरे शुभे॥ १६॥
निवेशय महाबाहो! भरतं यद्यवेक्षसे।
शूरस्त्वं कृतविद्यश्च समर्थश्च निवेशने॥ १७॥
नगरं यमुनाजुष्टं तथा जनपदान् शुभान्।
यो हि वंशं समुत्पाद्य पार्थिवस्य निवेशने॥ १८॥
न विधत्ते नृपं तत्र नरकं स हि गच्छति।
स त्वं हत्वा मधुसुतं लवणं पापनिश्चयम्॥ १९॥
राज्यं प्रशाधि धर्मेण वाक्यं मे यद्यवेक्षसे।
उत्तरश्च न वक्तव्यं शूर! वाक्यान्तरे मम॥ २०॥

मित्याशयेनाहार्य्येणेति। आर्य्येण त्वया शून्यायोध्या भरतेन पालिता। आर्य्यस्यागमनं प्रति तावत्पर्य्यन्तम्॥ १२॥ १३॥ १४॥

प्रेष्ये विशिष्य भरतस्य नियोज्ये। १५॥ १६।

यद्यवेक्षसे। अस्लाघनीयत्वेनेति शेषः। तदा भरतं निवेशयाचैव स्थापयेत्यर्थः। निवेशने नूतननगरनिवेशने त्वं समर्थः॥ १७।

मधोर्नगरे त्वामभिषेक्ष्यामीति यदुक्तं तत्र हेतुमाह,—यो हीति। निवेशने नगरे॥ १८।

नृपं तत्र उत्पादितवंशनृपराज्ये॥ १९॥

बालेन पूर्वजस्याज्ञा कर्त्तव्या नात्र संशयः ।
अभिषेकञ्च काकुत्स्थ ! प्रतीच्छस्व ममोद्यतम् ॥ २१ ॥
वसिष्ठप्रमुखैर्विप्रैर्विधिमन्त्रपुरस्कृतम् ॥ २२ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
द्विषष्टितमः सर्गः ॥ ६२ ॥

उत्तरं न वक्तव्यम् । लवणं हत्वा त्वत्समीप एव मया स्थेयमित्यादि न वाच्यमित्यर्थः ॥ २० ॥ २१ ॥

विधिमन्त्रपुरस्कृतं विधिना मन्त्रेण पुरस्कृतम् ॥ २२ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

## त्रिषष्टितमः सर्गः।



एवमुक्तस्तु रामेण परां व्रीड़ामुपागमत्।
शत्रुघ्नो वीर्य्यसम्पन्नो मन्दं मन्दमुवाच ह॥ १॥
अधर्मं विद्म काकुत्स्थ! अस्मिन्नर्थे नरेश्वर!।
कथं तिष्ठत्सु ज्येष्ठेषु कनीयानभिषिच्यते॥ २॥
अवश्यं करणीयश्च शासनं पुरुषर्षभ!।
तव चैव महाभाग! शासनं दुरतिक्रमम्॥ ३॥
त्वत्तो मया श्रुतं वीर! श्रुतिभ्यश्च मया श्रुतम्।

अथ रामेण स्वसन्निधावेव मधुराज्ये शत्रुघ्नमभिषिच्य लवणवधो-पायोपदेशपूर्वकं तद्वधार्थं दिव्यास्त्रप्रदानम्। एवमिति। परां व्रीड़ाम् अनुचितराज्याभिषेकोत्थिताश्रवणजां लज्जामत एव मन्दं मन्द-मुवाच॥ १॥

तदेवाह,—अधर्ममिति। विद्म वेद्मि। अस्मिन्नित्येतदित्यस्य धर्म-धर्महेतुमाह,—कथमिति। कनीयानभिषिच्यते। न कथमपीत्यर्थः। अतएवाधर्म इत्यर्थः॥ २॥

तव शासनस्यावश्यं करणीयं यतस्तव शासनं वेदशासनवद्दुरति-क्रमम् अतिक्रमितुमशक्यम्। एवञ्चोभयतः पाशा रज्जुरियं मे जाते-त्यर्थः॥ ३॥

नोत्तरं हि मया वाच्यं मध्यमे प्रतिजानति ॥ ४ ॥
व्याहृतं दुर्वचो घोरं हन्तास्मि लवणं मृधे ।
तस्यैवं मे दुरुक्तस्य दुर्गतिः पुरुषर्षभ ! ॥ ५ ॥
उत्तरं न हि वक्तव्यं ज्येष्ठेनाभिहिते पुनः ।
अधर्मसहितञ्चैव परलोकविवर्जितम् ॥ ६ ॥
सोऽहं द्वितीयं काकुत्स्थ ! न वक्ष्यामीति चोत्तरम् ।
मा द्वितीयेन दण्डो वै निपतेन्मयि मानद ! ॥ ७ ॥

ज्येष्ठे विद्यमाने कनिष्ठाभिषेकोऽधर्मस्तथा ज्येष्ठवाक्याकरणञ्चाधर्म इति त्वया कथमवगतं तत्राह,—त्वत्त इति । सद्गुरोस्त्वत्तः श्रुतिभ्यश्च ममैवं श्रवणमिति भावः । एवमधर्मसङ्कटप्राप्तिरपि मे स्वदोषमूलेत्याह,—नोत्तरं हीति । मध्यमे भ्रातरि भरते घोरं लवणं हन्तास्मीति प्रतिजानति सति हि यस्मान्मया ज्येष्ठवचनमुल्लङ्घ्योत्तरं न वाच्यं न वक्तुं योग्यम् । तद्वचस्तिरस्कारूपत्वात् ॥ ४ ॥

तथापि मृधे युद्धे घोरं लवणं हन्तास्मीत्येतद्दुर्वचो व्याहृतं तस्यास्य दुरुक्तस्य फलभूता इयं दुर्गतिः ज्येष्ठातिक्रमहेतुना निरयप्रापकाभिषेकप्राप्तिस्तत्प्रापकत्वदाज्ञातिक्रमप्राप्तिर्वा जातेति शेषः ॥ ५ ॥

अतिपीड़ावशादुक्तमेव पुनर्वदति । उत्तरं हीति । ज्येष्ठेन भरतेन त्वया वाभिहिते उत्तरं न वक्तव्यं वक्तुमनर्हमेव । किञ्च तन्मूलकं त्वयाऽधर्मसहितमत एव परलोकविवर्जितमभिषेकशासनं कृतम् । तच्च दुरतिक्रममिति शेषः ॥ ६ ॥

यदेवमतः सोऽहं भरतोक्तेः प्रथमं कृतोत्तरवचनः । हे काकुत्स्थ

कामकारो ह्यहं राजंस्तवास्य पुरुषर्षभ ! ।
अधर्मं जहि काकुत्स्थ ! मत्कृते रघुनन्दन ! ॥ ८ ॥
एवमुक्ते तु शूरेण शत्रुघ्नेन महात्मना ।
उवाच रामः संहृष्टो भरतं लक्ष्मणं तथा ॥ ९ ॥
सम्भारानभिषेकस्य आनयध्वं समाहिताः ।
अद्यैव पुरुषव्याघ्रमभिषेक्ष्यामि राघवम् ॥ १० ॥
पुरोधसश्च काकुत्स्थ ! नैगमानृत्विजस्तथा ।
मन्त्रिणश्चैव तान् सर्वानानयध्वं ममाज्ञया ॥ ११ ॥
राज्ञः शासनमाज्ञाय तथाऽकुर्वन्महारथाः ।
अभिषेकसमारम्भं पुरस्कृत्य पुरोधसम् ॥ १२ ॥

तव ज्येष्ठस्योक्तोरभिषेकं प्रतीच्छेत्यस्याः द्वितीयमुत्तरमितिहेतोर्न वक्ष्यामि। कुतस्तत्राह,—मा द्वितीयेनेति । यथा भरते जिगमिषत्यहं गमिष्यामीत्युत्तरेण प्रथमेन राज्याभिषेकाप्रत्तिरूपो दण्डः पतितस्तथेदानीं त्वयाभिषेकं प्रतीच्छेत्युक्तोतदनङ्गीकारोत्तरेण द्वितीयेन मम दण्डो मा निपतेदिति ॥ ७ ॥

यदेवमतो हे राजन्नहमस्य तव कामकारोऽभीष्टनियोगकर्त्तास्मि । यतोऽतो हे रघुनन्दन मत्कृते मदनुष्ठिते राज्याभिषेकास्वीकारेऽधर्मं जहि ममाधर्मसम्बन्धो यथा न भवेत्तथा कुरु । इहामुत्र सर्वलोकस्य मय्यन्याय्यकारित्वबुद्धिं परिहर ॥ ८ ॥

एवमुक्ते स्वातन्त्र्यं विहायाभिषेकाङ्गीकारवाक्ये उक्ते ॥ ९ ॥
आनयध्वमिति बहुवचनं सुमन्त्राद्यभिप्रायेण ॥ १० ॥ ११ ॥

प्रविष्टा राजभवनं राजानो ब्राह्मणास्तथा।
ततोऽभिषेको ववृधे शत्रुघ्नस्य महात्मनः ॥ १३ ॥
संप्रहर्षकरः श्रीमान् राघवस्य पुरस्य च।
अभिषिक्तस्तु काकुत्स्थो बभौ चादित्यसन्निभः ॥ १४ ॥
अभिषिक्तः पुरा स्कन्दः सेन्द्रैरिव दिवौकसैः।
अभिषिक्ते तु शत्रुघ्ने रामेणाक्लिष्टकर्मणा ॥ १५ ॥
पौराः प्रमुदितास्त्वासन् ब्राह्मणाश्च बहुश्रुताः।
कौसल्या च सुमित्रा च मङ्गलं केकयी तथा ॥ १६ ॥
चक्रुस्ता राजभवने याश्चान्या राजयोषितः।
ऋषयश्च महात्मानो यमुनातीरवासिनः ॥ १७ ॥
हतं लवणमाशंसुः शत्रुघ्नस्याभिषेचनात्।
ततोऽभिषिक्तं शत्रुघ्नमङ्कमारोप्य राघवः ॥
उवाच मधुरां वाणीं तेजस्तस्याभिपूरयन् ॥ १८ ॥
अयं शरस्त्वमोघस्ते दिव्यः परपुरञ्जयः।
अनेन लवणं सौम्य! हन्तासि रघुनन्दन! ॥ १९ ॥

अभिषेकसमारम्भम् अभिषेकोपकरणवन्तं पुरोधसं पुरस्कृत्य ॥१२॥ राजानः क्षत्रिया ब्राह्मणाश्च राजभवनं प्रविष्टाः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

आशंसुः आशसंसुः निश्चितवन्तः। तेजः शत्रुसंहारोचितबलवीर्यम् ॥ १८ ॥

हृष्टः शरोऽयं काकुत्स्थ ! यदा शेते महार्णवे ।
स्वयम्भूरजितो दिव्यो यन्नापश्यन् सुरासुराः ॥ २० ॥
अदृश्यः सर्वभूतानां तेनायं हि शरोत्तमः ।
सृष्टः क्रोधाभिभूतेन विनाशार्थं दुरात्मनोः ॥ २१ ॥
मधुकैटभयोर्वीर ! विघाते सर्वरक्षसाम् ।
स्रष्टुकामेन लोकांस्त्रींस्तौ चानेन हतौ युधि ॥ २२ ॥
तौ हत्वा जनभोगार्थे कैटभन्तु मधुं तथा ।
अनेन शरमुख्येन ततो लोकांश्चकार सः ॥ २३ ॥

अयं शरोऽदीयत इति शेषः ॥ १८ ॥

शरस्यामोघत्वे हेतुमाह,—सृष्ट इति। स्वयम्भूर्जन्मरहितः अजितो विष्णुर्यदा प्रलयकाले महार्णवे शेते। यं तदा सुरा असुराश्च नापश्यन्। कैमुतिकन्यायेन सर्वभूतादृश्यः। महार्णवेशयनञ्च वायुरूपेण। प्रजापतिर्वायुर्भूत्वाचरेदिति श्रुतेरिति कतकः। तेन विष्णुना साक्षादयं शरोत्तमः सृष्टः ॥ २० ॥

तदा किमर्थं तत्सृष्टिस्तत्राह,—सृष्ट इति। त्रीन् लोकान् स्रष्टुकामेन भगवता हिरण्यगर्भेण तस्याः सृष्टेर्मधुकैटभयोः सर्वरक्षसाञ्च सकाशाद्विघाते विघ्ने प्राप्ते तयोर्दुरात्मनोर्विनाशार्थं क्रोधाभिभूतेनायं शरः सृष्टः। सत्यसंकल्पत्वाच्चानेन तौ हतौ। सृष्टः क्रोधाभिभूतेन प्रभो सर्वदुरात्मनोरिति पाठे अभिषिक्तत्वाच्छत्रुघ्नसम्बोधनं प्रभो इति ॥ २१ ॥ २२ ॥

उपसंहरति। तौ हत्वेति। जनभोगार्थं जनानां भोग्यभोग-

नायं मया शरः पूर्वं रावणस्य वधार्थिना ।
मुक्तः शत्रुघ्न ! भूतानां महान् त्रासो भवेदिति ॥ २४ ॥
यच्च तस्य महच्छूलं त्र्यम्बकेण महात्मना ।
दत्तं शत्रुविनाशाय मधोरायुधमुत्तमम् ॥ २५ ॥
तत्सन्निक्षिप्य भवने पूज्यमानं पुनः पुनः ।
दिशः सर्वाः समासाद्य प्राप्नोत्याहारमुत्तमम् ॥ २६ ॥
यदा तु युद्धमाकाङ्क्षन्यदि कश्चित् समाह्वयेत् ।
तदा शूलं गृहीत्वा तु भस्म रक्षः करोति हि ॥ २७ ॥
स त्वं पुरुषशार्दूल ! तमायुधविनाकृतम् ।
अप्रविष्टं पुरं पूर्वं द्वारि तिष्ठ धृतायुधः ॥ २८ ॥

स्थानादिसम्पादनद्वारा भोगसिद्ध्यर्थं लोकांश्चकार । निष्प्रत्यूहं ससर्जेत्यर्थः । अनेन स्वस्य विष्णुत्वं दृढ़ीकृतम् ॥ २३ ॥

नायं मुक्तस्तत्र हेतुर्लोकानां त्रासो भवेदिति । अल्पस्याप्ये महास्त्रप्रयोगेण तन्मात्रहनने न शाम्यति किन्तु भूतानि संहरति । अतोऽभूतदयया न क्षिप्त इति भावः । अनेन रावणादपि लवणस्य महाबलत्वेन दिव्यशरपर्य्याप्तविषयत्वमुक्तम् ॥ २४ ॥

अथ निकुम्भिलायां समाप्तयागस्येन्द्रजित इव गृहीतशूलस्य तस्य दुर्जयत्वान् निकुम्भिलानिरोधमिव पुरप्रवेशनिरोधमुपदिशति । यच्च तस्येत्यादि । मधोर्दत्तमित्यन्वयः ॥ २५ ॥ २६ ॥ २७ ॥

आयुधविनाकृतम् आयुधरहितम् । युद्धस्येति शेषः । तत्प्रकारमाह,—अप्रविष्टमिति । पुरमप्रविष्टं प्रतीक्षन पूर्वमेव द्वारि तिष्ठ ॥ २८ ॥

अप्रविष्टस्य भवनं युद्धाय पुरुषर्षभ ! ।
आह्वयेथा महाबाहो ! ततो हन्तासि राक्षसम् ॥ २९ ॥
अन्यथा क्रियमाणे तु अवध्यः स भविष्यति ।
यदि त्वेवं कृतं वीर ! विनाशमुपयास्यति ॥ ३० ॥
एतत्ते सर्वमाख्यातं शूलस्य च विपर्य्ययः ।
श्रीमतः शितिकण्ठस्य कृत्यं हि दुरतिक्रमम् ॥ ३१ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
त्रिषष्टितमः सर्गः ॥ ६३ ॥

उक्तमेवार्थं दार्ढ्यायस्पष्टमाहाप्रविष्टस्येति ॥ २९ ॥

यदित्वेवमुक्तरीत्याकृतमनुष्ठितं भवति तदाऽवश्यं विनाशमुपयास्यति ॥ ३० ॥

विपर्य्ययः परिहारः। ननु किमनेन निर्बन्धेन। बाणेन शूलं छित्वा तमपि हनिष्यामि तत्राह,—श्रीमत इति। कृत्यं शूलमाहात्म्यं दुरतिक्रमम् अतिक्रमितुमशक्यम्। शक्तावप्यनुचितमित्यर्थः। ईश्वरकृतमर्य्यादापालनार्थमेवास्मदवतारादिति भावः ॥ ३१ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

## चतुःषष्टितमः सर्गः।

—०◎०—

एवमुक्त्वा च काकुत्स्थं प्रशस्य च पुनः पुनः।
पुनरेवापरं वाक्यमुवाच रघुनन्दनः॥ १॥
इमान्यश्वसहस्राणि चत्वारि पुरुषर्षभ!।
रथानां द्वे सहस्रे च गजानां शतमुत्तमम्॥ २॥
अन्तरापणवीथ्यश्च नानापण्योपशोभिताः।
अनुगच्छन्तु काकुत्स्थं तथैव नटनर्त्तकाः॥ ३॥
हिरण्यस्य सुवर्णस्य नियुतं पुरुषर्षभ!।
आदाय गच्छ शत्रुघ्न! पर्य्याप्तधनवाहनः॥ ४॥
बलञ्च सुभृतं वीर! हृष्टपुष्टमनुद्धतम्।

अथ शत्रुघ्नप्रस्थानम्। एवमिति। प्रशस्य स्तुत्वा॥ १॥ २॥

अन्तरा नगरमध्यवर्त्तिन्यो या आपणवीथ्यो वीथिस्थावणिजः। नानाविधैः पण्यैः क्रयविक्रयार्हद्रव्यैरुपशोभिताः युक्ताः अनुगच्छन्तु। नानावर्णोपशोभिता इति पाठे नानावर्णैर्ब्राह्मणादिभिरुपशोभिता इत्यर्थ इति कतकः। पण्येति पाठ एव युक्तः। नटाः वाक्यार्थाभिनयकर्त्तारः। नर्त्तकाः पदार्थाभिनयकर्त्तारः॥ ३॥

सुवर्णस्य उत्कृष्टवर्णस्य। नियुतं लक्षमित्येके। दशलक्षमित्यन्ये। पर्य्याप्तधनवाहनः जीवनपर्य्याप्तधनः। युद्धपर्य्याप्तवाहन इत्यर्थः॥ ४॥

सम्भाषा सम्प्रदानेन रञ्जयस्व नरोत्तम ! ॥ ५ ॥
न ह्यर्थास्तत्र तिष्ठन्ति न दारा न च बान्धवाः।
सुप्रीतो भृत्यवर्गस्तु यत्र तिष्ठति राघव ! ॥ ६ ॥
अतो हृष्टजनाकीर्णां प्रस्थाप्य महतीञ्चमूम्।
एक एव धनुष्पाणिर्गच्छ त्वं मधुनो वनम् ॥ ७ ॥
यथा त्वां न प्रजानाति गच्छन्तं युद्धकाङ्क्षिणम्।
लवणस्तु मधोः पुत्रस्तथा गच्छेरशङ्कितम् ॥ ८ ॥
न तस्य मृत्युरन्योऽस्ति कश्चिद्धि पुरुषर्षभ !।
दर्शनं योऽभिगच्छेत स वध्यो लवणेन हि ॥ ९ ॥

बलं सुगतं हृष्टं तुष्टम्। अतएव त्वय्यनुद्धतं यथा भवति तथा कुरु। वेतनादिप्रदानेनेत्यर्थः। किञ्च सम्भाषायाः सम्यग्वचनस्य सम्प्रदानेनाज्ञया रञ्जय तत् ॥ ५ ॥

किमेवं बलादरेण तत्राह,—न ह्यर्था इति। यत्र रिपुसङ्कटे भृत्यास्तिष्ठन्ति तत्रार्थादयो न तिष्ठन्तीत्येते सर्वे आदर्तव्या इत्यर्थः ॥ ६ ॥

ननु किं सेनया तर्हि लवणेन योत्स्यामि नेत्याह्वात इति। अतोऽयोध्याया इदानीमेव महतीञ्चमूं प्रस्थाप्य एक एव त्वं मधुनोवनं मधोर्वनं गच्छ। अयम्भावः। सुखेन जाह्नवीतरणाय ग्रीष्मकाल एव प्रस्थाय जाह्नवीमुत्तीर्य्य किञ्चित्कालं तत्र स्थित्वा तद्बलं तत्रैव संस्थाप्य स्वयमेक एव मधुवनं प्राप्य वर्षाप्रादुर्भावे लवणं जहीति ॥ ७ ॥

तदेवाह,—अशङ्कितं तदागमनशङ्कारहितं यथा तथा गच्छेः ॥ ८ ॥

तस्य लवणस्यान्योऽशङ्कितया तदुपरोधकव्यतिरिक्तो मृत्युर्नास्ती-

स ग्रीष्म अपयाते तु वर्षारात्र उपागते।
हन्यास्त्वं लवणं सौम्य ! स हि कालोऽस्य दुर्मतेः ॥ १० ॥
महर्षींस्तु पुरस्कृत्य प्रयान्तु तव सैनिकाः।
यथा ग्रीष्मावशेषेण तरेयुर्जाह्नवीजलम् ॥ ११ ॥
तत्र स्थाप्य बलं सर्व्वं नदीतीरे समाहितः।
अग्रतो धनुषा सार्धं गच्छ त्वं लघुविक्रम ! ॥ १२ ॥
एवमुक्तस्तु रामेण शत्रुघ्नस्तान् महाबलान्।
सेनामुख्यान् समानीय ततो वाक्यमुवाच ह ॥ १३ ॥
एते वो गणिता वासा यत्र तत्र निवत्स्यथ।
स्थातव्यञ्चाविरोधेन यथा बाधा न कस्यचित् ॥ १४ ॥

त्येतदुपपादयति। दर्शनमिति। युद्धाकाङ्क्षी समायातीति तत्कर्त्तृक-ज्ञानविषयो भवेदित्यर्थः ॥ ९ ॥

वसन्ते प्रस्थितस्यापि युद्धकालीनार्यमित्याह,—स इति। वर्षारात्रे वर्षाकाले। वर्षासु कोऽपि युद्धार्थं न यतन्त इति निर्भयो निःशूल एव चरत्यतः स एवास्य वधकाल इति भावः ॥ १० ॥

तर्हि नेदानीङ्गन्तव्यमित्याशङ्क्य स्वदेशे कार्य्यान्तरसाधनार्थमेव प्रथमतः शनैः सेनामात्रगमनं कार्य्यमित्याह,—महर्षीनिति ॥ ११ ॥

तत्र जाह्नवीपरतीरे। अग्रतः ततःपरभूते मार्गे। धनुषा सार्धम्। नान्येन बलेनेत्यर्थः ॥ १२ ॥ १३ ॥

एते प्रसिद्धा वो युष्माकं वासा गणिता एव सन्ति। यत्र यत्र वासे

तथा तांस्तु समाज्ञाप्य प्रस्थाप्य च महद्बलम्।
कौसल्याञ्च सुमित्राञ्च कैकेयीञ्चाभ्यवादयत्॥ १५॥
रामं प्रदक्षिणीकृत्य शिरसाभिप्रणम्य च।
लक्ष्मणं भरतञ्चैव प्रणिपत्य कृताञ्जलिः॥ १६॥
पुरोहितं वशिष्ठञ्च शत्रुघ्नः प्रयतात्मवान्।
रामेण चाभ्यनुज्ञातः शत्रुघ्नः शत्रुतापनः॥
प्रदक्षिणमथो कृत्वा निर्जगाम महाबलः॥ १७॥
निर्य्याप्य सेनामथसोऽग्रतस्तदा
गजेन्द्रवाजिप्रवरौघसङ्कुलाम्।
उपास्यमानः स नरेन्द्रपार्श्वतः
प्रतिप्रयातो रघुवंशवर्द्धनः॥ १८॥

## इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे चतुःषष्टितमः सर्गः॥ ६४॥

सत्यथ तत्र तत्राविरोधेन स्थातव्यम्। तदेवाह,—यथेति। इदं सैनिकान् प्रति वाक्यम्॥ १४॥

अनेन केवलसेनैव प्रस्थिता शत्रुघ्नस्तु पश्चादयोध्यात एकाक एव गमिष्यतीति ज्ञायते॥ १५॥ १६॥ १७॥ १८॥

इति रामाभिरामे श्रीरामीये रामायणतिलके उत्तरकाण्डे चतुःषष्टितमः सर्गः॥ ६४॥

---

## पञ्चषष्टितमः सर्गः ।



प्रस्थाप्य च बलं सर्वं मासमात्रोषितः पथि ।
एक एवाशु शत्रुघ्नो जगामत्वरितं तदा ॥ १ ॥
द्विरात्रमन्तरे शूर उष्य राघवनन्दनः ।
वाल्मीकेराश्रमं पुण्यमगच्छद्वासमुत्तमम् ॥ २ ॥
सोऽभिवाद्य महात्मानं वाल्मीकिं मुनिसत्तमम् ।
कृताञ्जलिरथो भूत्वा वाक्यमेतदुवाच ह ॥ ३ ॥
भगवन् ! वस्तुमिच्छामि गुरोः कृत्यादिहागमः ।
श्वः प्रभाते गमिष्यामि प्रतीचीं दारुणान्दिशम् ॥ ४ ॥
शत्रुघ्नस्य वचः श्रुत्वा प्रहस्य मुनिपुङ्गवः ।
प्रत्युवाच महात्मानं स्वागतं ते महायशः ॥ ५ ॥
स्वमाश्रममिदं सौम्य ! राघवाणां कुलस्य वै ।

अथ सेनाप्रस्थानोत्तरं मासमात्रमयोध्यायामुषित्वा पश्चादेकाकिनो गच्छतः शत्रुघ्नस्य मार्गवशाद्वाल्मीक्याश्रमप्राप्तिः । प्रस्थाप्येति । मासमात्रोषितः । अयोध्यायामिति शेषः । पथ्येक एवासहाय एव जगाम ॥ १ ॥ २ ॥ ३ ॥

दारुणाम् । लवणाधिष्ठितत्वात् ॥ ४ ॥ ५ ॥

आसनं पाद्यमर्घ्यञ्च निर्विशङ्कः प्रतीच्छ मे ॥ ६ ॥
प्रतिगृह्य तदा पूजां फलमूलञ्च भोजनम्।
भक्षयामास काकुत्स्थस्तृप्तिञ्च परमाङ्गतः ॥ ७ ॥
स भुक्त्वा फलमूलञ्च महर्षिं तमुवाच ह।
पूर्वा यज्ञविभूतीयं कस्याश्रमसमीपतः ॥ ८ ॥
तत्तस्य भाषितं श्रुत्वा वाल्मीकिर्वाक्यमब्रवीत्।
शत्रुघ्न! शृणु यस्येदं बभूवायतनं पुरा ॥ ९ ॥
युष्माकं पूर्वको राजा सौदासस्तस्य भूपतेः।
पुत्रो वीर्य्यसहो नाम वीर्य्यवानतिधार्मिकः ॥ १० ॥
स बाल एव सौदासो मृगयामुपचक्रमे।
चञ्चूर्य्यमाणं ददृशे स शूरो राक्षसद्वयम् ॥ ११ ॥
शार्दूलरूपिणौ घोरौ मृगान् बहून् सहस्रशः।
भक्ष्यमाणावसन्तुष्टौ पर्य्याप्तिन्नैव जग्मतुः ॥ १२ ॥
स तु तौ राक्षसौ दृष्ट्वा निर्मृगञ्च वनं कृतम्।

इदमाश्रमं राघवाणां कुलस्य स्वमेव स्वीयमेव। ६ ॥ ७ ॥

पूर्वा यज्ञविभूतीयमित्यार्षः सन्धिः। आश्रमसमीपतः पूर्वा पूर्वप्रदेशे दृश्यमाना पुरातनी चेयं यज्ञविभूतिर्यूपादियज्ञोपकरणसमृद्धिः कस्य यजमानस्येत्यर्थः। ८।

यस्य यजमानस्येदमायतनं बभूव तच्छृणु ॥ ९ ॥ १० ॥

चञ्चूर्य्यमाणं मुहुर्मुहुश्चरन्तम् ॥ ११ ॥ १२ ॥

क्रोधेन महताविष्टो जघानैकं महेषुणा ॥ १३ ॥
विनिपात्य तमेकन्तु सौदासः पुरुषर्षभः ।
विज्वरो विगतामर्षो हतं रक्षोऽभ्युदैक्षत ॥ १४ ॥
निरीक्षमाणं तं दृष्ट्वा सहायं तस्य रक्षसः ।
सन्तापमकरोद्धोरं सौदासञ्चेदमब्रवीत ॥ १५ ॥
यस्मादनपराधं तं सहायं मम जघ्निवान् ।
तस्मात्तवापि पापिष्ठ ! प्रदास्यामि प्रतिक्रियाम् ॥ १६ ॥
एवमुक्त्वा तु तद्रक्षस्तत्रैवान्तरधीयत ।
कालपर्य्यायचोगेन राजा मित्रसहोऽभवत् ॥ १७ ॥
राजापि यजते यज्ञमस्याश्रमसमीपतः ।
अश्वमेधं महायज्ञं तं वसिष्ठोऽप्यपालयत् ॥ १८ ॥
तत्र यज्ञो महानासीद्बहुवर्षगणायुतः ।
समृद्धः परया लक्ष्म्या देवयज्ञसमोऽभवत् ॥ १९ ॥
अथावसाने यज्ञस्य पूर्ववैरमनुस्मरन् ।

निर्म्मर्गं ज्ञातं वनस्य दृष्ट्वेत्यनुकर्षः ॥ १३ ॥ १४ ॥

तस्य हतस्य रक्षसः सहायं सहायभूतमात्मानं निरीक्षमाणन्तं राजानं दृष्ट्वा सन्तापमकरोत् ॥ १५ ॥ १६ ॥

कालपर्य्यायचोगेन बहुकालानन्तरं प्राप्य राज्यप्रापककर्मवशात मित्रसहो राजा भवत् । वीर्य्यसहस्यैव मित्रसह इति नामान्तरम् ॥१७॥

अस्याश्रमेति लुप्तषष्ठीकम् । अस्याश्रमस्य समीपतो राजा यज्ञं यजते स्म ॥ १८ ॥

वसिष्ठरूपी राजानमिति होवाच राघव: ॥ २० ॥
अद्य यज्ञावसानान्ते सामिषं भोजनं मम।
दीयतामिति शीघ्रं वै नात्र कार्य्या विचारणा ॥ २१ ॥
तच्छ्रुत्वा व्याहृतं वाक्यं रक्षसा ब्रह्मरूपिणा।
सूदान् संस्कारकुशलानुवाच पृथिवीपतिः ॥ २२ ॥
हविष्यं सामिषं स्वादु यथा भवति भोजनम्।
तथा कुरुत शीघ्रं वै परितुष्येद्यथा गुरुः ॥ २३ ॥
शासनात् पार्थिवेन्द्रस्य सूदः सम्भ्रान्तमानसः।
तच्च रक्षः पुनस्तत्र सूदवेषमथाकरोत् ॥ २४ ॥
समानुषमथो मांसं पार्थिवाय न्यवेदयत्।
इदं स्वादु हविष्यञ्च सामिषञ्चान्नमाहृतम् ॥ २५ ॥
स भोजनं वसिष्ठाय पत्न्या सार्धमुपाहरत्।
मदयन्त्या नरश्रेष्ठ! सामिषं रक्षसा हृतम् ॥ २६ ॥

गणायत इत्याद्युपश्लोकः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

सम्भ्रान्तमानसः। अभूदिति शेषः। पाकत्वरयेति शेषः। सूदवेषमिति। तथ महामसे सूदाकारवेषं गृहीत्वा मुख्यसूदेन पाकसमये मानुषं मांसं प्राचिक्षिपदिति शेषः। २४।

अथानन्तरं सूदवेषो राक्षसः पार्थिवाय मानुषमांसं पक्वं न्यवेदयत्। इदमन्नं सिद्धमिति निवेदनप्रकारः ॥ २५ ॥

राजापि सामिषं मानुषमांसमानुषमाङ्गविष्यमित्येव विज्ञाय पत्न्या सार्द्धं वसिष्ठायोपाहरत् ॥ २६ ॥

ज्ञात्वा तदामिषं विप्रो मानुषं भोजनागतम्।
क्रोधेन महताविष्टो व्याहर्तुमुपचक्रमे ॥ २७ ॥
यस्मात्त्वं भोजनं राजन्! ममैतद्दातुमिच्छसि।
तस्माद्भोजनमेतत्ते भविष्यति न संशयः ॥ २८ ॥
ततः क्रुद्धस्तु सौदासस्तोयं जग्राह पाणिना।
वसिष्ठं शप्तुमारेभे भार्य्या चैनमवारयत् ॥ २९ ॥
राजन्! प्रभुर्यतोऽस्माकं वसिष्ठो भगवानृषिः।
प्रतिशप्तुं न शक्तस्त्वं देवतुल्यं पुरोधसम् ॥ ३० ॥
ततः क्रोधमयस्तोयं तेजोबलसमन्वितम्।
व्यसर्जयत धर्मात्मा ततः पादौ सिषेच च ॥ ३१ ॥
तेनास्य राज्ञस्तौ पादौ तदा कल्माषताङ्गतौ।
तदा प्रभृति राजाऽसौ सौदासः सुमहायशाः ॥ ३२ ॥
कल्माषपादः संवृत्तः ख्यातश्चैव तथा नृपः।
स राजा सह पत्न्या वै प्रणिपत्य मुहुर्मुहुः ॥
पुनर्वसिष्ठं प्रोवाच यदुक्तं ब्रह्मरूपिणा ॥ ३३ ॥
तच्छ्रुत्वा पार्थिवेन्द्रस्य रक्षसा विकृतञ्च तत्।

मानुषमामिषं भोजनागतं ज्ञात्वा। भोजनरसवशेनेति भावः ॥२७॥
एतद्भोजनं मानुषामिषभोजनम् ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥
वसिष्ठं शुद्धवसिष्ठम्। ब्रह्मरूपिणा मायावसिष्ठेन यदुक्तं सामिष-भोजनप्रार्थनम् ॥ ३३ ॥

पुनः प्रोवाच राजानं वसिष्ठः पुरुषर्षभम् ॥ ३४ ॥
मया रोषपरीतेन यदिदं व्याहृतं वचः।
नैतच्छक्यं वृथा कर्त्तुं प्रदास्यामि च ते वरम् ॥ ३५ ॥
कालो द्वादशवर्षाणि शापस्यान्तो भविष्यति।
मत्प्रसादाच्च राजेन्द्र! अतीतन्न स्मरिष्यसि ॥ ३६ ॥
एवं स राजा तं शापमुपभुज्यारिसूदनः।
प्रतिलेभे पुनाराज्यं प्रजाश्चैवान्वपालयत् ॥ ३७ ॥
तस्य कल्माषपादस्य यज्ञस्यायतनं शुभम्।
आश्रमस्य समीपेऽस्मिन्यन्मां पृच्छसि राघव! ॥ ३८ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
पञ्चषष्टितमः सर्गः ॥ ६५ ॥

तत्त्वसा वितथं कृतमिति शेषः। एतद्राजवचनं श्रुत्वा पुनर्वसिष्ठः प्रोवाच ॥ ३४ ॥ ३५ ॥

द्वादशवर्षाणि कालोऽव्यतीतस्त्वेदिति शेषः। अतीतं स्वकं राजत्वस्य न शापभोगकाले स्मरिष्यसि ॥ ३६ ॥ ३७ ॥

कल्माषपाद इति मित्रसहस्यैव नामान्तरम् ॥ ३८ ॥

विवेश। शत्रुघ्नः स्वप्तुमिति शेषः ॥ ३९ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

## षट्षष्टितमः सर्गः ।



तस्य तां पार्थिवेन्द्रस्य कथां श्रुत्वा सुदारुणाम् ।
विवेश पर्णशालायां महर्षिमभिवाद्य च ॥ ३८ ॥
यामेव रात्रिं शत्रुघ्नः पर्णशालां समाविशत् ।
तामेव रात्रिं सीतापि प्रसूता दारकद्वयम् ॥ १ ॥
ततोऽर्धरात्रसमये बालका मुनिदारकाः ।
वाल्मीकेः प्रियमाचख्युः सीतायाः प्रसवं शुभम् ॥ २ ॥
भगवन् ! रामपत्नी सा प्रसूता दारकद्वयम् ।
ततो रक्षां महातेजः ! कुरु भूतविनाशिनीम् ॥ ३ ॥
तेषां तद्वचनं श्रुत्वा महर्षिः समुपागमत् ।
बालचन्द्रप्रतीकाशौ देवपुत्रौ महौजसौ ॥ ४ ॥
जगाम तत्र हृष्टात्मा ददर्श च कुमारकौ ।
भूतघ्नीञ्चाकरोत्ताभ्यां रक्षां रक्षोविनाशिनीम् ॥ ५ ॥

अथ शत्रुघ्नस्य तद्दिने एव सीताप्रसवश्रवणपूर्वकम् ऋषिभिः सह मधुवनप्रस्थानम् । यामेवेति । यस्यां रात्र्यां प्रसूता प्रसूतवती ॥ १ ॥
मुनिदारकाः मुनिपुत्राः ॥ २ ॥
भूतविनाशिनीं चतुःषष्टिबालग्रहविनाशिनीम् ॥ ३ ॥
देवपुत्रौ तत्सदृशौ । समुपागमदित्यत्र जगामेति शेषः ॥ ४ ॥ ५ ॥

कुशमुष्टिमुपादाय लवञ्चैव तु स द्विजः।
वाल्मीकिः प्रददौ ताभ्यां रक्षां भूतविनाशिनीम्॥ ६॥
यस्तयोः पूर्वजो जातः स कुशैर्मन्त्रसत्कृतैः।
निर्मार्जनीयस्तु तदा कुश इत्यस्य नाम तत्॥ ७॥
यश्चावरो भवेत्ताभ्यां लवेन सुसमाहितः।
निर्मार्जनीयो वृद्धाभिर्लवेति च स नामतः॥ ८॥
एवं कुशलवौ नाम्ना तावुभौ यमजातकौ।
मत्कृताभ्याञ्च नामभ्यां ख्यातियुक्तौ भविष्यतः॥ ९॥

भूतघ्नीं रक्षोविनाशिनीञ्च रक्षामकरोदित्युक्तं तत्प्रकारमाह,—कुशमुष्टिमिति। कुशमुष्टिं लवञ्चोपादाय रक्षां प्रददौ। लूनकुशानामग्रभागः कुशमुष्टिरित्युच्यते। तेषामधोभागोलव इति तत्र कतिपयसाग्रकुशान् गृहीत्वा मध्ये द्विधा छित्वा तदग्राधोभागाभ्यां क्रमात् ज्येष्ठकनिष्ठयोः प्रमार्जनफलकं तद्रूपं रक्षादानं वृद्धानां हस्ते इति बोध्यम्। ६।

निर्मार्जनीयो निर्मार्जनार्हायतो जातस्ततोऽस्य कुश इति नाम भविष्यतीत्यर्थः। ७॥

ताभ्याम्। तयोर्मध्ये इत्यर्थः। स लवेन कुशाधोभागमुष्टिना वृद्धाभिर्निर्मार्जनीयः। तृतीयाद्वे अर्थः प्रवेशाभावाद्वृद्धाभिरिति स लवेति नामतो भविष्यतीतिशेषः। जातकर्मैव एवाद्य दिवसे कर्त्तव्यता न तु नामकरणस्यापीति भविष्यतीति शेषपूरणम्। ८॥

यमजातकौ यमलौ। ९॥

तां रक्षां जगृहुस्ताश्च मुनिहस्तात् समाहिताः।
अकुर्वंश्च ततो रक्षां तयोर्विगतकल्मषाः॥ १०॥
तथा तां क्रियमाणाञ्च वृद्धाभिर्गोत्रनाम च।
सङ्कीर्त्तनञ्च रामस्य सीतायाः प्रसवौ शुभौ॥ ११॥
अर्धरात्रे तु शत्रुघ्नः शुश्राव सुमहत्प्रियम्।
पर्णशालां ततो गत्वा मातर्दिष्ट्येति चाब्रवीत्॥ १२॥
तदा तस्य प्रहृष्टस्य शत्रुघ्नस्य महात्मनः।
व्यतीता वार्षिकी रात्रिः श्रावणी लघुविक्रमा॥ १३॥

समाहिता वृद्धास्ता मुनिहस्तात् मुनिना दीयमानां रक्षां जगृहुः॥१०

गोत्रनाम च गोत्रस्य नाम च। तच नाम्नः करिष्यमाणत्वेन श्रवणम्। रामसङ्कीर्त्तनम्। भगवन् रामपत्नी सा प्रसूतेति मुनिदारकवचनश्रवणात्॥ ११॥

ततस्तच्छ्रवणानन्तरम्। पर्णशालां सीतायाः प्रसवपर्णशालाङ्गत्वा मातर्दिष्ट्या दैवयोगेन ते पुत्रजन्मेति शेष इत्यब्रवीदित्यर्थ इति कतकः। पर्णशालाकृतो रात्रौ दिष्ट्यादिष्ट्येति चाब्रवीदिति पाठे स्वपर्णशालास्थः सर्वमिदं श्रुत्वा स्वात्मन्येव भाग्यं भाग्यमित्यब्रवीदित्यर्थः। आद्यपाठेऽपि वाल्मीकिदत्तपर्णशालां पूर्वमेव गत्वा स्थितस्ततः श्रवणानन्तरं मातर्भाग्येनेदं तव पुत्रजन्मेति स्वात्मन्येवाब्रवीदित्यर्थो वक्तुं शक्यः। रामानुज्ञां विना रामवृत्तसम्भाषणस्यानौचित्यादिति तीर्थः॥ १२॥

वार्षिकी वर्षाकालिकी। तत्रापि श्रावणी श्रावणमासीया। दीर्घतरापि लघुविक्रमा शीघ्रगमना व्यतीता॥ १३॥

प्रभाते सुमहावीर्यः कृत्वा पौर्वाह्णिकीं क्रियाम्।
मुनिं प्राञ्जलिरामन्त्र्य ययौ पश्चान्मुखः पुनः ॥ १४ ॥
स गत्वा यमुनातीरं सप्तरात्रोषितः पथि।
ऋषीणां पुण्यकीर्त्तीनामाश्रमे वासमभ्ययात् ॥ १५ ॥
स तत्र मुनिभिः सार्धं भार्गवप्रमुखैर्नृपः।
कथाभिरभिरूपाभिर्वासञ्चक्रे महायशाः ॥ १६ ॥
स काञ्चनाद्यैर्मुनिभिः समेतै-
रघुप्रवीरो रजनीं तदानीम्।
कथाप्रकारैर्बहुभिर्महात्मा
विरामयामास नरेन्द्रसूनुः ॥ १७ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
षट्षष्टितमः सर्गः ॥ ६६ ॥

मुनिं वाल्मीकिम् ॥ १४ ॥ १५ ॥

स तत्र यमुनातीरे। यत्तु गङ्गातीरे इति कतकस्तत्पूर्वापरसन्दर्भ-विरुद्धम् ॥ १६ ॥

स काञ्चनाद्यैरिति। काञ्चनेति च्यवनस्य नामान्तरम्। स भार्ग-वाद्यैरिति पाठान्तरम् ॥ १७ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

## सप्तषष्टितमः सर्गः ।



अथ रात्र्यां प्रवृत्तायां शत्रुघ्नो भृगुनन्दनम् ।
पप्रच्छ च्यवनं विप्रं लवणस्य यथाबलम् ॥ १ ॥
शूलस्य च बलं ब्रह्मन् ! के च पूर्वं विनाशिताः ।
अनेन शूलमुख्येन द्वन्द्वयुद्धमुपागताः ॥ २ ॥
तस्य तद्वचनं श्रुत्वा शत्रुघ्नस्य महात्मनः ।
प्रत्युवाच महातेजाश्च्यवनो रघुनन्दनम् ॥ ३ ॥
असङ्ख्येयानि कर्माणि यान्यस्य रघुनन्दन ! ।
इक्ष्वाकुवंशप्रभवे यद्वृत्तं तच्छृणुष्व मे ॥ ४ ॥
अयोध्यायां पुरा राजा युवनाश्वसुतो बली ।
मान्धाता इति विख्यातस्त्रिषु लोकेषु वीर्य्यवान् ॥ ५ ॥
स कृत्वा पृथिवीं कृत्स्नां शासने पृथिवीपतिः ।
सुरलोकमितो जेतुमुद्योगमकरोन्नृपः ॥ ६ ॥
इन्द्रस्य च भयं तीव्रं सुराणाञ्च महात्मनाम् ।
मान्धातरि कृतोद्योगे देवलोकजिगीषया ॥ ७ ॥

अथ रात्र्यामिति । प्रवृत्तायां जातायाम् । यथाबलं शूलबलम् । पूर्वं शूलेन विनाशिताश्च के इति पप्रच्छेति सम्बन्धः ॥ १ ॥ २ ॥ ३ ॥

अधासनेन शक्रस्य राज्यार्द्धेन च पार्थिवः।
वन्द्यमानः सुरगणैः प्रतिज्ञामध्यरोहत ॥ ८ ॥
तस्य पापमभिप्रायं विदित्वा पाकशासनः।
सान्त्वपूर्वमिदं वाक्यमुवाच युवनाश्वजम् ॥ ९ ॥
राजा त्वं मानुषे लोके न तावत् पुरुषर्षभ !।
अकृत्वा पृथिवीं वश्यां देवराज्यमिहेच्छसि ॥ १० ॥
यदि वीर ! समग्रा ते मेदिनी निखिला वशे।
देवराज्यं कुरुष्वेह सभृत्यबलवाहनः ॥ ११ ॥
इन्द्रमेवं ब्रुवाणन्तं मान्धाता वाक्यमब्रवीत्।
क्व मे शक्र ! प्रतिहतं शासनं पृथिवीतले ॥ १२ ॥
तमुवाच सहस्राक्षो लवणो नाम राक्षसः।

अस्य शूरस्य लवणस्य चासंख्येयानि कर्माणि यानि सन्ति तेषु इक्ष्वाकुवंशप्रभवे मान्धातरि यन्महत्कर्मास्य तच्छृणुष्व ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

शक्रस्यार्द्धासनेनार्द्धराज्येन च युक्तः पार्थिवो राजा भूत्वा सुरगणैर्वन्द्यमानः स्थास्ये इति प्रतिज्ञां कृत्वा दिवमध्यरोहत। राजेत्यर्थः। ॥ ८ ॥ ९ ॥

तावत्प्रथमं मानुषे एव लोके सर्वात्मना राजानासि स त्वं पृथिवीमेव वश्यामकृत्वा कथमिह देवराज्यमिच्छसि ॥ १० ॥

यदि समग्रा मेदिनी ते तव वशे भविष्यति तदा देवराज्यं कुरुष्व। ॥ ११ ॥ १२ ॥

मधुपुत्रो मधुवने न तेऽज्ञां कुरुतेऽनघ ! ॥ १३ ॥
तच्छ्रुत्वा विप्रियं घोरं सहस्राक्षेण भाषितम् ।
व्रीडितोऽवाङ्मुखो राजा व्याहर्त्तुं न शशाक ह ॥ १४ ॥
आमन्त्र्य तु सहस्राक्षं प्रायात्किञ्चिदवाङ्मुखः ।
पुनरेवागमच्छ्रीमानिमं लोकं नरेश्वरः ॥ १५ ॥
स कृत्वा हृदयेऽमर्षं सभृत्यबलवाहनः ।
आजगाम मधोः पुत्रं वशे कर्त्तुमरिन्दमः ॥ १६ ॥
स काङ्क्षमाणो लवणं युद्धाय पुरुषर्षभः ।
दूतं सम्प्रेषयामास सकाशं लवणस्य सः ॥ १७ ॥
स गत्वा विप्रियाण्याह बहूनि मधुनः सुतम् ।
वदन्तमेव तं दूतं भक्षयामास राक्षसः ॥ १८ ॥
चिरायमाणे दूते तु राजा क्रोधसमन्वितः ।
अर्द्दयामास तद्रक्षः शरवृष्ट्या समन्ततः ॥ १९ ॥
ततः प्रहस्य तद्रक्षः शूलं जग्राह पाणिना ।
वधाय सानुबन्धस्य मुमोचायुधमुत्तमम् ॥ २० ॥
तच्छूलं दीप्यमानन्तु सभृत्यबलवाहनम् ।
भस्मीकृत्वा नृपं भूमौ लवणस्यागमत्करम् ॥ २१ ॥
एवं स राजा सुमहान् हतः सबलवाहनम् ।

न ते आम् । न ते आज्ञामित्यर्थः । सन्धिरार्षः ॥ १३ ॥ १४ ॥ १५ ॥
॥ १६ ॥ १७ ॥ १८ ॥

शूलस्य तु बलं सौम्य! अप्रमेयमनुत्तमम् ॥ २२ ॥
श्वः प्रभाते तु लवणं वधिष्यसि न संशयः।
अगृहीतायुधं क्षिप्रं ध्रुवो हि विजयस्तव ॥ २३ ॥
लोकानां स्वस्ति चैवं स्यात् कृते कर्मणि च त्वया।
एतत्ते सर्वमाख्यातं लवणस्य दुरात्मनः ॥ २४ ॥
शूलस्य च बलं घोरमप्रमेयं नरर्षभ!।
विनाशश्चैव मान्धातुर्यत्नेनाभूच्च पार्थिव! ॥ २५ ॥
तं श्वः प्रभाते लवणं महात्मन्
वधिष्यसे नात्र तु संशयो मे।
शूलं विना निर्गतमामिषार्थे
ध्रुवो जयस्ते भविता नरेन्द्र! ॥ २६ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
सप्तषष्टितमः सर्गः ॥ ६७ ॥

चिरायमाणे विलम्बं कुर्वाणे ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

अथ श्रुतशूलबलं प्रति स्वविजयसन्देहनिवृत्तये आह,—श्वः प्रभाते इति ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

## अष्टषष्टितमः सर्गः ।



कथां कथयतस्तेषां जयञ्चाकाङ्क्षतां शुभम् ।
व्यतीता रजनी शीघ्रं शत्रुघ्नस्य महात्मनः ॥ १ ॥
ततः प्रभाते विमले तस्मिन् काले स राक्षसः ।
निर्गतस्तु पुराद्वीरो भक्ष्याहारप्रचोदितः ॥ २ ॥
एतस्मिन्नन्तरे वीर ! उत्तीर्य्य यमुनां नदीम् ।
तीर्त्वा मधुपुरद्वारि धनुष्पाणिरतिष्ठत ॥ ३ ॥
ततोऽर्द्धदिवसे प्राप्ते क्रूरकर्मा स राक्षसः ।
आगच्छद्बहुसाहस्रं प्राणिनां भारमुद्वहन् ॥ ४ ॥
ततो ददर्श शत्रुघ्नं स्थितं द्वारि धृतायुधम् ।
तमुवाच ततो रक्षः किमनेन करिष्यसि ॥ ५ ॥
ईदृशानां सहस्राणि सायुधानां नराधम ! ।
भक्षितानि मया रोषात् कालेनानुगतोऽह्यसि ॥ ६ ॥

अथ प्रातःकाले लवणे क्वचिद्गते मधुपुरद्वारं निरुध्य स्थितेन शत्रुघ्नेन मध्याह्ने प्रतिनिवृत्तस्य युद्धायाह्वानम् । कथामिति । तेषां वचः शृण्वानस्य शत्रुघ्नस्य रजनी व्यतीता ॥ १ ॥

भक्ष्याहारआहरणान्तेन प्रचोदितः प्रेरितः ॥ २ ॥ ३ ॥ ४ ॥

किमनेन आयुधेनेत्यर्थः ॥ ५ ॥ ६ ॥

आहारश्चाद्यसम्पूर्णो ममायं पुरुषाधम!।
स्वयं प्रविष्टोऽद्य मुखं कथमासाद्य दुर्मते!॥ ७॥
तस्यैवं भाषमाणस्य हसतश्च मुहुर्मुहुः।
शत्रुघ्नो वीर्य्यसम्पन्नो रोषादश्रूण्यवासृजत्॥ ८॥
तस्य रोषाभिभूतस्य शत्रुघ्नस्य महात्मनः।
तेजोमया मरीच्यस्तु सर्वगात्रैर्विनिष्पतन्॥ ९॥
उवाच च सुसंक्रुद्धः शत्रुघ्नः स निशाचरम्।
योद्धुमिच्छामि दुर्बुद्धे! द्वन्द्वयुद्धं त्वया सह॥ १०॥
पुत्रो दशरथस्याहं भ्राता रामस्य धीमतः।
शत्रुघ्नो नाम शत्रुघ्नो वधाकाङ्क्षी तवागतः॥ ११॥
तस्य मे युद्धकामस्य द्वन्द्वयुद्धं प्रदीयताम्।
शत्रुस्त्वं सर्वभूतानां न मे जीवन् गमिष्यसि॥ १२॥
तस्मिंस्तथा ब्रुवाणे तु राक्षसः प्रहसन्निव।
प्रत्युवाच नरश्रेष्ठ! दिष्ट्या प्राप्तोऽसि दुर्मते!॥ १३॥
मम मातृष्वसुर्भ्राता रावणो नाम राक्षसः।
हतो रामेण दुर्बुद्धे स्त्रीहेतोः पुरुषाधम!॥ १४॥

स्वयमासाद्य आगत्य मम मुखं कथमद्य प्रविष्टोऽसि॥ ७॥ ८॥
गात्रैर्विनिष्पतन्निर्निरपतन्। मरीच्यो मरीचयः॥ ९॥ १०॥ ११॥
मे मत्तो जीवन्न गमिष्यसि॥ १२॥ १३॥

तच्च सर्वं मया चान्तं रावणस्य कुलक्षयम्।
अवज्ञां पुरतः कृत्वा मया यूयं विशेषतः॥ १५॥
निहताश्च हि ते सर्वे परिभूतास्तृणं यथा।
भूताश्चैव भविष्याश्च ययञ्च पुरुषाधमाः॥ १६॥
तस्य ते युद्धकामस्य युद्धं दास्यामि दुर्मते!।
तिष्ठ त्वञ्च मुहूर्त्तन्तु यावदायुधमानये॥ १७॥
ईप्सितं यादृशं तुभ्यं सज्जये यावदायुधम्।
तमुवाचाशु शत्रुघ्नः क्व मे जीवन् गमिष्यसि॥ १८॥
स्वयमेवागतः शत्रुर्नमोक्तव्यः कृतात्मना।
यो हि विक्लवया बुद्ध्या प्रसरं शत्रवे दिशेत्॥
स हतो मन्दबुद्धिः स्याद्यथा कापुरुषस्तथा॥ १९॥

मम मातृष्वसुर्भ्राता। कुम्भीनसीसम्बन्धतः शूर्पणखाऽस्य मातृष्वसा तद्भ्राता रावणः॥ १४॥

मयाऽवज्ञां पुरतः कृत्वा यूयं विशेषतः चान्ता इत्यनुकर्षः॥ १५॥

भूताश्च भविष्याश्च यूयं वर्त्तमानाश्च पुरुषाधमाः सर्वेऽपि मे मया निहताः। सुकरहननत्वं वर्त्तमानेषु व्यङ्ग्यम्। परं तृणं यथा तथा परिभूताश्च। मान्धातृपरिभवेन परिभूता इति युष्मास्ववज्ञां कृत्वा इतः पूर्वं भवन्तो न हता इति भावः॥ १६॥ १७॥

तुभ्यं तां हन्तुं यादृशमायुधं ममेप्सितं तादृशं यावत्सज्जये सज्जं करोमि। त्वं तावत्तिष्ठेति शेषः॥ १८॥

तस्मात् सुदृष्टं कुरु जीवलोकं
शरैः शितैस्त्वां विविधैर्नयामि।
यमस्य गेहाभिमुखं हि पापं
रिपुं त्रिलोकस्य च राघवस्य ॥ २० ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
अष्टषष्टितमः सर्गः ॥ ६८ ॥

प्रसरमवकाशम् ॥ १९ ॥ २० ।

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे अष्टषष्टितमः सर्गः ॥ ६८ ॥

## एकोनसप्ततितमः सर्गः ।



तच्छ्रुत्वा भाषितं तस्य शत्रुघ्नस्य महात्मनः ।
क्रोधमाहारयत्तीव्रं तिष्ठतिष्ठेति चाब्रवीत् ॥ १ ॥
पाणौ पाणिं स निष्पिष्य दन्तान् कटकटाय्य च ।
लवणो रघुशार्दूलमाह्वयामास चासकृत् ॥ २ ॥
तं ब्रुवाणं तथा वाक्यं लवणं घोरदर्शनम् ।
शत्रुघ्नो देवशत्रुघ्न इदं वचनमब्रवीत् ॥ ३ ॥
शत्रुघ्नो न तदा जातो यदान्ये निर्जितास्त्वया ।
तदद्य बाणाभिहतो व्रज त्वं यमसादनम् ॥ ४ ॥
ऋषयोऽप्यद्य पापात्मन् ! मया त्वां निहतं रणे ।
पश्यन्तु विप्रा विद्वांसस्त्रिदशा इव रावणम् ॥ ५ ॥
त्वयि मद्बाणनिर्दग्धे पतितेऽद्य निशाचरे ।
पुरे जनपदे चापि क्षेममेव भविष्यति ॥ ६ ॥
अद्य मद्बाहुनिष्क्रान्तः शरो वज्रनिभाननः ।
प्रवेक्ष्यते ते हृदयं पद्ममंशुरिवार्कजः ॥ ७ ॥

अथ लवणवधः । तदिति ॥ १ ॥

कटकटाय्य कटकटाशब्दवतः कृत्वा ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

एवमुक्तो महावृक्षं लवणः क्रोधमूर्च्छितः ।
शत्रुघ्नोरसि चिक्षेप स च तं शतधाच्छिनत् ॥ ८ ॥
तद्दृष्ट्वा विफलं कर्म राक्षसः पुनरेव तु ।
पादपान् सुबहून् गृह्य शत्रुघ्नायासृजद्बली ॥ ९ ॥
शत्रुघ्नश्चापि तेजस्वी वृक्षानापततो बहून् ।
त्रिभिश्चतुर्भिरेकैकं चिच्छेद नतपर्वभिः ॥ १० ॥
ततो बाणमयं वर्षं व्यसृजद्राक्षसोपरि ।
शत्रुघ्नो वीर्य्यसम्पन्नो विव्यथे न स राक्षसः ॥ ११ ॥
ततः प्रहस्य लवणो वृक्षमुद्यम्य वीर्य्यवान् ।
शिरस्यभ्यहनच्छूरं स्रस्ताङ्गः स मुमोह वै ॥ १२ ॥
तस्मिन्निपतिते वीरे हाहाकारो महानभूत् ।
ऋषीणां देवसङ्घानां गन्धर्वाप्सरसां तथा ॥ १३ ॥
तमवज्ञाय तु हतं शत्रुघ्नं भुवि पातितम् ।
रक्षोलब्धान्तरमपि न विवेश स्वमालयम् ॥ १४ ॥
नापि शूलं प्रजग्राह तं दृष्ट्वा भुवि पातितम् ।
ततो हत इति ज्ञात्वा तान् भक्षान् स समुदावहत् ॥ १५ ॥
मुहूर्त्ताल्लब्धसंज्ञस्तु पुनस्तस्थौ धृतायुधः ।

वज्रनिभाननः वज्रायुधसमाग्रभागः । शंभुः किरणः ॥ ७ ॥ ८ ॥
९ ॥ १० ॥ ११ ॥

स्रस्ताङ्गः गलिताङ्गः ॥ १२ ॥ १३ ॥

शत्रुघ्नो वै पुरद्वारि ऋषिभिः सम्प्रपूजितः ॥ १६ ॥
ततो दिव्यममोघं तं जग्राह शरमुत्तमम् ।
ज्वलन्तं तेजसा घोरं पूरयन्तं दिशोदश ॥ १७ ॥
वज्राननं वज्रवगं मेरुमन्दरसन्निभम् ।
नतं पर्वसु सर्वेषु संयुगेष्वपराजितम् ॥ १८ ॥
असृक्चन्दनदिग्धाङ्गं चारुपत्रं पतत्रिणम् ।
दानवेन्द्राचलेन्द्राणामसुराणाञ्च दारुणम् ॥ १९ ॥
तं दीप्तमिव कालाग्निं युगान्ते समुपस्थितम् ।
दृष्ट्वा सर्वाणि भूतानि परित्रासमुपागमन् ॥ २० ॥
सदेवासुरगन्धर्वं सुनिभिः साप्सरोगणम् ।
जगद्धि सर्वमस्वस्थं पितामहमुपस्थितम् ॥ २१ ॥
ऊचुश्च देवदेवेशं वरदं प्रपितामहम् ।
देवानां भयसंमोहो लोकानां सङ्क्षयं प्रति ॥ २२ ॥

लब्धान्तरं शूलग्रहणाय स्वगृहप्रवेशं प्रति लब्धावकाशमपि ॥ १४ ॥
१५ ॥ १६ ॥

पूरयन्तं दिशो दश । स्वतेजसेति शेषः ॥ १७ ॥

गौरवेण मेरुमन्दरसन्निभम् ॥ १८ ॥

असृग्भिश्चन्दनैर्लिप्ताङ्गम् । पतत्रिणं बाणम् । दानवेन्द्ररूपाणाम-चलेन्द्राणाम् ॥ १९ ॥ २० ॥

मुनिभिः सहितमिति शेषः । पितामहं चतुर्मुखं ब्रह्माणम् ॥ २१ ॥

तेषां तद्वचनं श्रुत्वा ब्रह्मा लोकपितामहः ।
भयकारणमाचष्ट देवानामभयङ्करम् ॥ २३ ॥
उवाच मधुरां वाणीं शृणुध्वं सर्वदेवताः ।
वधाय लवणस्याजौ शरः शत्रुघ्नधारितः ॥ २४ ॥
तेजसा तस्य सम्मूढाः सर्वे स्मः सुरसत्तमाः ।
एषो पूर्वस्य देवस्य लोककर्तुः सनातनः ॥ २५ ॥
शरस्तेजोमयो वत्सा ! येन वै भयमागतम् ।
एष वै कैटभस्यार्थे मधुनश्च महाशरः ॥ २६ ॥
सृष्टो महात्मना तेन वधार्थे दैत्ययोस्तयोः ।
एक एव प्रजानाति विष्णुस्तेजोमयं शरम् ॥ २७ ॥
एषा एव तनुः पूर्वा विष्णोस्तस्य महात्मनः ।
इतो गच्छत पश्यध्वं वध्यमानं महात्मना ॥ २८ ॥
रामानुजेन वीरेण लवणं राक्षसोत्तमम् ।

नेदृशं दृष्टपूर्वं न श्रुतं वा लोकानां संक्षयं प्रति लोकक्षयो भवेत् किमिति भयसंमोहः ॥ २२ ॥ २३ ॥

शत्रुघ्नधारितः । तेन धृत इत्यर्थः ॥ २४ ॥

एषो पूर्वस्येति । पूर्वस्य लोककर्तुर्देवस्य एष शरः । आर्षः सन्धिः ॥ २५ ॥ २६ ॥

तेन भगवतेत्यर्थः । समेतं तेजोमयं शरं एको विष्णुरेव प्रजानाति । तदपरमूर्त्तित्वात् ॥ २७ ॥

तस्य तद्देवदेवस्य निशम्य वचनं सुराः ॥ २९ ॥
आजग्मुर्यच्च युद्धेते शत्रुघ्नलवणावुभौ ।
तं शरं दिव्यसङ्काशं शत्रुघ्नकरधारितम् ॥ ३० ॥
ददृशुः सर्वभूतानि युगान्ताग्निमिवोत्थितम् ।
आकाशमावृतं दृष्ट्वा देवैर्हि रघुनन्दनः ॥ ३१ ॥
सिंहनादं भृशं कृत्वा ददर्श लवणं पुनः ।
आहूतश्च पुनस्तेन शत्रुघ्नेन महात्मना ॥ ३२ ॥
लवणः क्रोधसंयुक्तो युद्धाय समुपस्थितः ।
आकर्णात् स विकृष्याथ तद्धनुर्धन्विनाम्बरः ॥ ३३ ॥
स मुमोच महाबाणं लवणस्य महोरसि ।
उरस्तस्य विदार्याशु प्रविवेश रसातलम् ॥ ३४ ॥
गत्वा रसातलं दिव्यः शरो विबुधपूजितः ।
पुनरेवागमत्तूर्णमिक्ष्वाकुकुलनन्दनम् ॥ ३५ ॥
शत्रुघ्नशरनिर्भिन्नो लवणः स निशाचरः ।
पपात सहसा भूमौ वज्राहत इवाचलः ॥ ३६ ॥
तच्च शूलं महद्दिव्यं हते लवणराक्षसे ।
पश्यतां सर्वदेवानां रुद्रस्य वशमन्वगात् ॥ ३७ ॥

तदेवाह,—एषा एवेति । असन्धिरार्षः । महात्मनस्तस्य विष्णोरेषा शरमयी तनुरेव पूर्वा प्राचीना मूर्त्तिः । वध्यमानं लवणमित्य-

एकेषुपातेन भयं निपात्य
लोकत्रयस्यास्य रघुप्रवीरः ।
विनिर्बभावुत्तमचापबाण-
स्तमः प्रणुद्येव सहस्ररश्मिः ॥ ३८ ॥
ततो हि देवा ऋषिपन्नगाश्च
प्रपूजिरे ह्यप्सरसश्च सर्वाः ।
दिष्ट्या जयो दाशरथेरवाप्त-
स्त्यक्त्वा भयं सर्प इव प्रशान्तः ॥ ३९ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
एकोनसप्ततितमः सर्गः ॥ ६९ ॥

न्वयः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥
३७ ॥ ३८ ॥

भयं त्यक्त्वा जयोवाप्तः । सर्प इव सर्पसदृशो लवणश्च प्रशान्तः ॥३९॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे एकोनसप्ततितमः सर्गः ॥ ६९ ॥

---

## सप्ततितमः सर्गः ।



हते तु लवणे देवाः सेन्द्राः साग्निपुरोगमाः ।
ऊचुः सुमधुरां वाणीं शत्रुघ्नं शत्रुनाशनम् ॥ १ ॥
दिष्ट्या ते विजयो वत्स ! दिष्ट्या लवण राक्षसः ।
हतः पुरुषशार्दूल ! वरं वरय सुव्रत ! ॥ २ ॥
वरदास्तु महाबाहो ! सर्वं एव समागताः ।
विजयाकाङ्क्षिणस्तुभ्यममोघं दर्शनं हि नः ॥ ३ ॥
देवानां भाषितं श्रुत्वा शूरोमूर्ध्नि कृताञ्जलिः ।
प्रत्युवाच महाबाहुः शत्रुघ्नः प्रयतात्मवान् ॥ ४ ॥
इयं मधुपुरी रम्या मधुरा देवनिर्मिता ।
निवेशं प्राप्नुयाच्छीघ्रमेष मेऽस्तु वरः परः ॥ ५ ॥
तं देवाः प्रीतमनसो बाढमित्येव राघवम् ।
भविष्यति पुरी रम्या शूरसेना न संशयः ॥ ६ ॥

अथ देवप्रसादतो महती प्रतिष्ठा शत्रुघ्नस्य । हते इति ॥ १ ॥ २ ॥

तुभ्यं तव ॥ ३ ॥ ४ ॥

मधुरा मनोहरा । निवेशं सपौरजानपदमहाबलसेनानिवेशभूत-महाराजधानीत्वं प्राप्नुयात् ॥ ५ ॥

शूरसेना शूरा सेना यस्यां सा ॥ ६ ॥

ते तथोक्ता महात्मानो दिवमारुरुहुस्तदा ।
शत्रुघ्नोऽपि महातेजास्तां सेनां समुपानयत् ॥ ७ ॥
सा सेना शीघ्रमागच्छच्छ्रुत्वा शत्रुघ्नशासनम् ।
निवेशनञ्च शत्रुघ्नः श्रावणेन समारभत् ॥ ८ ॥
स पुरा दिव्यसङ्काशो वर्षे द्वादशमे शुभे ।
निविष्टः शूरसेनानां विषयश्चाकुतोभयः ॥ ९ ॥
क्षेत्राणि सस्ययुक्तानि काले वर्षति वासवः ।
अरोगवीरपुरुषा शत्रुघ्नभुजपालिता ॥ १० ॥
अर्द्धचन्द्रप्रतीकाशा यमुनातीरशोभिता ।
शोभिता गृहमुख्यैश्च चत्वरापणवीथिकैः ।
चातुर्वर्ण्यसमायुक्ता नानावाणिज्यशोभिता ॥ ११ ॥
यच्च तेन पुरा शुभ्रं लवणेन कृतं महत् ।

तां सेनां गङ्गातीरे स्थापिताम् ॥ ७ ॥

श्रावणेन श्रावणमासावलम्बनेन । निवेशनं स्थापनं सेनायाः । पौरजानपदानाञ्च समारभदारभते स्म ॥ ८ ॥

द्वादशमे द्वादशे । पुरा पूर्वं प्राथमिके द्वादशे वर्षे निविष्टः । शूरसेनानां विषयो देशः । सा पुरीति पाठे सा पुरी निविष्टा विषयो देशश्च निविष्ट इत्यर्थः ॥ ९ ॥ १० ॥

अर्द्धचन्द्रप्रतीकाशेति पुरीसंस्थानकथनम् । वीथिकस्याक्लीबत्वमार्षम् ॥ ११ ॥

तच्छोभयति शत्रुघ्नो नानावर्णोपशोभिताम् ॥ १२ ॥
आरामैश्च विहारैश्च शोभमानं समन्ततः ।
शोभितां शोभनीयैश्च तथान्यैर्देवमानुषैः ॥ १३ ॥
तां पुरीं दिव्यसङ्काशां नानापण्योपशोभिताम् ।
नानादेशगतैश्चापि वणिग्भिरुपशोभिताम् ॥ १४ ॥
तां समृद्धां समृद्धार्थः शत्रुघ्नो भरतानुजः ।
निरीक्ष्य परमप्रीतः परं हर्षमुपागमत् ॥ १५ ॥
तस्य बुद्धिः समुत्पन्ना निवेश्य मधुरां पुरीम् ।
रामपादौ निरीक्षेऽहं वर्षे द्वादश आगते ॥ १६ ॥

ततः स ताममरपुरोपमां पुरीं
निवेश्य वै विविधजनाभिसंवृताम् ।
नराधिपो रघुपतिपाददर्शने
दधे मतिं रघुकुलवंशवर्द्धनः ॥ १७ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
सप्ततितमः सर्गः ॥ ७० ॥

तेन लवणेन यद्दृष्टं पुरा पूर्वं कृतं तदेव शुभ्रं सुधाधवलं कृत्वा नानावर्णैश्चित्रैरुपशोभितं यथा भवति तथा शोभयतीत्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

## एकसप्ततितमः सर्गः ।



ततो द्वादशमे वर्षे शत्रुघ्नो रामपालिताम् ।
अयोध्यां चक्रमे गन्तुमल्पभृत्यबलानुगः ॥ १ ॥
ततो मन्त्रिपुरोगांश्च बलमुख्यान्निवर्त्त्य च ।
जगाम हयमुख्येन रथानाञ्च शतेन सः ॥ २ ॥
स गत्वा गणितान् वासान् सप्ताष्टौ रघुनन्दनः ।
वाल्मीकाश्रममागत्य वासं चक्रे महायशाः ॥ ३ ॥
सोऽभिवाद्य ततः पादौ वाल्मीकेः पुरुषर्षभः ।
पाद्यमर्घ्यं तथातिथ्यं जग्राह मुनिहस्ततः ॥ ४ ॥
बहुरूपाः सुमधुराः कथास्तत्र सहस्रशः ।
कथयामास स मुनिः शत्रुघ्नाय महात्मने ॥ ५ ॥
उवाच च मुनिर्वाक्यं लवणस्य वधाश्रितम् ।
सुदुष्करं कृतं कर्म लवणं निघ्नता त्वया ॥ ६ ॥

अथ शत्रुघ्नस्यागमनसमये वाल्मीक्याश्रमे रामचरितश्रवणम् । ततो द्वादशमे इति । अल्पभृत्या बलानि चानुगा अनुयायिनो यस्य सः ॥ १ ॥

बलमुख्यान् बलप्रधानान् ॥ २ ॥

गणितान् वासान् । पूर्वमेवैतावद्भिर्वासैर्वाल्मीक्याश्रमं यास्यामीति संख्यातान् । वाल्मीकेरयं वाल्मीकः स चासावाश्रमस्तम् ॥ ३ ॥ ४ ॥ ५ ॥

बहवः पार्थिवाः सौम्य ! हताः सबलवाहनाः ।
लवणेन महाबाहो ! युध्यमाना महाबलाः ॥ ७ ॥
स त्वया निहतः पापो लीलया पुरुषर्षभ ! ।
जगतश्च भयं तत्र प्रशान्तं तव तेजसा ॥ ८ ॥
रावणस्य वधो घोरो यत्नेन महता कृतः ।
इदञ्च सुमहत्कर्म त्वया कृतमयत्नतः ॥ ९ ॥
प्रीतिश्चास्मिन् परा जाता देवानां लवणे हते ।
भूतानाञ्चैव सर्वेषां जगतश्च प्रियं कृतम् ॥ १० ॥
तच्च युद्धं मया दृष्टं यथावत् पुरुषर्षभ ! ।
सभायां वासवस्याथ उपविष्टेन राघव ! ॥ ११ ॥
ममापि परमा प्रीतिर्हृदि शत्रुघ्न ! वर्त्तते ।
उपाघ्रास्यामि ते मूर्ध्नि स्नेहस्यैषा परा गतिः ॥ १२ ॥
इत्युक्त्वा मूर्ध्नि शत्रुघ्नमुपाघ्राय महामतिः ।

लवणस्य वधाश्रितम् । कथालापमिति शेषः । न कृतं तव पूर्वकैर्मान्धात्रादिभिर्यन्न कृतं तत्त्वया कृतमित्यर्थः ॥ ६ ॥ ७ ॥

तत्र तन्निमित्तम् ॥ ८ ॥

सुमहत्कर्म रावणवधादपि महद्दुष्करमिदं कर्म लवणवधकर्म त्वयाऽयत्नतो लीलयैव कृतम् ॥ ९ ॥ १० ॥

वासवसभायाम् उपविष्टेनापि मया तत् युद्धं यथावद्दृष्टं दिव्यचक्षुषेति शेषः । दृष्टमित्यस्य श्रुतमित्यर्थो वा ॥ ११ ॥

आतिथ्यमकरोत्तस्य ये च तस्य पदानुगाः ॥ १३ ॥
स भुक्तवान् नरश्रेष्ठो गीतमाधुर्य्यमुत्तमम्।
शुश्राव रामचरितं तस्मिन् काले यथाकृतम् ॥ १४ ॥
तन्त्रीलयसमायुक्तं त्रिस्थानकरणान्वितम्।
संस्कृतं लक्षणोपेतं समतालसमन्वितम् ॥ १५ ॥
शुश्राव रामचरितं तस्मिन् काले पुराकृतम्।
तान्यक्षराणि सत्यानि यथावृत्तानि पूर्वशः ॥ १६ ॥

मूर्द्धाघ्राणं परा गतिः परं कार्य्यं स्नेहस्य ॥ १२ ॥ १३ ॥

गीतस्य माधुर्य्यं यत्र तादृशं रामचरितं तस्मिन् काले यथा रामेण कृतं तादृशमेव काव्यनिबद्धं शुश्राव। क्वचिदाश्रमप्रदेशे गायतोः कुशलवयोर्मुखादिति शेषः ॥ १४ ॥

तन्त्रीलयसमायुक्तम्। तन्त्र्याः वीणातन्त्र्यास्तद्ध्वनेर्लयस्य तालपरिच्छेदस्य समनुबद्धम्। त्रीणि स्थानानि उरःकण्ठशिरांसि तेषु करणं मन्द्रमध्यतारभेदेनोच्चारणान्तेनान्वितम्। संस्कृतं संस्कृतवाक्यबद्धम्। लक्षणोपेतं व्याकरणलक्षणैर्वृत्तलक्षणैः सङ्गीतशास्त्रलक्षणैश्चोपेतम्। समतालेन गानोचिततालशब्देन समन्वितम् ॥ १५ ॥

रामचरितं रामचरितगीतम्। तस्मिन् काले पुरा पूर्वं रामेण यथाकृतं स्वानुभूतञ्च तथैव शुश्राव। तदेव पुनराह,—तानीति। अक्षराणि अक्षरघटितवाक्यानि। सत्यानि सत्यार्थानि। पूर्वशः पूर्वकाले यथावृत्तानि यथावृत्तार्थकानि। यद्वा। यथावृत्तानि वृत्तलक्षणमनतिक्रम्य निबद्धानि। पूर्वशः आनुपूर्व्येण ॥ १६ ॥

श्रुत्वा पुरुषशार्दूलो विसंज्ञो बाष्पलोचनः ।
स मुहूर्त्तमिवासंज्ञो विनिःश्वस्य मुहुर्मुहुः ॥ १७ ॥
तस्मिन् गीते यथावृत्तं वर्त्तमानमिवाशृणोत् ।
पदानुगाश्च ये राज्ञस्तां श्रुत्वा गीतिसम्पदम् ॥ १८ ॥
अवाङ्मुखाश्च दीनाश्च ह्याश्चर्य्यमिति चाब्रुवन् ।
परस्परञ्च ये तत्र सैनिकाः सम्बभाषिरे ॥ १९ ॥
किमिदं क्व च वर्त्तामः किमेतत् स्वप्नदर्शनम् ।
अर्थोयो नः पुरा दृष्टस्तमाश्रमपदे पुनः ॥ २० ॥

श्रुत्वा पुरुषशार्दूलः शत्रुघ्नो विसंज्ञो हर्षाद्विवेकशून्योऽभूदिति शेषः। स मुहूर्त्तमसंज्ञ इव स्थितः पश्चाल्लब्धविवेको विस्मयातिरेकात् मुहुर्मुहुर्निःश्वस्य ॥ १७ ॥

तस्मिन् गीते यथावृत्तम् अतीतमपि वर्त्तमानमिवाशृणोत्। रसावेशादतीता अप्यर्थाः प्रत्यक्षवद्भान्तीति भावः। ये च राज्ञो मधुराजस्य पदानुगास्तेऽपि गीतिसम्पदं श्रुत्वा ॥ १८ ॥

एवं रामचरितगायकोऽस्माभिर्न दृश्यत इति खेदादवाङ्मुखत्वादिविशिष्टाः सन्तः आश्चर्य्यमित्यब्रुवन्। यद्वा। येतु गीतिकुशलास्ते स्वस्य तादृशगीतिनैपुण्याभावादवाङ्मुखा इत्यर्थः। ये च सैनिकास्ते परस्परं सम्बभाषिरे ॥ १९ ॥

तदेवाह,—किमिति। क्व वर्त्तामः। आश्रमे अन्यत्र वा योऽर्थो नोऽस्माकम् अस्माभिः पुरा दृष्टस्तमर्थमाश्रमपदे शृणुमः। किमिदम्। आश्रमवर्त्तिभिरननुभवनाशक्यनिबन्धनत्वादिति भावः ॥ २० ॥

श्टणुम: किमिदं स्वप्ने गीतबन्धनमुत्तमम् ।
विस्मयन्ते परं गत्वा शत्रुघ्नमिदमब्रुवन् ॥ २१ ॥
साधु पृच्छ नरश्रेष्ठ ! वाल्मीकिं मुनिपुङ्गवम् ।
शत्रुघ्नस्त्वब्रवीत् सर्वान् कौतूहलसमन्वितान् ॥ २२ ॥
सैनिका ! न क्षमोऽस्माकं परिप्रष्टुमिहेदृश: ।
आश्चर्य्याणि बहूनीह भवन्त्यस्याश्रमे मुने: ॥ २३ ॥
न तु कौतूहलाद्युक्तमन्वेष्टुं तं महामुनिम् ।
एवन्तद्वाक्यमुक्त्वा तु सैनिकान् रघुनन्दन: ॥
अभिवाद्य महर्षिन्तं स्वन्निवेशं ययौ तदा ॥ २४ ॥

## इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे एकसप्ततितम: सर्ग: ॥ ७१ ॥

यदेवमत: स्वप्ने ऽस्मदीये स्व गीतबन्धमाश्रितो भवेत्तत्र दुर्घटस्यापि सुघटत्वादिति सम्बभाषिरे इति सम्बन्धः ॥ २१ ॥

साधुपृच्छेति । किं कर्त्तृकं गानमितीति शेषः ॥ २२ ॥

ईदृशोऽर्थः परिप्रष्टुं न क्षमः ॥ २३ ॥

अन्वेष्टुमवगन्तुं प्रष्टुम् ॥ २४ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके उत्तरकाण्डे एकसप्ततितमः सर्गः ॥ ७१ ॥

## द्विसप्ततितमः सर्गः ।



तं शयानं नरव्याघ्रं निद्रा नाभ्यागमत्तदा ।
चिन्तयानमनेकार्थं रामगीतमनुत्तमम् ॥ १ ॥
तस्य शब्दं सुमधुरं तन्त्रीलयसमन्वितम् ।
श्रुत्वा रात्रिर्जगामाशु शत्रुघ्नस्य महात्मनः ॥ २ ॥
तस्यां रजन्यां व्युष्टायां कृत्वा पौर्वाह्णिकक्रमम् ।
उवाच प्राञ्जलिर्वाक्यं शत्रुघ्नो मुनिपुङ्गवम् ॥ ३ ॥
भगवन्द्रष्टुमिच्छामि राघवं रघुनन्दनम् ।
त्वयानुज्ञातमिच्छामि सर्वैभिः संशितव्रतैः ॥ ४ ॥
इत्येवं वादिनं तन्तु शत्रुघ्नं शत्रुसूदनम् ।
वाल्मीकिः सम्परिष्वज्य विससर्ज स राघवम् ॥ ५ ॥
सोऽभिवाद्य मुनिश्रेष्ठं रथमारुह्य सुप्रभम् ।
अयोध्यामगमत्तूर्णं राघवोत्सुकदर्शनः ॥ ६ ॥

अथ शत्रुघ्नस्य रामं द्रष्टुं पुनः प्रतिनिवृत्तिः । तमिति ॥ १ ॥

तस्य रामगीतस्य ॥ २ ॥

पौर्वाह्णिककर्मं प्रातःस्नानार्घ्यसन्ध्यावन्दनब्रह्मयज्ञानुष्ठानरूपं पर्वाह्ण-सम्बन्ध्याचारक्रमम् ॥ ३ ॥

स प्रविष्टः पुरीं रम्यां श्रीमानिक्ष्वाकुनन्दनः ।
प्रविवेश महाबाहुर्यत्र रामो महाद्युतिः ॥ ७ ॥
स रामं मन्त्रिमध्यस्थं पूर्णचन्द्रनिभाननम् ।
पश्यन्नमरमध्यस्थं सहस्रनयनं यथा ॥ ८ ॥
सोऽभिवाद्य महात्मानं ज्वलन्तमिव तेजसा ।
उवाच प्राञ्जलिर्भूत्वा रामं सत्यपराक्रमम् ॥ ९ ॥
यदाज्ञप्तं महाराज ! सर्व्वं तत् कृतवानहम् ।
हतः स लवणः पापः पुरी चास्य निवेशिता ॥ १० ॥
द्वादशैतानि वर्षाणि त्वां विना रघुनन्दन ! ।
नोत्सहेयमहं वस्तुं त्वया विरहितो नृप ! ॥ ११ ॥
स मे प्रसादं काकुत्स्थ ! कुरुष्वामितविक्रम ।
मातृहीनो यथा वत्सो न चिरं प्रवसाम्यहम् ॥ १२ ॥
एवं ब्रुवाणं काकुत्स्थः परिष्वज्येदमब्रवीत् ।
मा विषादं कृथाः शूर ! नैतत् क्षत्रियचेष्टितम् ॥ १३ ॥

राघवं रघुगोत्रापत्यं रघुनन्दनं रघुकुलस्यानन्दजनकम् त्वयानुज्ञात
तवानुज्ञाम् । एभिर्म्मन्त्रिभिः सहेच्छामि । ४ ॥ ५ ॥ ६ ॥

पुरीमयोध्याम् ॥ ७ ॥ ८ ॥ ९ ॥

अस्य पुरी निवेशिता सर्वप्रजानिवेशनेन प्रतिष्ठापिता ॥ १० ॥
११ ॥ १२ ॥

क्षत्रियचेष्टितं क्षत्रियाचारः ॥ १३ ॥

नावसीदन्ति राजानो विप्रवासेषु राघव ! ।
प्रजा हि परिपाल्या हि क्षत्रधर्मेण राघव ! ॥ १४ ॥
काले काले तु मां वीर ! अयोध्यामवलोकितुम् ।
आगच्छ त्वं नरश्रेष्ठ ! गन्तासि च पुरं तव ॥ १५ ॥
ममापि त्वं सुदयितः प्राणैरपि न संशयः ।
अवश्यं करणीयञ्च राज्यस्य परिपालनम् ॥ १६ ॥
तस्मात्त्वं वस काकुत्स्थ ! सप्तरात्रं मया सह ।
ऊर्द्ध्वं गन्तासि मधुरां सभृत्यबलवाहनः ॥ १७ ॥
रामस्यैतद्वचः श्रुत्वा धर्मयुक्तं मनोनुगम् ।
शत्रुघ्नो दीनया वाचा बाढ़मित्येव चाब्रवीत् ॥ १८ ॥
सप्तरात्रञ्च काकुत्स्थो राघवस्य यथाज्ञया ।
उष्य तत्र महेष्वासो गमनायोपचक्रमे ॥ १९ ॥
आमन्त्र्य तु महात्मानं रामं सत्यपराक्रमम् ।
भरतं लक्ष्मणञ्चैव महारथमुपाहरत् ॥ २० ॥
दूरं पद्भ्यामनुगतो लक्ष्मणेन महात्मना ।

हि यस्मात् क्षत्रियाणां प्रजाः सर्वथा परिपाल्या इति हि प्रसिद्धम् ॥ १४ ॥

मामवलोकितुमयोध्यामागच्छ । तव पुरं स्वपुरं गन्तासि । गच्छेरर्थः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

भरतेन च शत्रुघ्नो जगामाशु पुरीन्तदा ॥ २१ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
द्विसप्ततितमः सर्गः ॥ ७२ ॥

यथाज्ञया यथावत् ज्ञतया चाज्ञया ॥ १९ ॥ २० ॥ २१ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

---

## त्रिसप्ततितमः सर्गः ।



प्रस्थाप्य तु स शत्रुघ्नं भ्रातृभ्यां सह राघवः ।
प्रमुमोद सुखी राज्यं धर्मेण परिपालयन् ॥ १ ॥
ततः कतिपयाहस्सु वृद्धो जानपदो द्विजः ।
मृतं बालमुपादाय राजद्वारमुपागमत् ॥ २ ॥
किन्नु मे दुष्कृतं कर्म पुरा देहान्तरे कृतम् ।
रुदन् बहुविधा वाचः स्नेहदुःखसमन्वितः ॥
असकृत्पुत्रपुत्रेति वाक्यमेतदुवाच ह ॥ ३ ॥
किन्नु मे दुष्कृतं कर्म पुरा देहान्तरे कृतम् ।
यदहं पुत्रमेकन्तु पश्यामि निधनं गतम् ॥ ४ ॥
अप्राप्तयौवनं बालं पञ्चवर्षसहस्रकम् ।
अकाले कालमापन्नं मम दुःखाय पुत्रक ! ॥ ५ ॥

अथ मृतबालकब्राह्मणस्य राजद्वारि विलापः । प्रस्थाप्येति । भ्रातृभ्यां लक्ष्मणभरताभ्याम् ॥ १ ॥

कतिपयाहस्सु । गतेष्विति शेषः ॥ २ ॥

स्नेहेन पुत्रस्नेहेन तन्मरणाद्दुःखेन च समन्वितः ॥ ३ ॥

यद्यस्मान्निधनं गतं त्वां पश्यामि अतो मे मया किं दुष्कृतं कृतम् ॥४॥

किञ्च । हे पुत्रक! अप्राप्तयौवनं मम दुःखाय अकाले कालमापन्नं

अल्पैरहोभिर्निधनं गमिष्यामि न संशयः।
अहञ्च जननी चैव तव शोकेन पुत्रक! ॥ ६ ॥
न स्मराम्यनृतं ह्युक्तं न च हिंसां स्मराम्यहम्।
सर्वेषां प्राणिनां पापं न स्मरामि कदाचन ॥ ७ ॥
केनाद्य दुष्कृतेनायं बाल एव ममात्मजः।
अकृत्वा पितृकार्य्याणि गतो वैवस्वतक्षयम् ॥ ८ ॥
नेदृशं दृष्टपूर्वं मे श्रुतं वा घोरदर्शनम्।
मृत्युरप्राप्तकालानां रामस्य विषये ह्ययम् ॥ ९ ॥
रामस्य दुष्कृतं किञ्चिन्महदस्ति न संशयः।

पश्यामीत्यनुषङ्गः। पञ्चवर्षसहस्रकम्। वर्षशब्दोऽत्र दिनपरः। सहस्र-संवत्सरं सत्रमुपासीतेतिवत्। तेन षोड़शवर्षमित्यर्थ इत्येके। तेन किञ्चिन्न्यूनचतुर्दशवर्षमित्यर्थ इत्यन्ये ॥ ५ ॥

तव शोकेनाहं तव जननी च निधनं गमिष्यामि ॥ ६ ॥

अस्य मरणे मत्कृतं किञ्चिन्न कारणमित्याह,—नेति। सर्वेषां प्राणिनां तद्विषयमनृतहिंसातिरिक्तमपि पापं मनोवाक्कायैरनिष्टाचरणं स्वकृतं न स्मरामि। अकृतत्वादेव। सर्वेषां प्राणिनां प्राणं न कदाचन विद्यते इति पाठे सर्वेषां प्राणिनां प्राणमुद्दिश्य मया कृतहिंसां न स्मरामि। अतो मम कदाचन जन्मान्तरेऽपि पापं न विद्यते। जन्मान्तरे तत्करणे संस्कारेणैतज्जन्मन्यपि तत्र प्रवृत्तिः स्यादिति भावः ॥ ७ ॥

पितृकार्य्याणि श्राद्धादीनि ॥ ८ ॥

रामस्य विषये देशे ॥ ९ ॥

यथा हि विषयस्थानां बालानां मृत्युरागतः ॥ १० ॥
न ह्यन्यविषयस्थानां बालानां मृत्युतो भयम्।
स राजन्! जीवयस्वैनं बालं मृत्युवशङ्गतम् ॥ ११ ॥
राजद्वारि मरिष्यामि पत्न्या सार्धमनाथवत्।
ब्रह्महत्यां ततो राम! समुपेत्य सुखी भव ॥ १२ ॥
भ्रातृभिः सहितो राजन्! दीर्घमायुरवाप्स्यसि।
उषिताः स्म सुखं राज्ये तवास्मिन् सुमहाबल! ॥ १३ ॥
इदन्तु पतितं तस्मात् तव राम! वशे स्थितान्।
कालस्य वशमापन्नाः स्वल्पं हि न हि नः सुखम् ॥ १४ ॥
सम्प्रत्यनाथो विषय इक्ष्वाकूणां महात्मनाम्।
रामं नाथमिहासाद्य बालान्तकरणं ध्रुवम् ॥ १५ ॥
राजदोषैर्विपद्यन्ते प्रजा ह्यविधिपालिताः।
असद्वृत्ते हि नृपतावकाले म्रियते जनः ॥ १६ ॥

तस्माद्राजदोषादेवेदं बालमरणमित्याह,—रामस्येति ॥ १० ॥

स राजन्नित्याभिमुख्येन वादः ॥ ११ ॥

सुखीभवेति व्यङ्ग्योक्तिः ॥ १२ ॥

उषिताः स्म। एतावत्कालमिति शेषः ॥ १३ ॥

इदं बालकमरणाद्दुःखम्। हि यत इदानीं वयं कालस्य वशमापन्नाः। हि तस्मात् तव राज्ये नोऽस्माकं स्वल्पमपि सुखं न हि ॥ १४ ॥

इदानीमिक्ष्वाकूणामयं विषयो देशो रामं बालानामन्तं करोति तादृशं नाथमासाद्य प्राप्यानाथो जातोऽरक्षकसुराजरहितो जातः ॥ १५ ॥

यदा पुरेष्वयुक्तानि जना जनपदेषु च।
कुर्वते न च रक्षास्ति तदा कालकृतं भयम् ॥ १७ ॥
सुव्यक्तं राजदोषो हि भविष्यति न संशयः।
पुरे जनपदे चापि तथा बालवधो ह्ययम् ॥ १८ ॥
एवं बहुविधैर्वाक्यैरुपरुध्य मुहुर्मुहुः।
राजानं दुःखसन्तप्तः सुतं तमुपगूहति ॥ १९ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
त्रिसप्ततितमः सर्गः ॥ ७३ ॥

कथमेवं वादस्तत्राह,—राजदोषैरिति। असद्वृत्ते धर्मेण प्रजापालनहीने ॥ १६ ॥

अयुक्तानि अनुचितकार्याणि। न च रक्षास्ति अनुचितकार्यनिवारणाच्च यदा नास्ति तदैव कालकृतम् अकालमृत्युकृतं भयम्। नान्यथेत्यर्थः ॥ १७ ॥

तस्मान्मत्पुत्रमरणं राजदोषहेतुकमेवेत्याह,—सुव्यक्तमिति। पुरे जनपदे वानुचितकार्यप्रवृत्तदण्डाभावरूपो राजदोषजातो भविष्यति तथा तस्मादेवायं बालवधः। तथाऽकालवधो ह्ययमिति पाठान्तरम् ॥ १८ ॥

राजानमुपरुध्येत्यन्वयः ॥ १९ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

## चतुःसप्ततितमः सर्गः ।



तथा तु करुणं तस्य द्विजस्य परिदेवनम् ।
शुश्राव राघवः सर्वं दुःखशोकसमन्वितम् ॥ १ ॥
स दुःखेन च सन्तप्तो मन्त्रिणस्तानुपाह्वयत् ।
वसिष्ठं वामदेवञ्च भ्रातॄंश्च सहनैगमान् ॥ २ ॥
ततो द्विजा वसिष्ठेन सार्धमष्टौ प्रवेशिताः ।
राजानं देवसङ्काशं वर्द्धस्वेति ततोऽब्रुवन् ॥ ३ ॥
मार्कण्डेयोऽथ मौद्गल्यो वामदेवश्च काश्यपः ।
कात्यायनोथ जाबालिर्गौतमो नारदस्तथा ॥ ४ ॥
एते द्विजर्षभाः सर्वे आसनेषूपवेशिताः ।
महर्षीन् समनुप्राप्तानभिवाद्य कृताञ्जलिः ॥ ५ ॥
मन्त्रिणो नैगमाश्चैव यथार्हमनुकूलिताः ।
तेषां समुपविष्टानां सर्वेषां दीप्ततेजसाम् ॥ ६ ॥
राघवः सर्वमाचष्टे द्विजोऽयमुपरोधति ।

अथ महर्षीनाहूय तान् प्रति बालमरणनिमित्तप्रश्ने तेभ्यस्तन्निमित्तज्ञानलाभः । सर्वं परिदेवनं दुःखमात्मनो वार्धक्यादिनिमित्तम् । शोकः पुत्रवियोगजस्ताभ्यां समन्वितं शुश्राव ॥ १ ॥

नैगमाः पौरास्तत्सहितान् ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

तस्य तद्वचनं श्रुत्वा राज्ञो दीनस्य नारदः ॥ ७ ॥
प्रत्युवाच शुभं वाक्यमृषीणां सन्निधौ स्वयम्।
शृणु राजन्यथाऽकाले प्राप्तो बालस्य संक्षयः ॥ ८ ॥
श्रुत्वा कर्त्तव्यतां राजन्! कुरुष्व रघुनन्दन!।
पुरा कृतयुगे राजन्! ब्राह्मणा वै तपस्विनः ॥ ९ ॥
अब्राह्मणस्तदा राजन्न तपस्वी कथञ्चन।
तस्मिन् युगे प्रज्वलिते ब्रह्मभूते त्वनावृते ॥ १० ॥
अमृत्यवस्तदा सर्वे जज्ञिरे दीर्घदर्शिनः।
ततस्त्रेतायुगं नाम मानवानां वपुष्मताम् ॥ ११ ॥

अनुकूलिताः कृतशिष्टाचाराः। अयं द्विज उपरोधति उपरुणद्धि। राजद्वारमिति शेषः। सर्वं राजदोषमूलमेव बालमरणं वदतीत्यादिकस्य सर्वमाचष्टे ॥ ६ ॥ ७ ॥

हे राजन्नयं बालस्य संक्षयो यथा येन प्रकारेण अकाले संप्राप्तस्तच्छृणु। ततस्तस्य प्रतिक्रियायाः कर्त्तव्यतामनुष्ठेयांशं श्रुत्वा तत् कुरुष्व ॥ ८ ॥

तदेव वक्तुं पीठिकामाह,—पुरेति। तपस्विनः अनशनप्रभृत्यनेककायक्लेशलक्षणतपोयुक्ता ब्राह्मणा एव कृतयुगेऽभवन् ॥ ९ ॥

अब्राह्मणस्तदतिरिक्तः। कथमपि तपस्वी न। कृते इति शेषः। किन्तु नित्यनैमित्तिककर्ममात्रपर एव। तस्मिन्युगे प्रज्वलिते तपसा दीप्ते। ब्रह्मभूते ब्राह्मणवर्णप्रधाने। अनावृते अज्ञानावरणरहितजने। युगे कृतयुगे ॥ १० ॥

क्षत्रिया यत्र जायन्ते पूर्वेण तपसान्विताः ।
वीर्य्येण तपसा चैव तेऽधिकाः पूर्वजन्मनि ॥
मानवा ये महात्मानस्तत्र त्रेतायुगे युगे ॥ १२ ॥
ब्रह्मक्षत्रञ्च तत्सर्वं यत्पूर्वमवरञ्च यत् ।
युगयोरुभयोरासीत्समवीर्य्यसमन्वितम् ॥ १३ ॥

सर्वे एव तदाऽमृत्यवोऽजज्ञिरे । मरणदुःखहेतुधर्मलेशस्याप्यभावात् । अनावृतज्ञानत्वाच्च दीर्घदर्शिनः अतीतानागतादि सकलज्ञानवन्तः । ततः कृतयुगसमाप्त्यनन्तरम् । वपुष्मतां शिथिलब्रह्मात्मबुद्धितया किञ्चिद्देहात्मबुद्धिमतां मानवानां त्रेतायुगं नाम भवति ॥ ११ ॥

यत्र त्रेतायुगे पूर्वेण पूर्वयुगे पूर्ववर्णब्राह्मणानुष्ठितेन तपसान्विताः क्षत्रिया जायन्ते तादृशं त्रेतायुगं नामाभूदिति सम्बन्धः । कृतयुग ब्राह्मणमात्रनिष्ठन्तपस्त्रेतायां क्षत्रियसाधारणमभूदिति भावः । त्रयीविहितत्रेताग्निसाध्यकर्मसु प्रवृत्त्या युगस्य त्रेतासंज्ञेति पुराणविदः । किञ्च तत्र त्रेतायुगे त्रेतायुगाख्ये युगे महात्मानस्तपोयुक्ता ये मानवा ब्राह्मणाः क्षत्रिया वा सन्ति तदपेक्षया पूर्वस्मिन् जन्मनि पूर्वजाते कृतयुगे तपोभाजो ये मानवास्ते वीर्य्येण प्रभावेण तपसा तपोतिशयेनाधिका उत्कृष्टाः ॥ १२ ॥

अथ त्रेताकालिकक्षत्रियाणां कृतकालिकब्राह्मणेभ्यो न्यूनता त्रेताकालिकब्राह्मणैस्तु समतेत्याह,—ब्रह्मक्षत्रमिति । उभयोर्युगयोर्मध्ये कृतयुगे ब्रह्मपूर्वं तपोवीर्य्याभ्यामुत्कृष्टम् । क्षत्रञ्चावरञ्च ताभ्यां तपोवीर्य्याभ्यां न्यूनमासीत् तत्सर्वं ब्रह्मक्षत्ररूपमुभयं त्रेतायां समवीर्य्यं सम-

अपश्यन्तस्तु ते सर्वे विशेषमधिकं ततः ।
स्थापनं चक्रिरे तत्र चातुर्वर्ण्यस्य सम्मतम् ॥ १४ ॥
तस्मिन् युगे प्रज्वलिते धर्मभूते ह्यनावृते ।
अधर्मः पादमेकन्तु पातयत् पृथिवीतले ॥ १५ ॥
अधर्मेण हि संयुक्तस्तेजो मन्दं भविष्यति ॥ १६ ॥

न्वितमासीत् । कृते क्षत्रियाणां तपस्यनधिकारात्तद्युगीयेभ्यो ब्राह्मणेभ्यस्तेषां न्यूनता । त्रेतायान्तूभयोरपि तपोऽधिकाराद्रुभावपि तपोवीर्य्याभ्यां समाविति भावः । अर्थात् कृतयुगब्राह्मणेभ्यस्त्रेतायुगब्राह्मणानामपि न्यूनत्वमुक्तम् ॥ १३ ॥

अतस्त्रेतायुगे ब्राह्मणक्षत्रिययोस्तपोविशेषेण तयोर्मध्ये ब्राह्मणस्य ततः क्षत्रादधिकं विशेषमपश्यन्तो मन्वादयः सर्वे तात्कालिका धर्मप्रवर्त्तनाधिकृताः । चातुर्वर्ण्यस्य । स्वार्थेऽण्यञ् । ब्राह्मणादिचतुर्वर्णानां सम्मतमनादितः सर्वलोकसम्मतं स्थापनं वर्णानामाचारभेदकस्थापनं शास्त्रं तत्र त्रेतायुगे चक्रिरे । कृते तु विनैव स्थापनं स्वयमेव सर्वे वर्णाः स्व स्व धर्मरता इति भावः ॥ १४ ॥

तस्मिन् त्रेतायुगे धर्मभूते वर्णाश्रमयुक्तयागादिधर्मबहुलेऽनावृते धर्माचरणप्रतिबन्धकपापरहिते । प्रज्वलिते तेनैव धर्मेण प्रदीप्ते सति । अधर्मो हिंसानृतासन्तोषविग्रहरूपचतुष्पात् । पृथिवीतले पादश्चतुर्थांशं पातयत् अपातयत् प्रवर्त्तयामासेत्यर्थः । एवञ्च त्रेतापुरुषाः कृतयुगपुरुषा इव निर्मलज्ञानरहितत्वाद्ब्रह्मज्ञानाधिकारशून्या अग्निहोत्रादिधर्म्मे एव प्रवृत्ताः । ज्ञानाभावादेव चाधर्मोऽपि पादेन प्रवृत्त इति भावः ॥ १५ ॥

आमिषं यच्च पूर्वेषां राजसञ्च मलं भृशम् ।
अनृतं नाम तद्भूतं चिप्तेन पृथिवीतले ॥ १७ ॥
अनृतं पातयित्वा तु पादमेकमधर्मतः ।
ततः प्रादुष्कृतं पूर्वमायुषः परिनिष्ठितम् ॥ १८ ॥

अतएव ते कृतयुगपुरुषेभ्यः चीणा इत्याह । अधर्मेणेति । यतस्तेन संयुक्तो लोको वर्णाश्रमाधिकृतो भवति । ततस्तस्य तेजो मन्दं भविष्यति ॥ १६ ॥

एतच्च तेषां कृष्यादिकमेव जीवनोपाय इत्याहामिषमिति । पूर्वेषां कृतयुगस्थानां भृशमत्यर्थं मलं मलवत् त्याज्यं यद्राजसं रजोगुणमूलमामिषं जीवनोपायरूपं कृष्याद्यासीत् तदनृतं नाम । सेवा श्ववृत्तिरनृतं कृषिरिति कोशात् । तद्रूपेण पादेन पृथिवीतले भूतं प्राप्तमधर्मेणेति शेषः । कृतेऽत्वकृष्टपच्याहारा इति भाव इति तीर्थः । कतकस्तु । अपि च पूर्वेषां स्वस्व वंश्यानां यचामिषं पुरदेशाद्रष्टस्वेत्रादि तदुद्दिश्य राजसं रजोगुणमूलं देषलचणं भवति त्रेतायामिति शेषः । काम एष क्रोध एष रजोगुणसमुद्भव इत्युक्तेः । को नामाधर्मस्य पादस्तत्राहानृतमिति । येन पृथिवीचिप्तेन पादेन तत्प्रागुक्तं देषरूपं मलं भूतं तदनृतं नाम । देहात्मताधीरूपमिथ्याज्ञानात्मकः सर्वानर्थमूलोऽहंकारमयः प्रथमः पाद इत्यर्थ इत्याह ॥ १७ ॥

तत्पादपाते किं भवतीत्याह । अनृतमिति । उक्तरूपमेकमनृतपादं पातयित्वा निचिप्याधर्मतोऽधर्मेण पूर्वयुगेऽपरिमितस्यायुषः परिनिष्ठितं परिमाणं प्रादुष्कृतम् । तेन कृतयुगपुरुषापेचया त्रेतापुरुषाणां प्रभावादिन्यूनता आयुर्न्यूनता चोक्ता ॥ १८ ॥

पातिते त्वनृते तस्मिन्नधर्मेण महीतले।
शुभान्येवाचरल्लोकः सत्यधर्मपरायणः॥ १९॥
त्रेतायुगे च वर्त्तन्ते ब्राह्मणाः क्षत्रियाश्च ये।
ततोऽतप्यन्त ते सर्वे शुश्रूषामपरे जनाः॥ २०॥
स्वधर्मः परमस्तेषां वैश्यशूद्रं तदागमत्।
पूजाञ्च सर्ववर्णानां शूद्राश्चक्रुर्विशेषतः॥ २१॥
एतस्मिन्नन्तरे तेषामधर्मे चानृते च ह।
ततः पूर्वे पुनर्ह्रासमगमन् नृपसत्तम!॥ २२॥

अथायुःक्षयकारकाधर्मपादपरिहारहेतुव्यापारोपदेशः। पातिते-त्विति। अधर्मेण तस्मिन्ननृते उक्तलक्षणान्तपादे महीतले पातिते सति तत्प्रयुक्तायुःक्षयपरिहाराय शुभान्येव यज्ञदानतपोरूपपुण्यकर्माण्येवाचरन् लोको धर्माधिकारी तद्‌बलात् सत्यधर्मपरायणो भवति। अनेन त्रेतायां यज्ञाद्यनुष्ठानेन शुद्धचित्तस्य झटिति देहात्माभिमान-निवृत्तिरित्युक्तम्॥ १९॥

उक्तमेव स्पष्टीकरोति। त्रेतेति। ब्राह्मणाः क्षत्रियाश्च ये तएव यज्ञादिशुद्धचित्तास्तपोऽतप्यन्त। अपरे सर्वे विट्शूद्रसङ्करविशेषाः। ब्राह्मणक्षत्रियशुश्रूषाश्चक्रुरिति शेषः॥ २०॥

अथ तेषां मध्ये वैश्यशूद्रम्। समाहारद्वन्द्वः। शुश्रूषारूपः परमः स्वधर्म उत्कृष्टः स्वधर्मो भूत्वाऽऽगमत्प्रापोऽभवदेवाह। पूजाञ्चेति। सर्ववर्णानां त्रैवर्णिकानाम्। एवञ्च वैश्यस्य कृष्यादिकरणेन द्विवर्णसेवाधर्म इत्यर्थादुक्तमिति बोध्यम्॥ २१॥

ततः पादमधर्मस्य द्वितीयमवतारयत् ।
ततो द्वापरसंख्या सा युगस्य समजायत ॥ २३ ॥
तस्मिन् द्वापरसंख्ये तु वर्त्तमाने युगक्षये ।
अधर्मश्चानृतञ्चैव ववृधे पुरुषर्षभ ! ॥ २४ ॥
अस्मिन् द्वापरसंख्याने तपो वैश्यान् समाविशत् ।
त्रिभ्यो युगेभ्यस्त्रीन् वर्णान् क्रमाद्वै तप आविशत् ॥ २५ ॥
त्रिभ्यो युगेभ्यस्त्रीन् वर्णान् धर्मश्च परिनिष्ठितः ।

अथ द्वापरप्रवृत्तिं दर्शयितुमाह । एतस्मिन्नन्तरे त्रेतायुगावसानकाले । तेषां वैश्यशूद्राणामन्ततरूपेऽधर्मपादे सम्यक् प्राप्ते सतीति शेषः । ततः पूर्वं ब्राह्मणाः क्षत्रियाः क्लासमगमन् प्राप्ताः । त्रासमुपागमन्निति पाठे सेवकदोषस्य स्वामिप्राप्यत्वाद्राष्ट्रदोषाद्भीता बभूवुः ॥ २२ ॥

ततस्तदनन्तरमधर्मस्य द्वितीयं पादं ममतारूपमधर्मोऽवतारयत् । ततो द्वितीयपादावतारणादेव तृतीययुगस्य द्वापरसंख्या द्वापर इति नाम । पृषोदरादित्वात् साधुः । २३ ।

तत्कालिकलोकस्थितिमाह । तस्मिन्निति । द्वापरसंख्ये द्वापराख्ये यमस्याधर्मपादद्वयस्य क्षये आश्रयभूते युगे वर्त्तमाने तद्रूपाश्रयं प्राप्याधर्मोविच्छितावित्क्रमरूपः अन्तञ्च ववृधेऽहम्भावममतयोराधिक्यात । तेषां तु अधर्मवृद्धिरत्याल्पायुष्ट्वम् । अन्तवृद्धिः प्रयासबाहुल्येन कृषिसाफल्यमित्याह । २४ ।

तद्वृद्धिफलमाह । वैश्यांस्तपः समाविशत् । एवं त्रिभ्यो युगेभ्यः । समप्यर्थे चतुर्थी । त्रिषु युगेषु । २५ ॥

न शूद्रो लभते धर्मं युगतस्तु नरर्षभ ! ॥ २६ ॥
हीनवर्णो नृपश्रेष्ठ ! तप्यते सुमहत्तपः।
भविष्यच्छूद्रयोन्यां हि तपश्चर्य्या कलौ युगे ॥ २७ ॥
अधर्मः परमो राजन् ! द्वापरे शूद्रजन्मनः।
स वै विषयपर्य्यन्ते तव राजन् ! महातपाः ॥ २८ ॥
अद्य तप्यति दुर्बुद्धिस्तेन बालवधो ह्ययम्।
यो ह्यधर्ममकार्य्यं वा विषये पार्थिवस्य तु ॥ २९ ॥
करोति चाश्रीमूलं तत् पुरे वा दुर्मतिर्नरः।

तथा त्रिषु युगेषु त्रीन् वर्णानवलम्ब्य धर्मस्तपोरूपः परिनिष्ठितः प्रतिष्ठितोऽभूत्। धर्मं तपोलक्षणं शूद्रो युगतो युगत्रयेऽपि न लभते ॥ २६ ॥

किन्तु हीनवर्णः शूद्रः कदाचित् सुमहत्तपस्तप्यते। कदा तत्राह—भविष्यदिति। भविष्यत्कालवर्त्तिन्यां शूद्रयोन्यां शूद्रजातौ कलौ युगे तपश्चर्य्या भविष्यति नत्वेतत् कालिके इति भावः। २७ ॥

यदेवमतो द्वापरेऽपि शूद्रजन्मनस्तपोधारणं परमोऽधर्मः किमुताद्य त्रेतायाम्। स शूद्रो वै निश्चयेन तव विषयपर्य्यन्ते देशसमीपे महातपा भूत्वा दुर्बुद्धिरद्य तपति। तेनैव हेतुनायं बालवधो जातः ॥ २८ ॥

उक्तमेव दार्ढ्याय पुनराह। यो हीति। यो हि दुर्मतिः पार्थिवस्य विषये देशे पुरे वाऽधर्मं विहितधर्मलोपमकार्य्यं निषिद्धकृत्यं वा करोति तदेवपुरे राज्ये वाऽश्रीमूलमलक्ष्मीमूलं भवति। तदनिवा-

क्षिप्रञ्च नरकं याति स च राजा न संशयः ॥ ३० ॥
अधीतस्य च तप्तस्य कर्मणः सुकृतस्य च ।
षष्ठं भजति भागन्तु प्रजा धर्मेण पालयन् ॥ ३१ ॥
षड्भागस्य च भोक्तासौ रक्षते न प्रजाः कथम् ।
स त्वं पुरुषशार्दूल ! मार्गस्व विषयं स्वकम् ॥ ३२ ॥
दुष्कृतं यत्र पश्येथास्तत्र यत्नं समाचर ।
एवञ्चेद्धर्मवृद्धिश्च नृणाञ्चायुर्विवर्द्धनम् ।
भविष्यति नरश्रेष्ठ ! बालस्यास्य च जीवितम् ॥ ३३ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
चतुःसप्ततितमः सर्गः ॥ ७४ ॥

रयन् स राजा क्षिप्रं नरकं याति इहामुत्र च परमकश्मलं प्राप्नोति नात्र संशयः ॥ २९ । ३० । ३१ ॥

नन्वन्यदीयाधर्मेण कथं राज्ञः कश्मलप्राप्तिरत आह । षड्भागस्येति । रक्षार्थं धनधान्यपुण्यादिषड्भागवेतनभोक्ता कथं न रक्षेत् । न्यायेन रक्षायां धर्मादिषड्भागप्राप्तिवदरक्षणेऽधर्मभागप्राप्तिरपीति भावः । अतः सत्वमिति ॥ ३२ ॥

यत्नं निवारणयत्नम् ॥ ३३ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

## पञ्चसप्ततितमः सर्गः ।



नारदस्य तु तद्वाक्यं श्रुत्वाऽमृतमयं यथा ।
प्रहर्षमतुलं लेभे लक्ष्मणञ्चेदमब्रवीत् ॥ १ ॥
गच्छ सौम्य ! द्विजश्रेष्ठं समाश्वासय सुव्रत ! ।
बालस्य च शरीरं तत्तैलद्रोण्यां निधापय ॥ २ ॥
गन्धैश्च परमोदारैस्तैलैश्च सुसुगन्धिभिः ।
यथा न क्षीयते बालस्तथा सौम्य ! विधीयताम् ॥ ३ ॥
यथा शरीरो बालस्य गुप्तः सन् क्लिष्टकर्मणः ।
विपत्तिः परिभेदो वा न भवेच्च तथा कुरु ॥ ४ ॥
एवं सन्दिश्य काकुत्स्थो लक्ष्मणं शुभलक्षणम् ।
मनसा पुष्पकं दध्यावागच्छेति महायशाः ॥ ५ ॥

अथ शूद्रतपस्विनोऽन्विष्य दर्शनम् । नारदस्येति ॥ १ ॥ २ ॥ ३ ॥ यथा न क्षीयते तथा विधीयतामित्युक्तमेव विवृणोति । यथेति । क्लिष्टकर्मणः शुभाचारस्य बालस्य शरीरः । अर्द्धर्चादिः । गुप्तः सन् यथा न क्षीयते तथा विधीयतामिति पूर्वेणान्वयः । विपत्तिः

इङ्गितं स तु विज्ञाय पुष्पको हेमभूषितः ।
आजगाम मुहूर्त्तेन समीपे राघवस्य वै ॥ ६ ॥
सोऽब्रवीत् प्रणतो भूत्वा अयमस्मि नराधिप ! ।
वश्यस्तव महाबाहो ! किङ्करः समुपस्थितः ॥ ७ ॥
भाषितं रुचिरं श्रुत्वा पुष्पकस्य नराधिपः ।
अभिवाद्य महर्षीन् स विमानं सोऽध्यरोहत ॥ ८ ॥
धनुर्गृहीत्वा तूणी च खड्गञ्च रुचिरप्रभम् ।
निक्षिप्य नगरे चैतौ सौमित्रिभरतावुभौ ॥ ९ ॥
प्रायात् प्रतीचीं हरितं विचिन्वंश्च ततस्ततः ।
उत्तरामगमच्छ्रीमान् दिशं हिमवतावृताम् ॥ १० ॥
अपश्यमानस्तत्रापि स्वल्पमप्यथ दुष्कृतम् ।
पूर्वामपि दिशं सर्वामथोऽपश्यन्नराधिपः ॥ ११ ॥
प्रविशुद्धसमाचारामादर्शतलनिर्मलाम् ।
पुष्पकस्थो महाबाहुस्तदापश्यन्नराधिपः ॥ १२ ॥

स्वरूपनाशः । शरीरस्येति शेषः । परिभेदः सन्धिबन्धकेशादिविश्लेषजो रूपभेदश्च । तदुभयं यथा न भवति तथा कुरु ॥ ४ ॥ ५ ॥

पुष्पकस्तदधिष्ठातृचेतनः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

हरितं दिशं विचिन्वन् शूद्रतपस्विनमिति शेषः ॥ १० ॥

अपश्यमानः अपश्यन् ॥ ११ ॥ १२ ॥

दक्षिणान्दिशमाक्रामत्ततो राजर्षिनन्दनः ।
शैवलस्योत्तरे पार्श्वे ददर्श सुमहत्सरः ॥ १३ ॥
तस्मिन् सरसि तप्यन्तं तापसं सुमहत्तपः ।
ददर्श राघवः श्रीमान् लम्बमानमधोमुखम् ॥ १४ ॥
राघवस्तमुपागम्य तप्यन्तं तप उत्तमम् ।
उवाच च नृपो वाक्यं धन्यस्त्वमसि सुव्रत ! ॥ १५ ॥
कस्यां योन्यां तपोवृद्ध वर्त्तसे दृढ़विक्रम ! ।
कौतूहलात्त्वां पृच्छामि रामो दाशरथिर्ह्यहम् ॥ १६ ॥
कोऽर्थो मनीषितस्तुभ्यं स्वर्गलाभो परोऽथवा ।
वराश्रयो यदर्थं त्वं तपस्यन्यैः सुदुश्चरम् ॥ १७ ॥
यमाश्रित्य तपस्तप्तं श्रोतुमिच्छामि तापस ! ।
ब्राह्मणो वासि भद्रन्ते क्षत्रियो वासि दुर्जयः ।
वैश्यस्तृतीयो वर्णो वा शूद्रो वा सत्यवाक् भव ॥ १८ ॥
इत्येवमुक्तः स नराधिपेन
अवाक्शिरा दाशरथाय तस्मै ।

शैवलस्य शैवलाख्यस्य विन्ध्यसमीपदक्षिणभागवर्त्तिगिरेः ॥ १३ ॥
॥ १४ ॥ १५ ॥ १६ ॥
कोऽर्थ इति । तुभ्यं तव वराश्रयः प्रीतदेवतावरलभ्यो मनोषितो-ऽभीष्टोऽर्थः कः स्वर्गलाभः परोऽन्यो वा । यदर्थं तपसि ॥ १७ ॥

उवाच आर्तिं नृपपुङ्गवाय
यत् कारणञ्चैव तपप्रयत्नः ॥ १९ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

सत्यवाक् भव सत्यं वद ॥ १८ ॥ १९ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

---

## षट्सप्ततितमः सर्गः।



तस्य तद्वचनं श्रुत्वा रामस्याक्लिष्टकर्मणः।
अवाक्शिरास्तथाभूतो वाक्यमेतदुवाच ह ॥ १ ॥
शूद्रयोन्यां प्रजातोऽस्मि तप उग्रं समास्थितः।
देवत्वं प्रार्थये राम ! सशरीरो महायशः ॥ २ ॥
न मिथ्याहं वदे राम ! देवलोकजिगीषया।
शूद्रं मां विद्धि काकुत्स्थ ! शम्बूको नाम नामतः ॥ ३ ॥
भाषतस्तस्य शूद्रस्य खड्गं सुरुचिरप्रभम्।
निष्कृष्य कोशाद्विमलं शिरश्चिच्छेद राघवः ॥ ४ ॥
तस्मिन् शूद्रे हते देवाः सेन्द्राः साग्निपुरोगमाः।
साधु साध्विति काकुत्स्थं ते प्रशंसुर्मुहुर्मुहुः ॥ ५ ॥
पुष्पवृष्टिर्महत्यासीद्दिव्यानां सुसुगन्धिनाम्।

अथ शूद्रशिरश्छेदेन बालोज्जीवनम्। तस्येति ॥ १ ॥ २ ॥
मिथ्यावचनाभावे हेतुर्देवलोकजिगीषया ॥ ३ ॥
तस्य शिर इत्यन्वयः ॥ ४ ॥
अग्निपुरोगमो वायुर्येषां तत्सहिताः ॥ ५ ॥

पुष्पाणां वायुमुक्तानां सर्वतः प्रपपात ह ॥ ६ ॥
सुप्रीतास्त्वाब्रुवन् रामं देवाः सत्यपराक्रमम् ।
सुरकार्य्यमिदं देव ! सुकृतं ते महामते ! ॥ ७ ॥
गृहाण च वरं सौम्य ! यं त्वमिच्छस्यरिन्दम ! ।
स्वर्गभाङ् नहि शूद्रोऽयं त्वत्कृते रघुनन्दन ! ॥ ८ ॥
देवानां भाषितं श्रुत्वा रामः सत्यपराक्रमः ।
उवाच प्राञ्जलिर्वाक्यं सहस्राक्षं पुरन्दरम् ॥ ९ ॥
यदि देवाः प्रसन्ना मे द्विजपुत्रः स जीवतु ।
दिशन्तु वरमेतं मे ईप्सितं परमं मम ॥ १० ॥
ममापचाराद् बालोऽसौ ब्राह्मणस्यैकपुत्रकः ।
अप्राप्तकालः कालेन नीतो वैवस्वतक्षयम् ॥ ११ ॥

पुष्पवृष्टेः प्रपतनम् । दिव्यानामिति । प्रपपात । वृष्टिरिति-शेषः ॥ ६ ॥ ७ ॥

किं नाम सुरकार्यं तत्राह । स्वर्गभागिति । हि यतः शूद्रस्तपसा स्वर्गमर्हः सोऽसौ त्वत्कृते त्वत्कृततपोनिवर्त्तनेन स्वर्गभाक् न जातः अतो देवकार्यं कृतमिति भावः ॥ ८ ॥ ९ ॥

एवं वरं मे दिशन्तु । एतद्वरदानमेव ममेप्सितमित्यन्वयान्न ममेति पुनरुक्तम् ॥ १० ॥

वैवस्वतक्षयं यमसदनम् ॥ ११ ॥

तं जीवयथ भद्रं वो नानृतं कर्त्तुमर्हथ।
द्विजस्य संश्रुतोऽर्थो मे जीवयिष्यामि ते सुतम् ॥ १२ ॥
राघवस्य तु तद्वाक्यं श्रुत्वा विबुधसत्तमाः।
प्रत्यूचू राघवं प्रीता देवाः प्रीतिसमन्वितम् ॥ १३ ॥
निर्वृत्तो भव काकुत्स्थ! सोऽस्मिन्नहनि बालकः।
जीवितं प्राप्तवान् भूयः समेतश्चापि बन्धुभिः ॥ १४ ॥
यस्मिन् मुहूर्त्ते काकुत्स्थ! शूद्रोऽयं विनिपातितः।
तस्मिन् मुहूर्त्ते बालोऽसौ जीवेन समयुज्यत ॥ १५ ॥
स्वस्ति प्राप्नुहि भद्रं ते साधु याम नरर्षभ!।
अगस्त्यस्याश्रमपदं द्रष्टुमिच्छाम राघव! ॥ १६ ॥
तस्य दीक्षा समाप्ता हि ब्रह्मर्षेः सुमहाद्युतेः।
द्वादशं हि गतं वर्षं जलशय्यां समासतः ॥ १७ ॥

ते तव सुतं जीवयिष्यामीत्ययमर्थो मे मया द्विजस्य संश्रुतः प्रतिज्ञातोऽतस्तं जीवयथ। मामनृतं कर्त्तुं मार्हथ ॥ १२ ॥

प्रीतिसमन्वितं युक्तम् ॥ १३ ॥

अस्मिन्नहनि शूद्रशिरश्छेददिवसे। विनापि वरं जीवितं प्राप्तवानित्यर्थः ॥ १४ ॥

उक्तमेवार्थमहःशब्दविवक्षितार्थप्रदर्शनेन प्रपञ्चयन्ति। यस्मिन् मुहूर्त्त इति ॥ १५ ॥

काकुत्स्थ ! तद्गमिष्यामो मुनिं समभिनन्दितुम् ।
त्वञ्चापि गच्छ भद्रन्ते द्रष्टुं तमृषिसत्तमम् ॥ १८ ॥
स तथेति प्रतिज्ञाय देवानां रघुनन्दनः ।
आरुरोह विमानन्तं पुष्पकं हेमभूषितम् ॥ १९ ॥
ततो देवाः प्रयातास्ते विमानैर्बहुविस्तरैः ।
रामोऽप्यनुजगामाशु कुम्भयोनेस्तपोवनम् ॥ २० ॥
दृष्ट्वा तु देवान् सम्प्राप्तानगस्त्यस्तपसां निधिः ।
अर्चयामास धर्मात्मा सर्वांस्तानविशेषतः ॥ २१ ॥
प्रतिगृह्य ततः पूजां सम्पूज्य च महामुनिम् ।
जग्मुस्ते त्रिदशा हृष्टा नाकपृष्ठं सहानुगाः ॥ २२ ॥
गतेषु तेषु काकुत्स्थः पुष्पकादवरुह्य च ।
ततोऽभिवादयामास अगस्त्यमृषिसत्तमम् ॥ २३ ॥
सोऽभिवाद्य महात्मानं ज्वलन्तमिव तेजसा ।
आतिथ्यं परमं प्राप्य निषसाद नराधिपः ॥ २४ ॥
तमुवाच महातेजाः कुम्भयोनिर्महातपाः ।

यामेति लोट् ॥ १६ ॥ १७ ॥ १८ ॥

तथेति प्रतिज्ञाय देवानां देवान् प्रति तथास्त्वित्युक्त्वा इत्यर्थः ॥ १९ ॥ २० ॥

अविशेषतः । अपक्षपातेन इत्यर्थः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

स्वागतं ते नरश्रेष्ठ ! दिष्ट्या प्राप्तोऽसि राघव ! ॥ २५ ॥
त्वं मे बहुमतो राम ! गुणैर्बहुभिरुत्तमैः ।
अतिथिः पूजनीयश्च मम राजन् ! हृदि स्थितः ॥ २६ ॥
सुरा हि कथयन्ति त्वामागतं शूद्रघातिनम् ।
ब्राह्मणस्य तु धर्मेण त्वया जीवापितः सुतः ॥ २७ ॥
उष्यतामिह रजनीं सकाशे मम राघव ! ।
त्वं हि नारायणः श्रीमांस्त्वयि सर्वं प्रतिष्ठितम् ॥ २८ ॥
त्वं प्रभुः सर्वदेवानां पुरुषस्त्वं सनातनः ।
प्रभाते पुष्पकेण त्वं गन्ता स्वपुरमेव हि ॥ २९ ॥
इदञ्चाभरणं सौम्य ! निर्मितं विश्वकर्मणा ।

उत्तमैर्बहुभिर्गुणैस्त्वं बहुमतो बहुमान्यः। अतिथित्वाच्च पूज्यः। विशेषतश्च त्वं मे पूज्य इत्याह। मम हृदि स्थित इति। अन्तर्यामिस्वरूपत्वादिति भावः। अतएव सदास्मरणविषयतयापि हृदि स्थितः अतोऽध्येयत्वाच्च त्वं पूज्यः। यद्वा हृदि स्थितः। तेन स्वस्वरूपत्वमप्युक्तम् ॥ २६ ॥

ब्राह्मणस्य सुत शूद्रहननधर्मेण त्वया जीवापितः जीवनं प्रापितः। पूर्णार्थः ॥ २७ ॥

नारायणः नारस्य जीवसमूहस्य स्थानम्। तदेवाह। त्वयि सर्वमिति ॥ २८ ॥

सनातनः पुरुषो ब्रह्म ॥ २९ ॥

दिव्यं दिव्येन वपुषा दीप्यमानं स्वतेजसा ॥ ३० ॥
प्रतिगृह्णीष्व काकुत्स्थ ! मत्प्रियं कुरु राघव ! ।
दत्तस्य हि पुनर्दाने सुमहत् फलमुच्यते ॥ ३१ ॥
भरणे हि भवान् शक्तः फलानां महतामपि ।
त्वं हि शक्तस्तारयितुं सेन्द्रानपि दिवौकसः ॥ ३२ ॥
तस्मात् प्रदास्ये विधिवत्तत्प्रतीच्छ नराधिप ! ।
अथोवाच महात्मानमिक्ष्वाकूणां महारथः ॥ ३३ ॥

दिव्येन वपुषा सन्निवेशेन दिव्यम् । अतएव स्वतेजसा दीप्यमानम् । आभरणं वलयरूपम् ॥ ३० ॥

ननु क्षत्रियस्य ब्राह्मणाद्द्रव्यग्रहणमनुचितं तत्राह । मत्प्रियं कुर्विति । मत्प्रियार्थमनुचितमपि कार्य्यमित्याशयः । किञ्च राजत्वाद्रिक्षाहत्वतया त्वद्दर्शनस्य ममानुचिततया एतद्ग्रहणे मम प्रियं भवति तव च दोषो नास्ति । भक्तदत्ताङ्गीकारे इव हविषोऽङ्गीकार इव च दोषाभावाच्चेत्याशयः । ननु तव किं प्रियं तत्राह । दत्तस्येति । येन केनापि दत्तस्यानुपभुज्य पुनः सेष्टदेवादिभ्यो दाने महत् फलमुच्यते । सख्यावष्टगुणं पुण्यमिति स्मरणात् । एवञ्च महाफलहेतुत्वात्तुभ्यं तद्दानं मम प्रियमिति भावः ॥ ३१ ॥

नन्वन्यस्मा एव तर्हि देयं तत्राह । भरणे हीति । आभरणस्य धारणे भवानेव शक्तो योग्यः । किञ्च महतामपि फलानां ब्रह्मलोकादीनां दाने च त्वं शक्त इति शेषः । ननु मत्तोऽपि महद्भ्य इन्द्रा-

रामो मतिमतां श्रेष्ठः क्षत्रधर्ममनुस्मरन् ।
प्रतिग्रहोऽयं भगवन्! ब्राह्मणस्याविगर्हितः ॥
क्षत्रियेण कथं विप्र! प्रतिग्राह्यं भवेत्ततः ।
प्रतिग्रहो हि विप्रेन्द्र! क्षत्रियाणां सुगर्हितः ॥
ब्राह्मणेन विशेषेण दत्तं तत् वक्तुमर्हसि ।
एवमुक्तस्तु रामेण प्रत्युवाच महानृषिः ॥
आसन् कृतयुगे राम! ब्रह्मभूते पुरा युगे ।
अपार्थिवाः प्रजाः सर्वाः सुराणान्तु शतक्रतुः ॥
ताः प्रजा देवदेवेशं राजार्थं समुपाद्रवन् ।
सुराणां स्थापितो राजा त्वया देव! शतक्रतुः ॥
प्रयच्छास्मासु लोकेश! पार्थिवं नरपुङ्गवम् ।
यस्मै पूजां प्रयुञ्जाना धूतपापाश्चरेम हि ॥
न वसामो विना राज्ञा एष नो निश्चयः परः ।
ततो ब्रह्मा सुरश्रेष्ठो लोकपालान् सवासवान् ॥
समाहूयाब्रवीत् सर्वांस्तेजोभागान् प्रयच्छत ।
ततो ददुर्लोकपालाः सर्वे भागान् स्वतेजसः ॥
अक्षुपच्च ततो ब्रह्मा यतो जातः क्षुपो नृपः ।
तं ब्रह्मा लोकपालानां समांशैः समयोजयत् ॥
ततो ददौ नृपं तासां प्रजानामीश्वरं क्षुपम् ।
तत्रैन्द्रेण च भागेन महीमाज्ञापयन् नृपः ॥

वारुणेन तु भागेन वपुः पुष्यति पार्थिवः ।
कौवेरेण तु भागेन वित्तपाभां ददौ तदा ॥
यस्तु याम्योऽभवद्भागस्तेन शास्ति स्म स प्रजाः ।
तवैन्द्रेण नरश्रेष्ठ ! भागेन रघुनन्दन ! ॥
प्रतिगृह्णीष्व भद्रन्ते तारणार्थं मम प्रभो ! ।
तद्रामः प्रतिजग्राह मुनेस्तस्य महात्मनः ॥
दिव्यमाभरणं चित्रं प्रदीप्तमिव भास्करम् ।
प्रतिगृह्य ततो रामस्तदाभरणमुत्तमम् ॥
आगमं तस्य दीप्तस्य प्रष्टुमेवोपचक्रमे ।
अत्यद्भुतमिदं दिव्यं वपुषा युक्तमद्भुतम् ॥ ३४ ॥
कथं वा भवता प्राप्तं कुतो वा केन वाहृतम् ।
कौतूहलतया ब्रह्मन् ! पृच्छामि त्वां महायशः ॥ ३५ ॥
आश्चर्य्याणां बहूनां हि निधिः परमको भवान् ।

दिग्भ्यो दीयतां तत्राह । त्वं हीति । ते त्वत्तो न महान्त इति भावः ॥ ३२ ॥ ३३ ॥

किं विषयकमुवाचेत्यत्राहागममिति । प्राप्तिमार्गमित्यर्थः । इदं दिव्यमत्यद्भुतमत्याश्चर्य्यमित्यर्थः । अद्भुतं यथा भवति तथा वपुषा सन्निवेशविशेषेण युक्तम् ॥ ३४ ॥

कथं केन प्रकारेण कुतो हेतोः केन पुरुषेणाहृतं दत्तम् ॥ ३५ ॥

एवं ब्रुवति काकुत्स्थे मुनिर्वाक्यमथाब्रवीत्।
शृणु राम ! यथावृत्तं पुरा त्रेता युगे युगे ॥ २६ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
षट्सप्ततितमः सर्गः ॥ ७६ ॥

पुरा त्रेतायुगे युगे पूर्वतन त्रेतायुगाख्ये युगे ॥ २६ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे षट्सप्ततितमः सर्गः ॥ ७६ ॥

---

## सप्तसप्ततितमः सर्गः ।



पुरा त्रेतायुगे राम ! बभूव बहुविस्तरम् ।
समन्ताद्योजनशतं विमृगं पक्षिवर्जितम् ॥ १ ॥
तस्मिन्निर्मानुषेऽरण्ये कुर्वाणस्तप उत्तमम् ।
अहमाक्रमितुं सौम्य ! तदारण्यमुपागमम् ॥ २ ॥
तस्य रूपमरण्यस्य निर्देष्टुं न शशाक ह ।
फलमूलैः सुखास्वादैर्बहुरूपैश्च काननैः ॥ ३ ॥
तस्यारण्यस्य मध्ये तु सरो योजनमायतम् ।
हंसकारण्डवाकीर्णं चक्रवाकोपशोभितम् ॥ ४ ॥
पद्मोत्पलसमाकीर्णं समतिक्रान्तशैवलम् ।
तदाश्चर्य्यमिवात्यर्थं सुखास्वादमनुत्तमम् ॥ ५ ॥

अथ तत्रागतिकथनम् । पुरेति । पूर्वं चतुर्युगवर्त्तित्रेतायुगे । बहुविस्तरं बहुविस्तारम् । पक्षिवर्जितमरण्यमभूदिति शेषः ॥ १ ॥

तस्मिन्नरण्ये तद्देशे उत्तमं तपः कुर्वाणोऽहं तदारण्यमाक्रमितुमासमन्तात् पर्य्यटनेन ज्ञातुमवगन्तुमुपागममुपगतवानस्मि ॥ २ ॥

तस्य रूपमिति । सुखावहं स्वरूपमित्यर्थः । न शशाक न शक्तवान् । अपरोक्षे लिडार्षः । तदेवाह । फलमूलैरिति ॥ ३ ॥ ४ ॥

अरजस्कं तदाचोभ्य श्रीमत् पक्षिगणायुतम्।
तस्मिन् सरः समीपे तु महदद्भुतमाश्रमम्॥ ६॥
पुराणं पुण्यमत्यर्थं तपस्विजनवर्जितम्।
तत्राहमवसं रात्रिं नैदाघीं पुरुषर्षभ!॥ ७॥
प्रभाते काल्यमुत्थाय सरस्तदुपचक्रमे।
अथापश्यं शवं तत्र सुपुष्टमरजः क्वचित्॥ ८॥
तिष्ठन्तं परया लक्ष्म्या तस्मिंस्तोयाशये नृप!।
तमर्थं चिन्तयानोऽहं मुहूर्त्तं तत्र राघव!॥ ९॥
विष्ठितोऽस्मि सरस्तीरे किं न्विदं स्यादिति प्रभो!।
अथापश्यं मुहूर्त्तात्तु दिव्यमद्भुतदर्शनम्॥ १०॥
विमानं परमोदारं हंसयुक्तं मनोजवम्।
अत्यर्थं स्वर्गिणं तत्र विमाने रघुनन्दन!॥ ११॥
उपास्तेऽप्सरसां वीर! सहस्रं दिव्यभूषणम्।

सुखास्वादं सुखावहप्राशनपानीयवत्॥ ५। ६।

नैदाघीं निदाघसम्बन्धिनीम्॥ ७।

काल्यं प्रातः कर्त्तव्यं स्नानादिकर्मोद्दिश्योत्थाय तत्सरो गन्तुमुपचक्रमे। अपरोक्षे लिडार्षः। अरजः निर्मलम्॥ ८।

लक्ष्म्या उपेतमिति शेषः। तमर्थं चिन्तयानः किमिदं स्यादिति चिन्तयानः। शवः सन्नपि निर्मलो लक्ष्मीयुक्तश्चेति किमिदमिति स्वदृष्टार्थविषयकचिन्तां कुर्वाण इत्यर्थः॥ ९॥ १०।

गायन्ति काश्चिद्रम्याणि वादयन्ति तथा पराः ॥ १२ ॥
मृदङ्गवीणापणवान् नृत्यन्ति च तथापराः ।
अपराश्चन्द्ररश्म्याभैर्हेमदण्डैर्महाधनैः ॥ १३ ॥
दोधूयुर्वदनं तस्य पुण्डरीकनिभेक्षणाः ।
ततः सिंहासनं हित्वा मेरुकूटमिवांशुमान् ॥ १४ ॥
पश्यतो मे तदा राम ! विमानादवरुह्य च ।
तं शवं भक्षयामास स स्वर्गी रघुनन्दन ! ॥ १५ ॥
ततो भुक्त्वा यथाकामं मांसं बहु सुपीवरम् ।
अवतीर्य्य सरः स्वर्गी संस्प्रष्टुमुपचक्रमे ॥ १६ ॥
उपस्पृश्य यथान्यायं स स्वर्गी रघुनन्दन ! ।
आरोढुमुपचक्राम विमानवरमुत्तमम् ॥ १७ ॥
तमहं देवसङ्काशमारोहन्तमुदीक्ष्य वै ।
अथाहमब्रुवं वाक्यं तमेव पुरुषर्षभ ! ॥ १८ ॥
कोऽभवान् देवसङ्काश ! आहारश्च विगर्हितः ।
त्वयेदं भुज्यते सौम्य ! किमर्थं वक्तुमर्हसि ॥ १९ ॥

अत्यर्थम् अतिरूपवत्तमम् ॥ ११ ॥ १२ ॥
चन्द्ररश्म्याभैश्चामरैरिति शेषः ॥ १३ ॥
दोधूयुरिति यङ्लुगन्तस्य ॥ १४ ॥
पश्यतो मे समक्षमिति शेषः ॥ १५ ॥
संस्प्रष्टुं शुद्धाचमनं कर्तुम् ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

कस्य स्यादीदृशो भाव आहारो देवसम्मत !।
आश्चर्यं वर्त्तते सौम्य ! श्रोतुमिच्छामि तत्त्वत: ॥
नाहमौपायिकं मन्ये तव भक्ष्यमिमं प्रवम् ॥ २० ॥

इत्येवमुक्त: स नरेन्द्र नाकी
कौतूहलात् सूनृतया गिरा च।
श्रुत्वा च वाक्यं मम सर्वमेतत्
सर्वं तथा चाकथयन् ममेति ॥ २१ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
सप्तसप्ततितमः सर्गः ॥ ७७ ॥

हे देवसंमत देवतुल्य। ईदृश आहार ईदृशो भावश्च कस्य स्यात् न कस्यापि। अतो हेतोस्त्वयीदं द्वयं दृष्ट्वा आश्चर्यं मे वर्त्तते तस्मात् सर्वं तत्त्वतः श्रोतुमिच्छामि ॥ २० ॥ २१ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे सप्तसप्ततितमः सर्गः ॥ ७७ ॥

# अष्टसप्ततितमः सर्गः ।



श्रुत्वा तु भाषितं वाक्यं मम राम ! शुभाक्षरम् ।
प्राञ्जलिः प्रत्युवाचेदं स स्वर्गी रघुनन्दन ! ॥ १ ॥
शृणु ब्रह्मन् ! पुरावृत्तं ममैतत् सुखदुःखयोः ।
अनतिक्रमणीयञ्च यथा पृच्छसि मां द्विज ! ॥ २ ॥
पुरा वैदर्भको राजा पिता मम महायशाः ।
सुदेव इति विख्यातस्त्रिषु लोकेषु वीर्य्यवान् ॥ ३ ॥
तस्य पुत्रद्वयं ब्रह्मन् ! द्वाभ्यां स्त्रीभ्यामजायत ।
अहं श्वेत इति ख्यातो यवीयान् सुरथोऽभवत् ॥ ४ ॥
ततः पितरि स्वर्याते पौरा मामभ्यषेचयन् ।
तत्राहं कृतवान् राज्यं धर्म्यञ्च सुसमाहितः ॥ ५ ॥
एवं वर्षसहस्राणि समतीतानि सुव्रत ! ।
राज्यं कारयतो ब्रह्मन् ! प्रजा धर्मेण रक्षतः ॥ ६ ॥

श्रुत्वेति ॥ १ ॥

सुखदुःखयोर्दिव्यदेहशवभक्षणनिमित्तकयोः कारणमिति शेषः । अनतिक्रमणीयमेव तत्कारणं यथा पृच्छसि तथा वक्ष्यामि शृणित्विति सम्बन्धः ॥ २ ॥ ३ ॥ ४ ॥

धर्म्यं धर्मादनपेतं यथा तथा कृतवान् ॥ ५ ॥ ६ ॥

सोऽहं निमित्ते कस्मिंश्चिद्विज्ञातायुर्द्विजोत्तम!।
कालधर्मं हृदि न्यस्य ततो वनमुपागमम्॥ ७॥
सोऽहं वनमिदं दुर्गं मृगपक्षिविवर्जितम्।
तपश्चर्त्तुं प्रविष्टोऽस्मि समीपे सरसः शुभे॥ ८॥
भ्रातरं सुरथं राज्ये अभिषिच्य महीपतिम्।
इदं सरः समासाद्य तपस्तप्तं मया चिरम्॥ ९॥
सोऽहं वर्षसहस्राणि तपस्तीर्णि महावने।
तप्त्वा सुदुष्करं प्राप्तो ब्रह्मलोकमनुत्तमम्॥ १०॥
तस्येमे स्वर्गभूतस्य क्षुत्पिपासे द्विजोत्तम!।
बाधेते परमे वीर! ततोऽहं व्यथितेन्द्रियः॥ ११॥
गत्वा त्रिभुवनश्रेष्ठं पितामहमुवाच ह।
भगवन्! ब्रह्मलोकोऽयं क्षुत्पिपासाविवर्जितः॥ १२॥
कस्यायं कर्मणः पाकः क्षुत्पिपासानुगो ह्यहम्।
आहारः कश्च मे देव! तन्मे ब्रूहि पितामह!॥ १३॥
पितामहस्तु मामाह तवाहारः सुदेवज!।

कस्मिंश्चिन्निमित्ते केनचिल्लक्षणेन कालधर्मं मृत्युं हृदि न्यस्य ज्ञात्वा॥ ७। ८॥ ९। १०॥

स्वर्गभूतस्य स्वर्गभूतस्य स्वर्गं ब्रह्मलोकं भूतस्य प्राप्तस्य। ११॥

त्रिभुवनश्रेष्ठं तृतीये भुवने भूरुपदापेक्षया तृतीयब्रह्मलोके श्रेष्ठं हिरण्यगर्भमित्यर्थः। यद्वा त्रिष्वपि भुवनेषु श्रेष्ठमित्यर्थः। १२।

स्वादूनि स्वानि मांसानि तानि भक्षय नित्यशः ॥ १४ ॥
स्वशरीरं त्वया पुष्टं कुर्वता तप उत्तमम् ।
अनुप्तं रोहते श्वेत ! न कदाचिन्महामते ! ॥ १५ ॥
दत्तं न तेऽस्ति सूक्ष्मोऽपि तप एव निषेवसे ।
तेन स्वर्गगतो वत्स ! बाध्यसे क्षुत्पिपासया ॥ १६ ॥
स त्वं सुपुष्टमाहारैः स्वशरीरमनुत्तमम् ।
भक्षयित्वामृतरसं तेन तृप्तिर्भविष्यति ॥ १७ ॥
यदा तु तद्वनं श्वेत ! अगस्त्यः स महानृषिः ।
आगमिष्यति दुर्धर्षस्तदा कृच्छ्राद्विमोक्ष्यते ॥ १८ ॥
स हि तारयितुं सौम्य ! शक्तः सुरगणानपि ।
किं पुनस्त्वां महाबाहो ! क्षुत्पिपासावशं गतम् ॥ १९ ॥
सोऽहं भगवतः श्रुत्वा देवदेवस्य निश्चयम् ।

क्षुत्पिपासेऽनुगे यस्य सः ॥ १३ ॥ १४ ॥

स्वशरीरं त्वया पुष्टं केवलम् ॥ १५ ॥

ते सूक्ष्मः । निकृष्टतयः । अल्पमपि दत्तं दानं ते नास्ति देवपित्रतिथिषु । किन्तु तप एव निषेवसे । असेविष्टेति यावत् । तपो मनस इन्द्रियाणाञ्चैकाग्र्यं मन्मात्रविषयकत्वरूपम् । तादृशतपःफलं ब्रह्मलोकप्राप्तिर्जाता तव । स्वर्गगतः ॥ १६ ॥

तेन मांसभक्षणेन ते तृप्तिः क्षुधादिनिवृत्तिर्भविष्यति ॥ १७ ॥

विमोक्ष्यते विमोचयिष्यत इत्यर्थः ॥ १८ ॥ १९ ॥

आहारं गर्हितं कुर्मि स्वशरीरं द्विजोत्तम ! ॥ २० ॥
बहून् वर्षगणान् ब्रह्मन् ! भुज्यमानमिदं मया।
चयं नाभ्येति ब्रह्मर्षे ! तृप्तिश्चापि ममोत्तमा ॥ २१ ॥
तस्य मे कृच्छ्रभूतस्य कृच्छ्रादस्माद्विमोचय।
अन्येषां न गतिर्ह्यत्र कुम्भयोनिमृते द्विजम् ॥ २२ ॥
इदमाभरणं सौम्य ! धारणार्थं द्विजोत्तम ! ।
प्रतिगृह्णीष्व भद्रं ते प्रसादं कर्त्तुमर्हसि ॥ २३ ॥
इदं तावत् सुवर्णञ्च धनं वस्त्राणि च द्विज ! ।
भक्ष्यं भोज्यञ्च ब्रह्मर्षे ! ददाम्याभरणानि च ॥ २४ ॥
सर्वान् कामान् प्रयच्छामि भोगांश्च मुनिपुङ्गव ! ।
तारणे भगवन्मह्यं प्रसादं कर्त्तुमर्हसि ॥ २५ ॥
तस्याहं स्वर्गिणो वाक्यं श्रुत्वा दुःखसमन्वितम्।

स्वशरीरमेव भगवदाज्ञया नित्योपस्थितमाहारं कुर्मि करोमि ॥ २० ॥
तदेवाह। चयं नाभ्येतीति ॥ २१ ॥

कृच्छ्रभूतस्य कृच्छ्रं प्राप्तस्य। दृग्गोचरो मां कृच्छ्राद्विमोचयेत्यर्थः। ननु कथमहमगस्त्य इति त्वयावगतस्तत्राहान्येषामिति। कुम्भयोनिं द्विजमृते भयादन्येषामत्र निर्मानुषे गतिर्नास्ति अतस्त्वमगस्त्य इति निर्णीतमिति भावः ॥ २२ ॥ २३ ॥

ननु एतद्दानस्यान्नदानत्वाभावात् कथं पुनरेतद्दानेऽपि दुःखमोक्षस्तत्राह। इदमिति। अस्य सर्वदत्वादेतद्दानं सर्वदानात्मकमिति भावः ॥ २४ ॥

तारणायोपजग्राह तदाभरणमुत्तमम् ॥ २६ ॥
मया प्रतिगृहीते तु तस्मिन्नाभरणे शुभे ।
मानुषः पूर्वको देहो राजर्षेर्विननाश ह ॥ २७ ॥
प्रणष्टे तु शरीरेऽसौ राजर्षिः परया मुदा ।
तृप्तः प्रमुदितो राजा जगाम त्रिदिवं शुभम् ॥ २८ ॥
तेनेदं शक्रतुल्येन दिव्यमाभरणं मम ।
तस्मिन्निमित्ते काकुत्स्थ ! दत्तमद्भुतदर्शनम् ॥ २९ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
अष्टसप्ततितमः सर्गः ॥ ७८ ॥

यस्माद्यदिदं प्रयच्छामि तत् सर्वान् कामान् सर्वभोगांश्च प्रयच्छामीति जानीहि । तारणे तारणनिमित्तम् ॥ २५ ॥ २६ ॥

मया प्रतिगृहीते । तत्सुकृतबलादिति शेषः । ननाश ह । पुनर्भक्षणाय नोपस्थितोऽभूदित्यर्थः ॥ २७ ॥

प्रमुदितः क्षुत्पिपासारहिततयाऽतिसन्तोषं प्राप्तः ॥ २८ ॥

तस्मिन्निमित्ते स्वधारणरूपे निमित्ते ॥ २९ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे अष्टसप्ततितमः सर्गः ॥ ७८ ॥

# एकोनाशीतितमः सर्गः ।



तदद्भुततमं वाक्यं श्रुत्वागस्त्यस्य राघवः ।
गौरवाद्विस्मयाच्चैव भूयः प्रष्टुं प्रचक्रमे ॥ १ ॥
भगवंस्तद्वनं घोरं तपस्तप्यति यत्र सः ।
श्वेतो वैदर्भको राजा कथं तदमृगद्विजम् ॥ २ ॥
तद्वनं स कथं राजा शून्यं मनुजवर्जितम् ।
तपश्चर्त्तुं प्रविष्टः सः श्रोतुमिच्छामि तत्त्वतः ॥ ३ ॥
रामस्य वचनं श्रुत्वा कौतूहलसमन्वितम् ।
वाक्यं परमतेजस्वी वक्तुमेवोपचक्रमे ॥ ४ ॥
पुरा कृतयुगे राम ! मनुर्दण्डधरः प्रभुः ।
तस्य पुत्रो महानासीदिक्ष्वाकुः कुलनन्दनः ॥ ५ ॥
तं पुत्रं पूर्वकं राज्ये निक्षिप्य भुवि दुर्जयम् ।
पृथिव्यां राजवंशानां भव कर्त्तेत्युवाच तम् ॥ ६ ॥

अथ रामेण वनस्य निर्जनत्वहेतुप्रश्ने तद्वर्णनम् । तदिति । गौर-
वात् सर्वज्ञः सर्ववक्ता परमगुरुरिति सम्भावनयेत्यर्थः ॥ १ ॥
यत्र स तपस्तप्यति तद्वनं कथममृगद्विजम् ॥ २ ॥
तादृशं तद्वनं तपश्चर्त्तुं चरितुं प्रविष्टः ॥ ३ ॥ ४ ॥

तथैव च प्रतिज्ञातं पितुः पुत्रेण राघव ! ।
ततः परमसन्तुष्टो मनुः पुत्रमुवाच ह ॥ ७ ॥
प्रीतोऽस्मि परमोदार ! कर्त्ता चासि न संशयः ।
दण्डेन च प्रजा रक्ष मा च दण्डमकारणे ॥ ८ ॥
अपराधिषु यो दण्डः पात्यते मानवेषु वै ।
स दण्डो विधिवन्मुक्तः स्वर्गं नयति पार्थिवम् ॥ ९ ॥
तस्माद्दण्डे महाबाहो ! यत्नवान् भव पुत्रक ! ।
धर्मो हि परमो लोके कुर्वतस्ते भविष्यति ॥ १० ॥
इति तं बहु सन्दिश्य मनुः पुत्रं समाधिना ।
जगाम त्रिदिवं हृष्टो ब्रह्मलोकं सनातनम् ॥ ११ ॥
प्रयाते त्रिदिवे तस्मिन्निक्ष्वाकुरमितप्रभः ।
जनयिष्ये कथं पुत्रानिति चिन्तापरोऽभवत् ॥ १२ ॥

दण्डधरो राजा प्रभुः वर्णाश्रमविभागतद्धर्मप्रवर्त्तनाधिकृतः ॥ ॥ ५ ॥ ६ ॥ ७ ॥

दण्डेन क्षत्रियसहजधर्मभूतेन शिक्षणेन। अकारणे च दण्डं मा पातयेति शेषः ॥ ८ ॥

ननु परपीड़ावहो दण्डः कथं कर्त्तुं युक्तस्तत्राह। अपराधिष्विति। विधिवद्यथाशास्त्रम्। यथापराधं मुक्तः। प्रवर्त्तित इत्यर्थः ॥ ९ ॥

कुर्वतः। दण्डमिति शेषः ॥ १० ॥

कर्मभिर्बहुरूपैश्च तैस्तैर्मनुसुतस्तदा।
जनयामास धर्मात्मा शतं देवसुतोपमान्॥ १३॥
तेषामवरजस्तात! सर्वेषां रघुनन्दन!।
मूढश्चाकृतविद्यश्च न शुश्रूषति पूर्वजान्॥ १४॥
नाम तस्य च दण्डेति पिता चक्रेऽल्पतेजसः।
अवश्यं दण्डपतनं शरीरेऽस्य भविष्यति॥ १५॥
अपश्यमानस्तं देशं घोरं पुत्रस्य राघव!।
विन्ध्यशैवलयोर्मध्ये राज्यं प्रादादरिन्दम!॥ १६॥
स दण्डस्तत्र राजाभूद्रम्ये पर्वतरोधसि।
पुरञ्चाप्रतिमं राम! न्यवेशयदनुत्तमम्॥ १७॥
पुरस्य चाकरोन्नाम मधमन्तमिति प्रभो!।
पुरोहितं तूशनसं वरयामास सुव्रतम्॥ १८॥

समाधिना प्रणवानुसन्धानसहितचित्तैकाग्रेण। अतएव ब्रह्मलोकं जगाम॥ ११॥ १२॥

बहुरूपैर्यज्ञदानतपोलक्षणैः॥ १३॥

पूर्वजान् ज्येष्ठान्॥ १४॥

दण्डेति नामकरणं पितुः सर्वज्ञत्वादन्वर्थावसायपूर्वकमित्याह—अवश्यमिति॥ १५॥

घोरं देशमपश्यमानः। दण्डराज्ययोग्यं घोरं देशमपश्यन्नित्यर्थः॥ १६॥

एवं स राजा तद्राज्यमकरोत् सपुरोहितः ।
प्रहृष्टमनुजाकीर्णं देवराजो यथा दिवि ॥ १९ ॥

ततः स राजा मनुजेन्द्रपुत्रः
साधं तेनोशनसा तदानीम् ।
चकार राज्यं सुमहान्महात्मा
शक्रो दिवीवोशनसा समेतः ॥ २० ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
एकोनाशीतितमः सर्गः ॥ ७९ ॥

पर्वतरोधसि पर्वततटप्राये ॥ १७ ॥ १८ ॥ १९ ॥
शक्रोऽत्र बलिः ॥ २० ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे एकोनाशीतितमः सर्गः ॥ ७९ ॥

---

## अशीतितमः सर्गः ।



एतदाख्याय रामाय महर्षिः कुम्भसम्भवः ।
अस्यामेवापरं वाक्यं कथायामुपचक्रमे ॥ १ ॥
ततः स दण्डः काकुत्स्थ ! बहुवर्षगणायुतम् ।
अकरोत्तत्र दान्तात्मा राज्यं निहतकण्टकम् ॥ २ ॥
अथ काले तु कस्मिंश्चिद्राजा भार्गवमाश्रमम् ।
रमणीयमुपाक्रामच्चैत्रे मासि मनोरमे ॥ ३ ॥
तत्र भार्गवकन्यां स रूपेणाप्रतिमां भुवि ।
विचरन्तीं वनोद्देशे दण्डोऽपश्यदनुत्तमाम् ॥ ४ ॥
स दृष्ट्वा तां सुदुर्मेधा अनङ्गशरपीड़ितः ।
अभिगम्य सुसंविग्नः कन्यां वचनमब्रवीत् ॥ ५ ॥
कुतस्त्वमसि सुश्रोणि ! कस्य वासि सुता शुभे ! ।
पीड़ितोऽहमनङ्गेन पृच्छामि त्वां शुभानने ! ॥ ६ ॥

एवमुक्तोपोद्घातां प्रकृतकथामाह । एतदिति । अस्यामेवापरं वाक्यम् उपक्रान्तकथायामेव सम्बद्धम् । तत् पृष्टोत्तरभूतमित्यर्थः ॥ १ ॥

दान्तात्मा जितेन्द्रियः ॥ २ ॥

भार्गवः शुक्रस्तत्सम्बन्धिनमाश्रममुपाक्रामदगमत ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

तस्य त्वेवं ब्रुवाणस्य मोहोन्मत्तस्य कामिनः ।
भार्गवी प्रत्युवाचेदं वचः सानुनयं त्विदम् ॥ ७ ॥
भार्गवस्य सुतां विद्धि देवस्याक्लिष्टकर्मणः ।
अरजां नाम राजेन्द्र ! ज्येष्ठामाश्रमवासिनीम् ॥ ८ ॥
मा मां स्पृश बलाद्राजन् ! कन्या पितृवशा ह्यहम् ।
गुरुः पिता मे राजेन्द्र ! त्वञ्च शिष्यो महात्मनः ॥ ९ ॥
व्यसनं सुमहत् क्रुद्धः स ते दद्यान्महातपाः ।
यदि वान्यन्मया कार्य्यं धर्मदृष्टेन सत्पथा ॥ १० ॥
वरयस्व नरश्रेष्ठ ! पितरं मे महाद्युतिम् ।
अन्यथा तु फलं तुभ्यं भवेद्घोराभिसंहितम् ॥ ११ ॥
क्रोधेन हि पिता मेऽसौ त्रैलोक्यमपि निर्दहेत् ।
दास्यते चानवद्याङ्ग ! तव मां याचितः पिता ॥ १२ ॥
एवं ब्रुवाणामरजां दण्डः कामवशङ्गतः ।
प्रत्युवाच मदोन्मत्तः शिरस्याधाय चाञ्जलिम् ॥ १३ ॥

मोहेन रागमोहेनोन्मत्तस्य उचितानुचितविवेकरहितस्य । ७ ॥ ॥ ८ । ९ ॥

यदि वान्यत्कामभोगानुकूल्यं तर्हि धर्मदृष्टेन सत्पथा सन्मार्गेण माम् । वरयस्व । १० ॥

अन्यथा अवरणे । घोराभिसंहितं महानर्थफलम् ॥ ११ ॥

याचितः पिता मां तव दास्यते इत्यन्वयः ॥ १२ ॥ १३ ॥

प्रसादं कुरु सुश्रोणि ! न कालं क्षन्तुमर्हसि।
त्वत्कृते हि मम प्राणा विदीर्य्यन्ते वरानने ! ॥ १४ ॥
त्वां प्राप्य तु वधो वापि पापं वापि सुदारुणम्।
भक्तं भजस्व मां भीरु ! भजमानं सुविक्लवम् ॥ १५ ॥
एवमुक्त्वा तु तां कन्यां दोर्भ्यां प्राप्य बलाद् बली।
विस्फुरन्तीं यथाकामं मैथुनायोपचक्रमे ॥ १६ ॥
तमनर्थं महाघोरं दण्डः कृत्वा सुदारुणम्।
नगरं प्रययावाशु मधुमन्तमनुत्तमम् ॥ १७ ॥
अरजापि रुदन्ती सा आश्रमस्याविदूरतः।
प्रतीक्षते सुसन्त्रस्ता पितरं देवसन्निभम् ॥ १८ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
अशीतितमः सर्गः ॥ ८० ॥

क्षन्तुं विलम्बं कर्त्तुम् ॥ १४ ॥
त्वां प्राप्य यदि वधादिर्भवेत्तदा भवतु नामेति शेषः ॥ १५ ॥
विस्फुरन्तीं विलुठन्तीम् ॥ १६ ॥ १७ ॥
अरजापीति आकारान्तं नाम। पितरं प्रतीक्षते स्म ॥ १८ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे अशीतितमः सर्गः ॥ ८० ॥

## एकाशीतितमः सर्गः ।



स मुहूर्त्तादुपश्रुत्य देवर्षिरमितप्रभः ।
स्वमाश्रमं शिष्यवृतः क्षुधार्त्तः संन्यवर्त्तत ॥ १ ॥
सोऽपश्यदरजां दीनां रजसा समभिप्लुताम् ।
ज्योत्स्नामिव ग्रहग्रस्तां प्रत्यूषे न विराजतीम् ॥ २ ॥
तस्य रोषः समभवत् क्षुधार्त्तस्य विशेषतः ।
निर्दहन्निव लोकांस्त्रीन् शिष्यांश्चेदमुवाच ह ॥ ३ ॥
पश्यध्वं विपरीतस्य दण्डस्याविदितात्मनः ।
विपत्तिं घोरसङ्काशां क्रुद्धादग्निशिखामिव ॥ ४ ॥
क्षयोऽस्य दुर्मतेः प्राप्तः सानुगस्य महात्मनः ।

कथाशेषपरत्वम् । स इति । उपश्रुत्य शिष्यमुखादरजावृत्तान्तमित्यर्थः ॥ १ ॥

प्रत्यूषे प्रातःकाले । न विराजतीमशोभमानाम् ॥ २ ॥ ३ ॥

विपरीतस्य विपरीतानुष्ठानवतः । क्रुद्धात्सतो जायमानामग्निशिखासदृशीं विपत्तिं विनाशं पश्यध्वम् ॥ ४ ॥

यः प्रदीप्तां हुताशस्य शिखां वै स्प्रष्टुमर्हति ॥ ५ ॥
यस्मात् स कृतवान् पापमीदृशं घोरसंहितम्।
तस्मात् प्राप्स्यति दुर्मेधाः फलं पापस्य कर्मणः ॥ ६ ॥
सप्तरात्रेण राजासौ सपुत्रबलवाहनः।
पापकर्मसमाचारो वधं प्राप्स्यति दुर्मतिः ॥ ७ ॥
समन्ताद्योजनशतं विषयश्चास्य दुर्मतेः।
धक्ष्यते पांसुवर्षेण महता पाकशासनः ॥ ८ ॥
सर्वसत्त्वानि यानीह स्थावराणि चराणि च।
महता पांसुवर्षेण विलयं सर्वतो गमन् ॥ ९ ॥
दण्डस्य विषयो यावत् तावत् सर्वं समुच्छ्रयम्।
पांसुवर्षमिवालक्ष्यं सप्तरात्रं भविष्यति ॥ १० ॥

अस्य त्वयः प्राप्तस्तत्र हेतुर्य इति ॥ ५ ॥

सामान्येनोक्तं विशेषेणाह। यस्मादिति। ईदृशं मत्पुत्री-धर्षणरूपम् ॥ ६ ॥ ७ ॥

धक्ष्यते नाशयिष्यति ॥ ८ ॥

विलयं गमन् विलयं गमिष्यन्ति ॥ ९ ॥

सर्वमुच्छ्रयं चराचरप्राणिमात्रम्। उच्छ्रयत उद्भवतीत्युच्छ्रयः। पांसुवर्षमिवालक्ष्यम्। प्रसिद्धप्रलयकालिकमहापांसुवर्षमिव प्राप्य सप्तरात्रं सप्तरात्रिपर्यन्तमलक्ष्यं भविष्यति। विनष्टपुरपौरजानपदं भविष्यतीत्यर्थः ॥ १० ॥

इत्युक्त्वा क्रोधताम्राक्षस्तमाश्रमनिवासिनम् ।
जनं जनपदान्तेषु स्थीयतामिति चाब्रवीत् ॥ ११ ॥
श्रुत्वा तूशनसो वाक्यं सोऽश्रमावसथो जनः ।
निष्क्रान्तो विषयात्तस्मात् स्थानञ्चक्रेऽथ बाह्यतः ॥ १२ ॥
स तथोक्त्वा मुनिजनमरजामिदमब्रवीत् ।
इहैव वस दुर्मेधे ! आश्रमे सुसमाहिता ॥ १३ ॥
इदं योजनपर्य्यन्तं सरः सुरुचिरप्रभम् ।
अरजे ! विज्वरा भुंक्ष्व कालश्चात्र प्रतीक्ष्यताम् ॥ १४ ॥
त्वत्समीपे च ये सत्वा वासमेष्यन्ति तां निशाम् ।
अवध्याः पांसुवर्षेण ते भविष्यन्ति नित्यदा ॥ १५ ॥

तमाश्रमनिवासिनं स्वाश्रमनिवासिनम् । जनपदान्तेषु दण्डजनपदसीमान्तदेशेषु ॥ ११ ॥

सोऽश्रमावसथ इत्यार्षः सन्धिः । स आश्रमनिवासीत्यर्थः । एतावता कथं तदम्लगाद्विजमित्यस्योत्तरमुक्तम् ॥ १२ ॥

अथ निर्जनं वनं कथं तपसे प्रविष्ट इत्यस्योत्तरमाह । स तथेति । वासप्रयोजनमाह । सुसमाहिताशोभनसमाधिमती भूत्वेत्यर्थः । समाध्यनुष्ठाने निमित्तमाह । सुदुर्मेधे इति । यस्माद्दण्डधर्षणासहिष्णुर्मतिरस्यतस्तत्पापनिवृत्तये समाधिरावश्यक इति भावः ॥ १३ ॥

पांसुवर्षे कथं वासस्तत्राहेदमिति ॥ १४ ॥

श्रुत्वा नियोगं ब्रह्मर्षेः साऽरजा भार्गवी तदा।
तथेति पितरं प्राह भार्गवं भृशदुःखिता ॥ १६ ॥
इत्युक्त्वा भार्गवो वासमन्यत्र समकारयत्।
तच्च राज्यं नरेन्द्रस्य सभृत्यबलवाहनम् ॥ १७ ॥
सप्ताहाद्भस्मसाद्भूतं यथोक्तं ब्रह्मवादिना।
तस्यासौ दण्डविषयो विन्ध्यशैवलयोर्नृप ! ॥ १८ ॥
शप्तो ब्रह्मर्षिणा तेन वै धर्म्ये सहिते कृते।
ततः प्रभृति काकुत्स्थ ! दण्डकारण्यमुच्यते ॥ १९ ॥
तपस्विनः स्थिता ह्यत्र जनस्थानमतोऽभवत्।
एतत्ते सर्वमाख्यातं यन्मां पृच्छसि राघव ! ॥ २० ॥
सन्ध्यामुपासितुं वीर ! समयो ह्यतिवर्त्तते ॥
एते महर्षयः सर्वे पूर्णकुम्भाः समन्ततः ॥ २१ ॥

ये सत्त्वाः पशुपक्ष्यादयो वासमेष्यन्ति। सप्तरात्रमध्येऽपीति शेषः। एवञ्चाश्रमेऽनग्रहेण सरःप्रदेशस्य सुखावासत्वाद्य तपसे प्रविष्ठ इति भावः ॥ १५ ॥ १६ ॥ १७ ॥

तस्यासौ। अव्ययात् षष्ठी। साऽसावित्यर्थः। विन्ध्यशैवलयो-र्मध्ये इति शेषः ॥ १८ ॥

सहिते पूर्णधर्मपूर्णसौख्यसहिते कृते कृतयुगे तेन राज्ञा वै धर्म्ये धर्मवैपरीत्ये कृते सति यो ब्रह्मर्षिणा शप्तः सोऽसावित्यन्वयः ॥ ॥ १९ ॥ २० ॥ २१ ॥

कृतोदका नरव्याघ्र ! आदित्यं पर्य्युपासते ।
स तैर्ब्राह्मणमभ्यस्तं सहितैर्ब्रह्मवित्तमैः ।
रविरस्तं गतो राम ! गच्छोदकमुपस्पृश ॥ २२ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
एकाशीतितमः सर्गः ॥ ८१ ॥

कृतोदकाः कृतस्नानादिकर्म्माणः । स रविर्ब्रह्मवित्तमैः सहितै-स्तीर्थसमीपे सद्भिस्तैरभ्यस्तं ब्राह्मणं ब्राह्मणपठितोपनिषद्बोधितस्नाना-भ्यासं तत्सत्वर्यां पूजां प्राप्येति शेषः । रविरस्तं गतः ॥ २२ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे एकाशीतितमः सर्गः ॥ ८१ ॥

---

# द्व्यशीतितमः सर्गः ।



ऋषेर्वचनमाज्ञाय रामः सन्ध्यामुपासितुम् ।
उपाक्रामत्सरः पुण्यमप्सरोगणसेवितम् ॥ १ ॥
तत्रोदकमुपस्पृश्य सन्ध्यामन्वास्य पश्चिमाम् ।
आश्रमं प्राविशद्रामः कुम्भयोनेर्महात्मनः ॥ २ ॥
तस्यागस्त्यो बहुगुणं कन्दमूलं तथौषधम् ।
शाल्यादीनि पवित्राणि भोजनार्थमकल्पयत् ॥ ३ ॥
स भुक्तवान्नरश्रेष्ठस्तदन्नममृतोपमम् ।
प्रीतश्च परितुष्टश्च तां रात्रिं समुपाविशत् ॥ ४ ॥
प्रभाते काल्यमुत्थाय कृत्वाह्निकमरिन्दमः ।
ऋषिं समुपचक्राम गमनाय रघूत्तमः ॥ ५ ॥
अभिवाद्याब्रवीद्रामो महर्षिं कुम्भसम्भवम् ।
आपृच्छे स्वाश्रमं गन्तुं मामनुज्ञातुमर्हसि ॥ ६ ॥

ऋषेरिति ॥ १ ॥ २ ॥

कन्दमूलं कन्दरूपं मूलम् । औषधं जरापलितघ्नं दिव्यौषधम् ॥ ३ ॥ ४ ॥

प्रभाते उत्थाय काल्यं प्रातःकालिकमाह्निकं कृत्वा गमनाय अनुज्ञां ग्रहीतुमृषिं तत्समीपं समुपचक्राम जगाम ॥ ५ ॥ ६ ॥

धन्योऽस्म्यनुगृहीतोऽस्मि दर्शनेन महात्मनः ।
द्रष्टुञ्चैवागमिष्यामि पावनार्थं महात्मनः ॥ ७ ॥
तथा वदति काकुत्स्थे वाक्यमद्भुतदर्शनम् ।
उवाच परमप्रीतो धर्मनेत्रस्तपोधनः ॥ ८ ॥
अत्यद्भुतमिदं वाक्यं तव राम ! शुभाक्षरम् ।
पावनः सर्वभूतानां त्वमेव रघुनन्दन ! ॥ ९ ॥
मुहूर्त्तमपि राम ! त्वां येऽनुपश्यन्ति केचन ।
पाविताः स्वर्गभूतास्च पूज्यास्ते त्रिदिवेश्वरैः ॥ १० ॥

आगमिष्यामि अतःपरमपि यदाकांक्षा भविष्यतीति शेषः। महात्मनः सकाशादात्मनः पावनार्थमित्यर्थः ॥ ७ ॥

तथा वदति आत्मनः पावनार्थम् आगमिष्यामीति वदति। परमप्रीतः। एवं विनयवचनादिति शेषः। धर्मा योगधर्मा नेत्रं सर्वज्ञानसाधनं चक्षुर्यस्य सः ॥ ८ ॥

अथागस्त्यो रामस्य ब्रह्मत्वं हृदि कृत्वाह। पावनः सर्वभूतानामिति। सर्वजीवानाम्। क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मतेति शास्त्रादित्याशयः। त्वमेवेत्यनेन सर्वपावनस्य भगवद्रूपत्वमेवोक्तम् ॥ ९ ॥

ये त्वां पश्यन्ति। चित्ते स्वतत्त्वब्रह्मतया पश्यन्तीत्यर्थः। तव लीलावतारमूर्त्तिं विष्णुत्वेन चक्षुषा च ये पश्यन्तीत्यर्थः। ते पाविताः। त्वत्ध्यानदर्शनाभ्यामिति शेषः। अतएव देहान्ते स्वर्गभूताः परमपदं वा स्वर्गं प्राप्ता अतएव ते सर्वदैवतैः पूज्याः। एवमनुकूलहृष्टः फलमुक्तम् ॥ १० ॥

ये च त्वां घोरचक्षुर्भिः पश्यन्ति प्राणिनो भुवि।
हतास्ते यमदण्डेन सद्यो निरयगामिनः॥ ११॥
ईदृशस्त्वं रघुश्रेष्ठ! पावनः सर्वदेहिनाम्।
भुवि त्वां कथयन्तो हि सिद्धिमेष्यन्ति राघव!॥ १२॥
त्वं गच्छारिष्टमव्यग्रः पन्थानमकुतोभयम्।
प्रशाधि राज्यं धर्मेण गतिर्हि जगतो भवान्॥ १३॥
एवमुक्तस्तु मुनिना प्राञ्जलिः प्रग्रहो नृपः।
अभ्यवादयत प्राज्ञस्तमृषिं सत्यशीलिनम्॥ १४॥
अभिवाद्य ऋषिश्रेष्ठं तांश्च सर्वांस्तपोधनान्।
अध्यारोहत्तदव्यग्रः पुष्पकं हेमभूषितम्॥ १५॥
तं प्रयान्तं मुनिगणा आशीर्वादैः समन्ततः।

अथ प्रतिकूलदृष्टेस्तत्राह,—ये चेति। प्राणिन इति सामान्योक्त्या तपःप्रभावे सत्यपि त्वद्द्वेषमात्रेण निरयगामित्वोक्ता। परन्तु ते सद्यस्तत्क्षणमेव निरयगामिन इत्युक्त्या कालान्तरे वाद्वरीत्यापि त्वद्दर्शनमाहात्म्यात्ते स्वर्गमोक्षभाज इति सूचितम्॥ ११॥

ईदृशः सकलकल्याणगुणः परमानन्दरूपः सर्वदेहिनां पावनोऽसि। अतः कालान्तरे त्वां कथयन्तस्त्वच्चरितं कीर्त्तयन्तोऽपि सिद्धिं अज्ञाता रूपां चित्तशुद्धिद्वारा एष्यन्ति प्राप्स्यन्ति। किञ्च ईदृशस्त्वं पावन इतरविलक्षणपावनत्वस्वभावः। ये त्वां रागद्वेषकामभयाद्यतमैरपि कथयन्तस्ते सिद्धिं मोक्षं गमिष्यन्ति॥ १२॥

रिष्टं दुःखम् अरिष्टं सुखम्। गतिः स्वर्गादिगतिसाधनम्॥ १३॥

अपूजयन् महेन्द्राभं सहस्राक्षमिवामराः ॥ १६ ॥
स्वस्थः स ददृशे रामः पुष्पके हेमभूषिते ।
शशी मेघसमीपस्थो यथा जलधरागमे ॥ १७ ॥
ततोऽर्धदिवसे प्राप्ते पूज्यमानस्ततस्ततः ।
अयोध्यां प्राप्य काकुत्स्थो मध्यकक्षामवातरत् ॥ १८ ॥
ततो विसृज्य रुचिरं पुष्पकं कामगामिनम् ।
विसर्जयित्वा गच्छेति स्वस्ति तेऽस्त्विति च प्रभुः ॥ १९ ॥
कक्षान्तरस्थितं क्षिप्रं द्वास्थं रामोऽब्रवीद्वचः ।
लक्ष्मणं भरतश्चैव गत्वा तौ लघुविक्रमौ ।
ममागमनमाख्याय शब्दापयत मा चिरम् ॥ २० ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
द्व्यशीतितमः सर्गः ॥ ८२ ॥

प्रगृह्य उद्यतबाहुः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥
मध्यकक्षां प्राप्येति शेषः ॥ १८ ॥
विसृज्य स्वरक्षितं कृत्वा । विसर्जयित्वा कुबेरं वहेत्यनुज्ञाय ॥ १९ ॥
शब्दापयत । दौवारिकेणाह्वयस्वेत्यर्थः । बहुवचनमार्षम् । आह्वानं कारयेत्यर्थः ॥ २० ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे द्व्यशीतितमः सर्गः ॥ ८२ ॥

## त्र्यशीतितमः सर्गः ।



तच्छ्रुत्वा भाषितं तस्य रामस्याक्लिष्टकर्मणः ।
द्वाःस्थः कुमारावाहूय राघवाय न्यवेदयत् ॥ १ ॥
दृष्ट्वा तु राघवः प्राप्तावुभौ भरतलक्ष्मणौ ।
परिष्वज्य ततो रामो वाक्यमेतदुवाच ह ॥ २ ॥
कृतं मया यथा तथ्यं द्विजकार्य्यमनुत्तमम् ।
धर्मसेतुमथो भूयः कर्त्तुमिच्छामि राघवौ ! ॥ ३ ॥
अक्षयश्चाव्ययश्चैव धर्मसेतुर्मतो मम ।
धर्मप्रवचनञ्चैव सर्वपापप्रणाशनम् ॥ ४ ॥

अथ रामस्य राजसूयकरणेच्छा भरतेन क्षत्रियकुलनाशप्रसङ्गेन निवार्य्यते । तच्छ्रुत्वेति ॥ १ ॥ २ ॥

द्विजकार्य्यं यथा प्रतिज्ञातं तथा तथ्यं कृतम् । बाल उज्जीवित इत्यर्थः । धर्मसेतुं राजा राजसूयेन यजेतेति विधिनाराज्ञामसाधारणभूतं धर्ममर्य्यादारूपमित्यर्थः ॥ ३ ॥

अक्षयः । बहुकालानुभवयोग्यफलत्वात् । अव्ययः । सजातीयधर्मान्तरहेतुत्वात् । राजसूयानुष्ठानमेवं भूतमिति किं वक्तव्यम् । यत्कीर्त्तनमपि विशिष्टफलमित्याहैवं धर्मप्रवचनञ्चेति । मर्य्यादाभूतराजसूयधर्मसंकीर्त्तनञ्चेत्यर्थः । य उचैनमेवं वेदेति श्रुतेः ॥ ४ ॥

युवाभ्यामात्मभूताभ्यां राजसूयमनुत्तमम् ।
सहितो यष्टुमिच्छामि तत्र धर्मस्तु शाश्वतः ॥ ५ ॥
इष्ट्वा तु राजसूयेन मित्रः शत्रुनिबर्हणः ।
सुहुतेन सुयज्ञेन वरुणत्वमुपागमत् ॥ ६ ॥
सोमश्च राजसूयेन इष्ट्वा धर्मेण धर्मवित् ।
प्राप्तश्च सर्वलोकेषु कीर्त्तिं स्थानञ्च शाश्वतम् ॥ ७ ॥
अस्मिन्नहनि यच्छ्रेयश्चिन्त्यतां तन्मया सह ।
हितञ्चायतियुक्तञ्च प्रयतौ वक्तुमर्हथः ॥ ८ ॥
श्रुत्वा तु राघवेस्तद्वाक्यं वाक्यविशारदः ।
भरतः प्राञ्जलिर्भूत्वा वाक्यमेतदुवाच ह ॥ ९ ॥
त्वयि धर्मः परः साधो ! त्वयि सर्वा वसुन्धरा ।
प्रतिष्ठिता महाबाहो ! यशश्चामितविक्रम ! ॥ १० ॥
महीपालाश्च सर्वे त्वां प्रजापतिमिवामराः ।
निरीक्षन्ते महात्मानं लोकनाथं यथा वयम् ॥ ११ ॥

तत्र राजसूये शाश्वतो धर्मः । क्षत्रियस्यासाधारणोऽक्षयकीर्त्ति-हेतुर्धर्म इत्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥

हितमिह लोकसुखम् । आयतियुक्तम् । उत्तरकाले च हित-मित्यर्थः ॥ ८ ॥ ९ ॥

सर्वा वसुन्धरा प्रतिष्ठिता । सार्वभौमत्वादित्याशयः ॥ १० ॥

प्रजापतिममरा इव परमाप्तत्वेन निरीक्षन्त इत्यर्थः ॥ ११ ॥

पुत्रास्त्र पितृवद्राजन्! पश्यन्ति त्वां महाबल!।
पृथिव्या गतिभूतोऽसि प्राणिनामपि राघव!॥ १२॥
स त्वमेवंविधं यज्ञमाहर्तासि कथं नृप!।
पृथिव्यां राजवंशानां विनाशो यत्र दृश्यते॥ १३॥
पृथिव्यां ये च पुरुषा राजन्! पौरुषमागताः।
सर्वेषां भविता तत्र संचयः सर्वकोपजः॥ १४॥
स त्वं पुरुषशार्दूल! गुणैरतुलविक्रम!
पृथिवीं नार्हसे हन्तुं वशे हि तव वर्त्तते॥ १५॥
भरतस्य तु तद्वाक्यं श्रुत्वाऽमृतमयं यथा।
प्रहर्षमतुलं लेभे रामः सत्यपराक्रमः॥ १६॥
उवाच च शुभं वाक्यं कैकेय्यानन्दवर्द्धनम्।
प्रीतोऽस्मि परितुष्टोऽस्मि तवाद्य वचनेऽनघ॥ १७॥

पुत्राः पितृवत्। पितरमिवेत्यर्थः॥ १२॥

स त्वं सर्वप्रियः। एवम्विधत्वं दर्शयति। पृथिव्यामिति॥ १३॥

राजसूयस्य सर्वराजविजयपूर्वं साधनीयत्वात् तत्र चास्मासु प्रवृत्तेषु पृथिव्यां ये क्षत्रियाः पौरुषमागताः शौर्य्यं प्राप्तास्तेषां सर्वेषां तत्र राजसूयार्थविजये सर्वप्रकोपजः संक्षयोऽवश्यं भविता। एवम्विधं क्षत्रियनाशकं यज्ञं सर्वजनैः पितृवदुपास्यमानः कथमाहर्तुमर्हसि। सर्वथैवानुचितमेवेत्यर्थः॥ १४॥

सर्वं तव वशे वर्त्तत इत्यन्वयः॥ १५॥ १६॥

इदं वचनमक्लीवं त्वया धर्मसमागतम् ।
व्याहृतं पुरुषव्याघ्र ! पृथिव्याः परिपालनम् ॥ १८ ॥
एष्यदस्मदभिप्रायाद्राजसूयात् क्रतूत्तमात् ।
निवर्त्तयामि धर्मज्ञ ! तव सुव्याहृतेन च ॥ १९ ॥
लोकपीड़ाकरं कर्म न कर्त्तव्यं विचक्षणैः ।
बालानान्तु शुभं वाक्यं साधुयुक्तं महाबल ! ॥ २० ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
त्र्यशीतितमः सर्गः ॥ ८३ ॥

वचने वचनरूपे निमित्ते । अनघेति सम्बुद्धिः ॥ १७ ॥ १८ ॥

एष्यदस्मदभिप्रायात् । अस्मदभिप्रायमेष्यत अस्मच्चिकीर्षां प्राप्स्यत इत्यर्थः । निवर्त्तयामि । अभिप्रायमिति शेषः । तत्र हेतुस्तव सुव्याहृतम् ॥ १९ ॥

तुरप्यर्थे । बालानामपि यद्वाक्यं युक्तमुचितं साधु शुभावहञ्च तद्-ग्राह्यमेव हि यस्मात्तस्मात्ते वाक्यमीदृशं गृह्णामि ॥ २० ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे त्र्यशीतितमः सर्गः ॥ ८३ ॥

## चतुरशीतितमः सर्गः ।



तथोक्तवति रामे तु भरते च महात्मनि ।
लक्ष्मणोऽथ शुभं वाक्यमुवाच रघुनन्दनम् ॥ १ ॥
अश्वमेधो महायज्ञः पावनः सर्वपाप्मनाम् ।
पावनस्तव दुर्धर्षो रोचतां रघुनन्दन ! ॥ २ ॥
श्रूयते हि पुरावृत्तं वासवे सुमहात्मनि ।
ब्रह्महत्यावृतः शक्रो हयमेधेन पावितः ॥ ३ ॥
पुरा किल महाबाहो ! देवासुरसमागमे ।
वृत्रो नाम महानासीद्दैतेयो लोकसम्मतः ॥ ४ ॥

अथ लक्ष्मणेनाश्वमेध एव सर्वार्थसाधकोऽनुष्ठेय इत्युक्त्वा तदुपोद्-बलकं वृत्रवधाख्यानं प्रस्तूयते । तथेति ॥ १ ॥

सर्वपाप्मनां पावनोऽस्ति । यतश्च स पावनोऽतो रोचतामनुष्ठातु-मिति शेषः ॥ २ ॥

अश्वमेधस्य सर्वपापशोधकत्वं सर्वं पाप्मानन्तरति तरति ब्रह्म-हत्यामिति श्रुतिसिद्धं बोधयितुं पुरावृत्तान्तमाह,—श्रूयते हीति । वासवे वासवविषये ॥ ३ ॥

देवासुरसमागमे देवासुरसेङ्काले ॥ ४ ॥

विस्तीर्णो योजनशतमुच्छ्रितस्त्रिगुणं ततः ।
अनुरागेण लोकांस्त्रीन् स्नेहात् पश्यति सर्वतः ॥ ५ ॥
धर्मज्ञश्च कृतज्ञश्च बुद्ध्या च परिनिष्ठितः ।
शशास पृथिवीं स्फीतां धर्मेण सुसमाहितः ॥ ६ ॥
तस्मिन् प्रशासति तदा सर्वकामदुघा मही ।
रसवन्ति प्रसूनानि मूलानि च फलानि च ॥ ७ ॥
अकृष्टपच्या पृथिवी सुसम्पन्ना महात्मनः ।
स राज्यं तादृशं भुंक्ते स्फीतमद्भुतदर्शनम् ॥ ८ ॥
तस्य बुद्धिः समुत्पन्ना तपः कुर्य्यामनुत्तमम् ।
तपो हि परमं श्रेयः सम्मोहमितरत् सुखम् ॥ ९ ॥
स निक्षिप्य सुतं ज्येष्ठं पौरेषु मधुरेश्वरम् ।
तप उग्रं समातिष्ठत्तापयन् सर्वदेवताः ॥ १० ॥
तपस्तप्यति वृत्रे तु वासवः परमार्त्तवत् ।
विष्णुं समुपसंक्रम्य वाक्यमेतदुवाच ह ॥ ११ ॥

ततस्त्रिगुणं योजनशतत्रयमित्यर्थः । त्रीन् लोकांस्तद्वर्त्तिप्राणिनोऽनुरागेण स्वीयत्वाभिमानेन हेतुना स्नेहात् स्नेहयुक्तचक्षुषा पश्यति स्म । ५ ॥ ६ ॥ ७ । ८ ।

इतरत् सुखं विषयसुखम् । सम्मोहकरम् । ९ ॥

मधुरेश्वरं मधुरश्चासौ तन्नामकत्वादीश्वरश्चम् । १० ॥

तपस्यता महाबाहो ! लोकाः सर्व्वे विनिर्जिताः ।
बलवान् स हि धर्म्मात्मा नैनं शक्ष्यामि शासितुम् ॥ १२ ॥
यद्यसौ तप आतिष्ठेत् भूय एव सुरेश्वर ! ।
यावल्लोका धरिष्यन्ति तावदस्य वशानुगाः ॥ १३ ॥
तञ्चैनं परमोदारमुपेक्षसि महाबल ! ।
क्षणं हि न भवेत् वृत्रः क्रुद्धे त्वयि सुरेश्वर ! ॥ १४ ॥
यदा हि प्रीतिसंयोगं त्वया विष्णो ! समागतः ।
तदा प्रभृति लोकानां नाथत्वमुपलब्धवान् ॥ १५ ॥
स त्वं प्रसादं लोकानां कुरुष्व सुसमाहितः ।
त्वत्कृतेन हि सर्व्वं स्यात् प्रशान्तमरुजं जगत् ॥ १६ ॥
इमे हि सर्व्वे विष्णो ! त्वां निरीक्षन्ते दिवौकसः ।
वृत्रघातेन महता तेषां साह्यं कुरुष्व ह ॥ १७ ॥

परमार्त्तवत् परमार्त्तः सन् ॥ ११ ॥ १२ ॥

भूयः अतःपरमपि । धरिष्यन्ति । भूतजातमिति शेषः । तावदस्य वशानुगाः सर्व्वे वयं देवगणा भविष्याम इति शेषः ॥ १३ ॥

क्षणं न भवेन्न जीवेदित्यर्थः ॥ १४ ॥

त्वत्सन्तोषेणैव तस्य सौख्यमित्याह,—यदा हीति । तदारभ्यैवेदं तस्य माहात्म्यमिति शेषः ॥ १५ ॥

त्वत्कृतेन । रक्षणेनेति शेषः ॥ १६ ॥

त्वया हि नित्यशः साह्यं कृतमेषां महात्मनाम् ।
असह्यमिदमन्येषामगतीनां गतिर्भवान् ॥ १८ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
चतुरशीतितमः सर्गः ॥ ८४ ॥

वृत्रघातेन हेतुना तेषां साह्यमुपकारं कुरु । ह शब्दः पादपूरकः ॥ १७ ॥

यद्यपीदं सुरसाहाय्यकरणमन्येषामसुराणामसह्यं तथापि कुरु । यस्मादगतीनामस्माकं सुराणां भवानेव गतिः शरणम् ॥ १८ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे चतुरशीतितमः सर्गः ॥ ८४ ॥

---

## पञ्चाशीतितमः सर्गः।



लक्ष्मणेन तु तद्वाक्यं श्रुत्वा शत्रुनिबर्हणः।
वृत्रघातमशेषेण कथयेत्याह सुव्रत ! ॥ १ ॥
राघवेणैवमुक्तस्तु सुमित्रानन्दवर्धनः।
भूय एव कथां दिव्यां कथयामास सुव्रतः ॥ २ ॥
सहस्राक्षवचः श्रुत्वा सर्वेषाञ्च दिवौकसाम्।
विष्णुर्देवानुवाचेदं सर्वानिन्द्रपुरोगमान् ॥ ३ ॥
पूर्वं सौहृदबद्धोऽस्मि वृत्रस्येह महात्मनः।
तेन युष्मत्प्रियार्थं हि नाहं हन्मि महासुरम् ॥ ४ ॥
अवश्यं करणीयञ्च भवतां सुखमुत्तमम्।
तस्मादुपायमाख्यास्ये सहस्राक्षो वधिष्यति ॥ ५ ॥
त्रेधाभूतं करिष्यामि ह्यात्मानं सुरसत्तमाः।
तेन वृत्रं सहस्राक्षो वधिष्यति न संशयः ॥ ६ ॥

अथ प्रस्तुतोपयुक्तशेषकथापूरणम्। लक्ष्मणस्येति ।१।
दिव्यां कथां प्रस्तुताम् ।२।३।
पूर्वं युष्माभिस्तद्वधप्रार्थनात् पूर्वम्। सौहृदबद्धः प्रीतिबद्धः ।४।५।
त्रेधाभूतं त्रेधाभक्तम् आत्मानं स्वतेजोमूर्त्तिम् ।६।

एकांशो वासवं यातु द्वितीयो वज्रमेव तु ।
तृतीयो भूतलं यातु तदा वृत्रं हनिष्यति ॥ ७ ॥
तथा ब्रुवति देवेशे देवावाक्यमथाब्रुवन् ।
एवमेतन्न सन्देहो यथा वदसि दैत्यहन् ! ॥ ८ ॥
भद्रन्तेऽस्तु गमिष्यामो वृत्रासुरवधैषिणः ।
भजस्व परमोदार ! वासवं स्वेन तेजसा ॥ ९ ॥
ततः सर्वे महात्मानः सहस्राक्षपुरोगमाः ।
तदरण्यमुपाक्रामन् यत्र वृत्रो महासुरः ॥ १० ॥
ते पश्यंस्तेजसा भूतं तपन्तमसुरोत्तमम् ।
पिबन्तमिव लोकांस्त्रीन्निर्दहन्तमिवाम्बरम् ॥ ११ ॥
दृष्ट्वैव चासुरश्रेष्ठं देवास्त्रासमुपागमन् ।
कथमेनं वधिष्यामः कथं न स्यात् पराजयः ॥ १२ ॥
तेषां चिन्तयतां तत्र सहस्राक्षः पुरन्दरः ।
वज्रं प्रगृह्य पाणिभ्यां प्राहिणोत् वृत्रमूर्द्धनि ॥ १३ ॥
कालाग्निनेव घोरेण दीप्तेनेव महार्चिषा ।

तृतीयो भूतलं यातु । सतद्‌वृत्रदेहधारणार्थमित्यर्थः । इन्द्रस्य वृत्रहननजब्रह्महत्यानिवृत्तिं यावत् भूलोकरक्षणार्थं चेत्यपि बोध्यम् ॥ ७ । ८ ॥ ९ । १० ॥

तेजसा प्रागुक्तलक्षणेन स्वेन तेजसा भूतं व्याप्तम् । पिबन्तमित्यादि तपआधिक्यपरम् ॥ ११ ॥ १२ । १३ ॥

पतता वृत्रशिरसा जगत्त्रासमुपागमत् ॥ १४ ॥
असम्भाव्यं वधं तस्य वृत्रस्य विबुधाधिपः।
चिन्तयानो जगामाशु लोकस्यान्तं महायशाः ॥ १५ ॥
तमिन्द्रं ब्रह्महत्याशु गच्छन्तमनुगच्छति।
अपतच्चास्य गात्रेषु तमिन्द्रं दुःखमाविशत् ॥ १६ ॥
हतारयः प्रनष्टेन्द्रा देवाः साग्निपुरोगमाः।
विष्णुं त्रिभुवनेशानं मुहुर्मुहुरपूजयन् ॥ १७ ॥
त्वं गतिः परमेशान ! पूर्वजो जगतः पिता।
रक्षार्थं सर्वभूतानां विष्णुत्वमुपयस्थिवान् ॥ १८ ॥

दीप्तेन दीप्यमानेन महार्चिषा महार्चिश्चदयःपिण्डादिसदृशेन वज्रेण वज्रकृतच्छेदेन हेतुना पतता वृत्रशिरसा जगत्त्रासमुपागमत् ॥ १४ ॥

असम्भाव्यम् अनपराधिनस्तपस्यतस्तपोनिष्ठस्य वधमनुचितं चिन्तयानो विबुधाधिपो लोकस्यान्तं लोकालोकात् परन्तमःप्रदेशं जगाम। ब्रह्महत्याभिया पलायितोऽभूत् ॥ १५ ॥

तमिन्द्रम् अनुगमनं तदभिमानिदेवतारूपेण। इन्द्रहतपुत्रेण त्वष्ट्रा मुनिना पुत्रेच्छया स्वाहेन्द्रशत्रुर्वर्द्धस्वेति होमे कृते आहवनीयाज्जातो वृत्रो ब्राह्मण इति। तमिन्द्रं ब्रह्महत्याग्रस्तमिन्द्रम् ॥ १६ ॥ १७ ॥

पूर्वजो जगतः पिता। अहमस्मि प्रथमजा ऋतस्येति श्रुतेः। एवं कारणमूर्त्तिर्हिरण्यगर्भ एव सर्वभूतरक्षोद्देशेन विष्णाकारत्वं पालनशक्तिप्राधान्येन प्राप्तः ॥ १८ ॥

हतस्त्वायं त्वया वृत्रो ब्रह्महत्या च वासवम्।
बाधते सुरशार्दूल! मोक्षं तस्य विनिर्दिश॥ १९॥
तेषां तद्वचनं श्रुत्वा देवानां विष्णुरब्रवीत्।
मामेव यजतां शक्रः पावयिष्यामि वज्रिणम्॥ २०॥
पुण्येन हयमेधेन मामिष्ट्वा पाकशासनः।
पुनरेष्यति देवानामिन्द्रत्वमकुतोभयः॥ २१॥
एवं सन्दिश्य तां वाणीं देवानाञ्चामृतोपमाम्।
जगाम विष्णुर्देवेशः स्तूयमानस्त्रिविष्टपम्॥ २२॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
पञ्चाशीतितमः सर्गः॥ ८५॥

यदर्थं विष्णुमत्त्ववलम्बनं तत् कार्य्यं ते कृतं दुष्टवधेनैव शिष्ट-पालनादित्याह,—हतस्त्वेति॥ १९॥

माम् औपासनाग्निहोत्राद्यश्वमेधान्ताशेषयज्ञयजनीयं विशेषयाश्व-मेधस्य साक्षाद्देवतं मामेव शक्रो जयताम्। इन्द्राय स्वाहेत्यादिमन्त्रेषु तत्तद्देवतान्तर्य्याम्यहमेव तत्तत्पदैर्बोध्य इति भावः॥ २०॥ २१॥ २२॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे पञ्चाशीतितमः सर्गः॥ ८५॥

---

## षडशीतितमः सर्गः ।



तदा वृत्रवधं सर्वमखिलेन स लक्ष्मणः ।
कथयित्वा नरश्रेष्ठः कथाशेषं प्रचक्रमे ॥ १ ॥
ततो हते महावीर्य्ये वृत्रे देवभयङ्करे ।
ब्रह्महत्यावृतः शक्रः संज्ञां लेभे न वृत्रहा ॥ २ ॥
सोऽन्तमाश्रित्य लोकानां नष्टसंज्ञो विचेतनः ।
कालं तत्रावसत् कञ्चिद्वेष्टमान इवोरगः ॥ ३ ॥
अथ नष्टे सहस्राक्षे उद्विग्नमभवज्जगत् ।
भूमिश्च ध्वस्तसङ्काशा निस्नेहा शुष्ककानना ॥ ४ ॥
निस्रोतसस्ते सर्वे तु ह्रदाश्च सरितस्तथा ।
संक्षोभश्चैव सत्वानामनावृष्टिकृतोऽभवत् ॥ ५ ॥

अथाश्वमेधतो ब्रह्महत्यानिवृत्तिकथनेनाश्वमेधवैभवकथनेन च यज्ञप्रोत्साहनम् । तदेति । कथाशेषं प्रचक्रमे वक्तुमिति शेषः ॥ १ ॥

न संज्ञां लेभे । ग्रहग्रस्तवत् परवशोऽभूदित्यर्थः ॥ २ ॥

कञ्चित् कालमवसदित्यन्वयः ॥ ३ ॥

नष्टे अदर्शनं प्राप्ते । उद्विग्नम् । अराजकत्वात निस्नेहा इन्द्रा-भावमत्रावच्छ्राटनोर्द्रा ॥ ४ ॥

तदेवाह,—निस्रोतस इति ॥ ५ ॥

चीयमाणे तु लोकेऽस्मिन् सम्भ्रान्तमनसः सुराः।
यदुक्तं विष्णुना पूर्वं तं यज्ञं समुपानयन् ॥ ६ ॥
ततः सर्व सुरगणाः सोपाध्यायाः सहर्षिभिः।
तं देशं समुपाजग्मुर्यत्रेन्द्रो भयमोहितः ॥ ७ ॥
ते तु दृष्ट्वा सहस्राक्षमावृतं ब्रह्महत्यया।
तं पुरस्कृत्य देवेशमश्वमेधं प्रचक्रिरे ॥ ८ ॥
ततोऽश्वमेधः सुमहान् महेन्द्रस्य महात्मनः।
ववृते ब्रह्महत्यायाः पावनार्थं नरेश्वर ! ॥ ९ ॥
ततो यज्ञे समाप्ते तु ब्रह्महत्या महात्मनः।
अभिगम्याब्रवीद्वाक्यं क्व मे स्थानं विधास्यथ ॥ १० ॥
ते तामूचुस्ततो देवास्तुष्टाः प्रीतिसमन्विताः।
चतुर्धा विभजात्मानमात्मनैव दुरासदे ! ॥ ११ ॥
देवानां भाषितं श्रुत्वा ब्रह्महत्या महात्मनाम्।
सन्दधौ स्थानमन्यत्र वरयामास दुर्वसा ॥ १२ ॥

समुपानयन्। अवेदयन् स्मृतवन्त इति यावत् ॥ ६ । ७ ॥

तं देवेशं विष्णुमिन्द्रं वा ॥ ८ ॥ ९ ॥ १० ॥

हे दुरासदे ब्रह्महत्ये आत्मानञ्चतुर्धा विभजेति तामूचुरित्यन्वयः ॥ ११ ॥

सन्दधौ चतुर्धा विभागं सम्पादितवती। तथा कृत्वा देवेन्द्रादन्यत्र स्थानं वरयामास। दुर्वसादुःखजनकवासवती ॥ १२ ॥

एकेनांशेन वत्स्यामि पूर्णोदासु नदीषु वै।
चतुरो वार्षिकान् मासान् दर्पघ्नी कामचारिणी ॥ १३ ॥
भूम्यामहं सर्वकालमेकेनांशेन सर्वदा।
वसिष्यामि न सन्देहः सत्येनैतद् ब्रवीमि वः ॥ १४ ॥
योऽयमंशस्तृतीयो मे स्त्रीषु यौवनशालिषु।
त्रिरात्रं दर्पपूर्णासु वसिष्ये दर्पघातिनी ॥ १५ ॥
हन्तारो ब्राह्मणान्ये तु मृषापूर्वमदूषकान्।
तांश्चतुर्थेन भागेन संश्रयिष्ये सुरर्षभाः ॥ १६ ॥
प्रत्यूचुस्तां ततो देवा यथा वदसि दुर्वसे!।
तथा भवतु तत् सर्वं साधयस्व यदीप्सितम् ॥ १७ ॥

तानि स्थानान्याह,—एकेनेति। चतुरो वार्षिकान् मासान् पूर्णोदासु पूर्णोदकासु। तेनान्यदाल्पोदकासु न क्षुद्रनदीषु वासः। सोऽपि प्रत्यासत्त्या पूर्णोदकत्वकाले एव। स च कालः सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वला इत्युक्तः। दर्पघ्नी। पापिनामिति शेषः। तत्रैव वासे हेतुः। कामचारिणीति। तेन गङ्गादिषु न वास इत्युक्तम् ॥ १३ ॥

भूम्याम् ऊषरस्वरूपेण वासः ॥ १४ ॥

दर्पघातिनी पुरुषसम्भोगकरणासुखविघातिनी ॥ १५ ॥

अदूषकान् ब्रह्मब्रह्मविद्याब्राह्मणब्रह्मलोकानां मार्गान्तरावलम्बेन दूषणाकरणरहितान्। उक्तपदार्थेषु दृढविश्वासान्। मृषापूर्वं मृषावादपूर्वं ये राजस्थानादौ घातं कुर्वन्ति धिक्कारादि कुर्वन्ति लोहितादिस्रावं कुर्वन्ति कैमुतिकन्यायेनैव ये प्राणवियोगं कुर्वन्ति

ततः प्रीत्यान्विता देवाः सहस्राक्षं ववन्दिरे ।
विज्वरः पूतपाप्मा च वासवः समपद्यत ॥ १८ ॥
तस्मिन्स्थाने जगत् सर्वं सहस्राक्षे प्रतिष्ठिते ।
यज्ञस्याद्भुतसङ्काशं तदा शक्रोऽभ्यपूजयत् ॥ १९ ॥
ईदृशो ह्यश्वमेधस्य प्रसादो रघुनन्दन ! ।
यजस्व सुमहाभाग ! हयमेधेन पार्थिव ! ॥ २० ॥
इति लक्ष्मणवाक्यमुत्तमं
नृपतिरतीव मनोहरं महात्मा ।
परितोषमवाप हृष्टचेताः
स निशम्येन्द्रसमानविक्रमौजाः ॥ २१ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
षड़शीतितमः सर्गः ॥ ८६ ॥

तांश्चतुर्थेन भागेन संश्रयिष्ये । यो लोहितं करवावतः प्रस्कन्न पांसून् संग्रह्णात् । तावत् संवत्सरं पितृलोकं न प्राजानात् । तस्मात् ब्राह्मणाय नापगुरेन्न निहन्यान्न लोहितं कुर्य्यादिति श्रुतेः ॥ १६ ॥ १७ ॥ १८ ॥
यज्ञं विष्णुम् ॥ १९ ॥ २० ॥ २२ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे षड़शीतितमः सर्गः ॥ ८६ ॥

---

# सप्ताशीतितमः सर्गः ।



तच्छ्रुत्वा लक्ष्मणेनोक्तं वाक्यं वाक्यविशारदः ।
प्रत्युवाच महातेजाः प्रहसन् राघवो वचः ॥ १ ॥
एवमेव नरश्रेष्ठ ! यथा वदसि लक्ष्मण ! ।
वृत्रघातमशेषेण वाजिमेधफलञ्च यत् ॥ २ ॥
श्रूयते हि पुरा सौम्य ! कर्दमस्य प्रजापतेः ।
पुत्रो वाह्लीश्वरः श्रीमानिलो नाम सुधार्मिकः ॥ ३ ॥
स राजा पृथिवीं सर्वां वशे कृत्वा महायशाः ।
राज्यञ्चैव नरव्याघ्र ! पुत्रवत् पर्य्यपालयत् ॥ ४ ॥
सुरैश्च परमोदारैर्दैतेयैश्च महाधनैः ।
नागराक्षसगन्धर्वैर्यक्षैश्च सुमहात्मभिः ॥ ५ ॥
पूज्यते नित्यशः सौम्य ! भयार्त्तै रघुनन्दन ! ।

अथ रामोऽपि इलोपाख्यानेनाश्वमेधस्य राज्ञामश्वानर्थनिवृत्तिपूर्वकपरमेष्टसाधनत्वं दर्शयति । तदिति । अश्वमेधमाहात्म्यमजानानं प्रतीव लक्ष्मणोक्तदैभवमुक्तवानिति भावेन हासः ॥ १ ॥

वृत्रघातं वाजिमेधफलञ्च यद्यथा वदसि तदेवमेवेत्यन्वयः ॥ २ ॥

अथ तस्य परिपूर्णाश्वमेधत्वाहत्वज्ञापनायाह,—श्रूयते इति । वाह्लिर्देशविशेषः ॥ ३ ॥ ४ ॥ ५ ॥

अबिभ्यंश्च यथो लोकाः सरोषस्य महात्मनः ॥ ६ ॥
स राजा तादृशोऽप्यासीद्धर्मे वीर्य्ये च निष्ठितः ।
बुद्ध्या च परमोदारो वाह्लीकेशो महायशाः ॥ ७ ॥
स प्रचक्रे महाबाहुर्मृगयां रुचिरे वने ।
चैत्रे मनोरमे मासे सभृत्यबलवाहनः ॥ ८ ॥
प्रजघ्ने स नृपोऽरण्ये मृगाञ्छतसहस्रशः ।
हत्वैव तृप्तिर्नाभूच्च राज्ञस्तस्य महात्मनः ॥ ९ ॥
नानामृगानामयुतं वध्यमानं महात्मना ।
यत्र यातो महासेनस्तं देशमुपचक्रमे ॥ १० ॥
तस्मिन् प्रदेशे देवेशः शैलराजसुतां हरः ।
रमयामास दुर्धर्षः सर्वैरनुचरैः सह ॥ ११ ॥
कृत्वा स्त्रीरूपमात्मानमुमेशो गोपतिध्वजः ।
देव्याः प्रियचिकीर्षुः सन् तस्मिन् पर्वतनिर्झरे ॥ १२ ॥

भयार्त्तत्वं कुतस्तत्राह।बिभ्यन्निति । अबिभयुरित्यर्थः । तत्र हेतुः । सरोषस्येति ॥ ६ ॥ ७ ॥ ८ ॥

हत्वैव । हत्वापीत्यर्थः ॥ ९ ॥

अयुतमयुतसंख्याकं वध्यमानमभूदिति शेषः । अथ यत्र महासेनः स्कन्दोजातस्तं देशमुपचक्रमे जगाम ॥ १० ॥ ११ ॥

गोपतिध्वजो वृषभध्वज आत्मानं स्त्रीरूपं कृत्वा तत्र पर्वते तिष्ठतीति शेषः । किमर्थमेवं तत्राह,—देव्याः प्रियं चिकीर्षुरिति ॥ १२ ॥

यत्र यत्र वनोद्देशे सत्त्वाः पुरुषवादिनः।
वृक्षाः पुरुषनामानस्ते सर्वे स्त्रीजनाभवन्॥ १३॥
यच्च किञ्चन तत् सर्वं नारीसंज्ञं बभूव ह।
एतस्मिन्नन्तरे राजा स इलः कर्दमात्मजः॥ १४॥
निघ्नन् मृगसहस्राणि तं देशमुपचक्रमे।
स दृष्ट्वा स्त्रीकृतं सर्वं सव्यालमृगपक्षिणम्॥ १५॥
आत्मानं स्त्रीकृतञ्चैव सानुगं रघुनन्दन!।
तस्य दुःखं महच्चासीद् दृष्ट्वात्मानं तथागतम्॥ १६॥
उमापतेश्च तत् कर्म ज्ञात्वा त्रासमुपागमत्।
ततो देवं महात्मानं शितिकण्ठं कपर्दिनम्॥ १७॥
जगाम शरणं राजा सभृत्यबलवाहनः।
ततः प्रहस्य वरदः सह देव्या महेश्वरः॥ १८॥
प्रजापतिसुतं वाक्यमुवाच वरदः स्वयम्।
उत्तिष्ठोत्तिष्ठ राजर्षे! कार्दमेय महाबल!॥ १९॥

पुरुषवादिनः पुरुष इति वादो व्यपदेशो येषान्ते। पुंलिङ्गत्वेन शब्दवाच्या ये पदार्थाः सन्ति। यच्चान्यत् किञ्चन नपुंसकवाच्यं तत् सर्वं नारीसंज्ञं स्त्रीलिङ्गशब्दवाच्यत्वार्हं स्त्रीवेषं बभूव॥ १३। १४॥ १५।

सानुगमात्मानं स्त्रीकृतं स्त्रीरूपं कृतं दृष्ट्वा आत्मानं तथागतं तथावस्थां प्राप्तमात्मानं दृष्ट्वा। इदमुत्तरान्वयि। १६।

तच्च आत्मनस्तादृश्यावस्थाप्राप्तिरूपमुमापतेः कर्म तदिच्छावशप्राप्तं ज्ञात्वा। १७। १८। १९।

पुरुषत्वमृते सौम्य ! वरं वरय सुव्रत ! ।
ततः स राजा शोकार्त्तः प्रत्याख्यातो महात्मना ॥ २० ॥
स्त्रीभूतोऽसौ न जग्राह वरमन्यं सुरोत्तमात् ।
ततः शोकेन महता शैलराजसुतां नृपः ॥ २१ ॥
प्रणिपत्य उमां देवीं सर्वेणैवान्तरात्मना ।
ईशे वराणां वरदे ! लोकानामसि भामिनी ॥ २२ ॥
अमोघदर्शने देवि ! भज सौम्येन चक्षुषा ।
हृद्गतं तस्य राजर्षेर्विज्ञाय हरसन्निधौ ॥ २३ ॥
प्रत्युवाच शुभं वाक्यं देवी रुद्रस्य सम्मता ।
अर्धस्य देवो ! वरदो वरार्धस्य तव ह्यहम् ॥ २४ ॥
तस्मादर्धं गृहाण त्वं स्त्रीपुंसोर्यावदिच्छसि ।
तदद्भुततरं श्रुत्वा देव्या वरमनुत्तमम् ॥ २५ ॥

पुरुषत्वमृते तद्विना । प्रत्याख्यातः । पुरुषत्वप्राप्तेरिति शेषः ॥ २० ॥ न च जग्राह स्त्रीभूत इति पाठे गुरुवैषम्यमार्षम् । अन्यं वरं पुंस्त्वातिरिक्तं वरं न जग्राह । अन्यद्वाक्यमिति पाठ पुंस्त्वातिरिक्त-वरदातृवाक्यं न जग्राहेत्यर्थः ॥ २१ ॥

सर्वेणैवान्तरात्मना मनोबुद्ध्यभिमानलक्षणेन सर्वेणान्तःकरणेन प्रणिपत्य । साष्टाङ्गं प्रणिपत्येत्यर्थः । वराणामीशे अतएव लोकानां वरदे त्वं भामिनी असि ॥ २२ ॥

अतोऽमोघेत्यादि । सौम्येन चक्षुषाऽनुग्रहचक्षुषा । मां भजानुगृहाण ॥ २३ ॥ २४ ॥

संप्रहृष्टमना भूत्वा राजा वाक्यमथाब्रवीत्।
यदि देवि! प्रसन्ना मे रूपेणाप्रतिमा भुवि ॥ २६ ॥
मासं स्त्रीत्वमुपासित्वा मासं स्यां पुरुषः पुनः।
ईप्सितं तस्य विज्ञाय देवी सुरुचिरानना ॥ २७ ॥
प्रत्युवाच शुभं वाक्यमेवमेव भविष्यति।
राजन्! पुरुषभूतस्त्वं स्त्रीभावं न स्मरिष्यसि ॥ २८ ॥
स्त्रीभूतश्च परं मासं न स्मरिष्यसि पौरुषम्।
एवं स राजा पुरुषो मासं भूत्वाथ कार्दमिः ॥ २९ ॥
त्रैलोक्यसुन्दरी नारी मासमेकमिलाभवत् ॥ ३० ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
सप्ताशीतितमः सर्गः ॥ ८७ ॥

स्त्रीपुंसोः। समासान्ता भाव आर्षः। स्त्रीपुंसयोः उभयोरप्यवर-मिच्छसीति शेषः। तत्र वरदोऽर्धस्य वरस्य दाता। वरार्धस्यार्धं दात्री। तस्माद्यावदिच्छसि तदर्धं मत्तो गृहाण ॥ २५ ॥ २६ ॥

उपासित्वा प्राप्य ॥ २७ ॥

देवीस्ततोऽनुग्रहान्तरं करोति। राजन्निति ॥ २८ ॥

कार्दमिः कर्दमापत्यम् ॥ २९ ॥ ३० ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे सप्ताशीतितमः सर्गः ॥ ८७ ॥

---

## अष्टाशीतितमः सर्गः ।



तां कथामैलसम्बद्धां रामेण समुदीरिताम् ।
लक्ष्मणो भरतश्चैव श्रुत्वा परमविस्मितौ ॥ १ ॥
तौ रामं प्राञ्जलीभूत्वा तस्य राज्ञो महात्मनः ।
विस्तरं तस्य भावस्य तदा पप्रच्छतुः पुनः ॥ २ ॥
कथं स राजा स्त्रीभूतो वर्त्तयामास दुर्गतिः ।
पुरुषः स यदा भूतः कां वृत्तिं वर्त्तयत्यसौ ॥ ३ ॥
तयोस्तद्भाषितं श्रुत्वा कौतूहलसमन्वितम् ।
कथयामास काकुत्स्थस्तस्य राज्ञो यथागमम् ॥ ४ ॥
तमेव प्रथमं मासं स्त्रीभूत्वा लोकसुन्दरी ।
ताभिः परिवृता स्त्रीभिर्येऽस्य पूर्वं पदानुगाः ॥ ५ ॥
तत् काननं विगाह्याशु विजह्रे लोकसुन्दरी ।

अथ कथावशेषप्रश्ने तत् प्रतिपादनम् । तां कथामिति ॥ १ ॥

तस्य राज्ञ इलस्य । तस्य भावस्य स्त्रीपुंसभावस्य ॥ २ ॥

स्त्रीभूतोऽतएव दुर्गतिः कथं वर्त्तयामास । तत्कालमिति शेषः । तथा पुरुषभूतोऽसौ कां वृत्तिं वर्त्तयति ॥ ३ ॥

यथागमं यथाप्राप्तम् ॥ ४ ॥

द्रुमगुल्मलताकीर्णं पद्भ्यां पद्मदलेक्षणा ॥ ६ ॥
वाहनानि च सर्वाणि सन्त्यक्त्वा वै समन्ततः।
पर्वताभोगविवरे तस्मिन् रेमे इला तदा ॥ ७ ॥
अथ तस्मिन् वनोद्देशे पर्वतस्याविदूरतः।
सरः सुरुचिरप्रख्यं नानापक्षिगणायुतम् ॥ ८ ॥
ददर्श सा इला तस्मिन् बुधं सोमसुतं तदा।
ज्वलन्तं स्वेन वपुषा पूर्णं सोममिवोदितम् ॥ ९ ॥
तपन्तञ्च तपस्तीव्रमम्भो मध्ये दुरासदम्।
यशस्करं कामकरं कारुण्ये पर्य्यवस्थितम् ॥ १० ॥
सा तं जलाशयं सर्वं क्षोभयामास विस्मिता।
सह तैः पूर्वपुरुषैः स्त्रीभूतै रघुनन्दन ! ॥ ११ ॥
बुधस्तु तां समीक्ष्यैव कामबाणवशं गतः।
नोपलेभे तदात्मानं स चचाल तदाम्भसि ॥ १२ ॥

लोकसुन्दरी लोकेभ्यः सर्वस्त्रीलोकेभ्यः सुन्दरी। एवम्भूतापि सा स्त्रीपरिवृता। कास्ताः स्त्रियस्तत्राह,—येऽस्येति ॥ ५ ॥ ६ ॥

पर्वतानामाभोगो विस्तारस्तस्य विवरे पर्वतमध्यप्रदेशे ॥ ७ ॥

पर्वतस्याविदूरतः सरो ददर्शेत्यन्वयः। यत्रेश्वराश्रया स्त्रीत्वप्राप्तिस्ततः परस्मिन्नविदूरे प्रदेशे इत्यर्थः। अतएव बुधस्य सरसि तपस्यतः स्त्रीत्वाप्राप्तिरिति बोध्यम् ॥ ८ ॥ ९ ॥ १० ॥

जलाशयं क्षोभयामास ; क्रीडयेति शेषः ॥ ११ ॥

इलां निरीक्षमाणस्तु त्रैलोक्यादधिकां शुभाम् ।
चित्तं समभ्यतिक्रामत् कान्वियं देवताधिका ॥ १३ ॥
न देवीषु न नागीषु नासुरीष्वप्सरःसु च ।
दृष्टपूर्वा मया काचिद्रूपेणानेन शोभिता ॥ १४ ॥
सदृशीयं मम भवेत् यदि नान्यपरिग्रहः ।
इति बुद्धिं समास्थाय जलात् कूलमुपागमत् ॥ १५ ॥
आश्रमं समुपागम्य ततस्ताः प्रमदोत्तमाः ।
शब्दापयत धर्मात्मा ताश्चैनञ्च ववन्दिरे ॥ १६ ॥
स ताः पप्रच्छ धर्मात्मा कस्यैषा लोकसुन्दरी ।
किमर्थमागता चैव सर्वमाख्यात मा चिरम् ॥ १७ ॥
शुभन्तु तस्य तद्वाक्यं मधुरं मधुराक्षरम् ।
श्रुत्वा स्त्रियश्च ताः सर्वा ऊचुर्मधुरया गिरा ॥ १८ ॥

आत्मानं नोपलेभे आत्मध्यानं न प्राप्तवान् काममोहपरवश-चित्तोऽभूदित्यर्थः । अम्भसि स्थितः स चचाल ॥ १२ ॥

चित्तं समभ्यतिक्रामत् । इलायामिति शेषः । इलाविषयचिन्तां प्राप्तमभूदित्यर्थः ॥ १३ ॥ १४ ॥

यदि नान्यपरिग्रहः अन्यपरिग्रहत्वरहिता ॥ १५ ॥

शब्दापयत व्याह्वयत ॥ १६ ॥ १७ ॥

मधुरं सन्ध्यादिकृतश्रुतिकटुत्वरहितम् । मधुराक्षरं टवर्गादि-रहितम् ॥ १८ ॥

अस्माकमेषा सुश्रोणी प्रभुत्वे वर्त्तते सदा।
अपतिः काननान्तेषु सहास्माभिश्चरत्यसौ ॥ १९ ॥
तद्वाक्यमाव्यक्तपदं तासां स्त्रीणां निशम्य च।
विद्यामावर्त्तनीं पुण्यामावर्त्तयति स द्विजः ॥ २० ॥
सोऽर्थं विदित्वा सकलं तस्य राज्ञो यथातथा।
सर्वा एव स्त्रियस्ताश्च बभाषे मुनिपुङ्गवः ॥ २१ ॥
अत्र किम्पुरुषीर्भूत्वा शैलरोधसि वत्स्यथ।
आवासस्तु गिरावस्मिन् शीघ्रमेव विधीयताम् ॥ २२ ॥
मूलपत्रफलैः सर्वा वर्त्तयिष्यथ नित्यदा।
स्त्रियः किम्पुरुषान्नाम भर्त्तॄन् समुपलप्स्यथ ॥ २३ ॥

अपतिः पतिहीना ॥ १९ ॥

आव्यक्तपदम् आसमन्ताद्व्यक्तानि पदानि यत्र तत्। आवर्त्तनी विद्या सांग्रहणीपर्य्यायनामिका संवर्त्तविद्या ताम् आवर्त्तयति स्म। तद्विद्यैकसाध्यप्रकृतप्रयोजनार्थमिति शेषः ॥ २० ॥

राज्ञः सकलमर्थं वृत्तान्तं विदित्वा। ध्यानयोगेन इति शेषः। ताः स्त्रियः। इलाव्यतिरिक्ता इति शेषः ॥ २१ ॥

किम्पुरुषीर्भूत्वा किम्पुरुषाख्यदेवयोनिस्त्रियो भूत्वात्रास्मिन् शैल-रोधसि वत्स्यथ। अस्मिन् गिरौ आवास उटजादिः शीघ्रमेव विधीयताम् ॥ २२ ॥

स्त्रियः किम्पुरुषस्त्रियो यूयं किम्पुरुषान्नाम प्रसिद्धान् भर्तॄन् उपलप्स्यथान्विष्य प्राप्स्यथेत्यर्थः ॥ २३ ॥

ताः श्रुत्वा सोमपुत्रस्य स्त्रियः किम्पुरुषीकृताः ।
उपासाञ्चक्रिरे शैलं बध्वस्ता बहुलास्तदा ॥ २४ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
अष्टाशीतितमः सर्गः ॥ ८८ ॥

किम्पुरुषीकृताः बुधेन योगबलात् किम्पुरुषस्त्रीकृताः । शैलमुप शैलसमीपे आसाञ्चक्रिरे ॥ २४ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे अष्टाशीतितमः सर्गः ॥ ८८ ॥

---

## एकोननवतितमः सर्गः ।



श्रुत्वा किम्पुरुषोत्पत्तिं लक्ष्मणो भरतस्तथा ।
आश्चर्य्यमिति च ब्रूतामुभौ रामं जनेश्वरम् ॥ १ ॥
अथ रामः कथामेतां भूय एव महायशाः ।
कथयामास धर्मात्मा प्रजापतिसुतस्य वै ॥ २ ॥
सर्वास्ता विद्रुता दृष्ट्वा किन्नरीर्ऋषिसत्तमः ।
उवाच रूपसम्पन्नां तां स्त्रियं प्रहसन्निव ॥ ३ ॥
सोमस्याहं सुदयितः सुतः सुरुचिरानने ! ।
भजस्व मां वरारोहे ! भक्त्या स्निग्धेन चक्षुषा ॥ ४ ॥
तस्य तद्वचनं श्रुत्वा शून्ये स्वजनवर्जित ।
इला सुरुचिरप्रख्यं प्रत्युवाच महाप्रभम् ॥ ५ ॥

श्रुत्वेति । किम्पुरुषोत्पत्तिं किम्पुरुषजातित्वेन तासां स्त्रीणामुत्पत्तिम् । ब्रूतामब्रूताम् ॥ १ ॥ २ ॥

विद्रुताः गता दृष्ट्वा । विद्रुता इति पाठान्तरम् । प्रहसन्निव सर्वासां स्वबुद्ध्या निराकरणात् प्रहासः ॥ ३ ॥

भक्त्याऽनुरागेण स्निग्धं स्नेहयुक्तं न केवलं चक्षुषैव तथाभूतम् ॥ ४ ॥ ५ ॥

अहं कामचरी सौम्य! तवास्मि वशवर्त्तिनी।
प्रशाधि मां सोमसुत! यथेच्छसि तथा कुरु ॥ ६ ॥
तस्यास्तदद्भुतप्रख्यं श्रुत्वा हर्षमुपागतः।
स वै कामी सह तया रेमे चन्द्रमसः सुतः ॥ ७ ॥
बुधस्य माधवो मासस्तामिलां रुचिराननाम्।
गतो रमयतोऽत्यर्थं क्षणवत्तस्य कामिनः ॥ ८ ॥
अथ मासे तु सम्पूर्णे पूर्णेन्दुसदृशाननः।
प्रजापतिसुतः श्रीमान् शयने प्रत्यबुध्यत ॥ ९ ॥
सोऽपश्यत् सोमजं तत्र तपन्तं सलिलाशये।
ऊर्ध्वबाहुं निरालम्बं तं राजा प्रत्यभाषत ॥ १० ॥
भगवन्! पर्वतं दुर्गं प्रविष्टोऽस्मि सहानुगः।
न च पश्यामि तत् सैन्यं क्व नु ते मामका गताः ॥ ११ ॥
तच्छ्रुत्वा तस्य राजर्षेर्नष्टसंज्ञस्य भाषितम्।
प्रत्युवाच शुभं वाक्यं सान्त्वयन् परया गिरा ॥ १२ ॥
अश्मवर्षेण महता भृत्यास्ते विनिपातिताः।

कामचरी स्वतन्त्रा ॥ ६ ॥ ७ ॥ ८ ॥
प्रजापतिसुत इलः ॥ ९ ॥ १० ॥
विस्मृतस्वकास्त्रीत्वादिवृत्तान्तः पृच्छति। भगवन्निति ॥ ११ ॥
नष्टसंज्ञस्य। देवीप्रसादवशादिति भावः ॥ १२ ॥

लब्धाश्रमपदे सुप्तो वातवर्षभयार्दितः ॥ १३ ॥
समाश्वसिहि भद्रं ते निर्भयो विगतज्वरः।
फलमूलाशनो वीर! निवसेह यथासुखम् ॥ १४ ॥
स राजा तेन वाक्येन प्रत्याश्वस्तो महामतिः।
प्रत्युवाच शुभं वाक्यं दीनो भृत्यजनक्षयात् ॥ १५ ॥
त्यक्ष्याम्यहं स्वकं राज्यं नाहं भृत्यैर्विनाकृतः।
वर्त्तयेयं क्षणं ब्रह्मन्! समनुज्ञातुमर्हसि ॥ १६ ॥
सुतो धर्मपरो ब्रह्मन्! ज्येष्ठो मम महायशाः।
शशबिन्दुरिति ख्यातः स मे राज्यं प्रपत्स्यते ॥ १७ ॥
न हि शक्ष्याम्यहं हित्वा भृत्यदारान् सुखान्वितान्।
प्रतिवक्तुं महातेजः किञ्चिदप्यशुभं वचः ॥ १८ ॥

अश्मवर्षेणेति मायावचनमीश्वरवाक्यानुरोधेनेति कतकः ॥ १३ ॥
॥ १४ ॥

तेन वाक्येनेति। इह यथासुखं वसेति वाक्येन ॥ १५ ॥

अहं भृत्यैर्विनाकृतोऽपि स्वकं राज्यं न त्यक्ष्यामि त्यक्तुं न शक्नोमि। इह वासत इति शेषः। अतो हे ब्रह्मन्निह क्षणमपि न वर्त्तयेयम्। नञ इहानुकर्षः। तस्मात् मां गमनाय समनुज्ञातुमर्हसि ॥ १६ ॥

उक्तमेव राज्योत्कण्ठाप्रदर्शनायाह,—सुत इति। प्रपतस्यते। मम राज्यं प्रतिगमनाभावे इति शेषः ॥ १७ ॥

तथा ब्रुवति राजेन्द्रे बुधः परममद्भुतम्।
सान्त्वपूर्वमथोवाच वासस्त इह रोचताम्॥ १९॥
न सन्तापस्त्वया कार्य्यः कार्द्दमेय महाबल!।
संवत्सरोषितस्याद्य कारयिष्यामि ते हितम्॥ २०॥
तस्य तद्वचनं श्रुत्वा बुधस्याक्लिष्टकर्मणः।
वासाय विदधे बुद्धिं यदुक्तं ब्रह्मवादिना॥ २१॥
मासं स स्त्री तदा भूत्वा रमयत्यनिशं सदा।
मासं पुरुषभावेन धर्मबुद्धिञ्चकार सः॥ २२॥
ततः सा नवमे मासि इला सोमसुतात् सुतम्।
जनयामास सुश्रोणी पुरूरवसमूर्जितम्॥ २३॥

सुखान्वितान् देशस्थान् भृत्यदारान् हित्वाहं न शक्ष्यामि। इह-स्थातुमिति शेषः। यदेवमतो मां प्रति किञ्चिदप्यशुभम् इह वास-नियोगलक्षणानिष्टं वक्तुं नार्हसीति शेषः॥ १८॥

अद्भुतमागम्याद्भुतकर्मसिद्धिजनकं परमं वचः सान्त्वपूर्वं तव किञ्चित्कालवासेन 'सुखं भविष्यती'त्येवंवादपूर्वं ते इह वासो रोच-तामित्युवाच॥ १९॥ २०॥

यदुक्तं ब्रह्मवादिना तस्य तद्वचनं श्रुत्वेति सम्बन्धः॥ २१॥ २२॥

नवमे मासीति। न चैवं मध्ये पुरुषत्वावस्थायां गर्भदर्शनेन पूर्वा-वस्थास्मरणाभावरूपपार्वतीवरान्यथाभावापत्तिः। तद्वरबलादेव विद्य-मानस्यापि गर्भस्यानेनाज्ञानमिति कल्पनेनादोषात्। एतदनुपपत्त्यैव

जातमात्रे तु सुश्रोणी पितुर्हस्ते न्यवेशयत् ।
बुधस्य समवर्णञ्च दृष्ट्वा पुत्रं महाबलम् ॥ २४ ॥
बुधस्तु पुरुषीभूतं स वै संवत्सरान्तरम् ।
कथाभी रमयामास धर्मयुक्ताभिरात्मवान् ॥ २५ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
एकोननवतितमः सर्गः ॥ ८९ ॥

बुधस्य समागममारभ्य नवमे मासि सद्य एव गर्भग्रहणप्रसवाविति तीर्थः ॥ २३ ॥

जातमात्रं तत्क्षण एव पितृसमानाकारम् । पितृहस्ते उपनयनादिसत्कार्थं न्यवेदयत् स्थापितवती ॥ २४ ॥

संवत्सरान्तरं संवत्सरान्तरप्राप्त्यपेक्षितावशिष्टमासत्रयपर्यन्तम् ॥२५॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे एकोननवतितमः सर्गः ॥ ८९ ॥

---

## नवतितमः सर्गः ।



तथोक्तवति रामे तु तस्य जन्म तदद्भुतम् ।
उवाच लक्ष्मणो भूयो भरतश्च महायशाः ॥ १ ॥
इला सा सोमपुत्रस्य संवत्सरमथोषिता ।
अकरोत् किं नरश्रेष्ठ ! तत्त्वं शंसितुमर्हसि ॥ २ ॥
तयोस्तद्वाक्यमाधुर्य्यं निशम्य परिपृच्छतोः ।
रामः पुनरुवाचेदं प्रजापतिसुते कथाम् ॥ ३ ॥
पुरुषत्वं गते शूरे बुधः परमबुद्धिमान् ।
संवर्त्तं परमोदारमाजुहाव महायशाः ॥ ४ ॥
च्यवनं भृगुपुत्रञ्च मुनिञ्चारिष्टनेमिनम् ।
प्रमोदनं मोदकरं ततो दुर्वाससं मुनिम् ॥ ५ ॥
एतान् सर्वान् समानीय वाक्यज्ञस्तत्त्वदर्शनः ।
उवाच सर्वान् सुहृदो धैर्य्येण सुसमाहितान् ॥ ६ ॥

तस्य जन्म पुरूरवसः ॥ १ ॥

सोमपुत्रस्य । समीप इति शेषः । किमकरोत् संवत्सरानन्तरमिति शेषः । पुरूरवसः शशबिन्दोश्च तत् पुत्रतया पश्चाज्जातपुरूरवसो राज्यमभूत्रवेति प्रश्नार्थः ॥ २ ॥

प्रजापतिसुते तद्विषयाम् ॥ ३ ॥ ४ ॥ ५ ॥

सुहृदः स्वमित्रभूतान् ॥ ६ ॥

अयं राजा महाबाहुः कर्दमस्य इलः सुतः।
जानीतैनं यथाभूतं श्रेयो ह्यत्र विधीयताम् ॥ ७ ॥
तेषां संवदतामेव द्विजैः सह महात्मभिः।
कर्दमस्तु महातेजास्तदाश्रममुपागमत् ॥ ८ ॥
पुलस्त्यश्च क्रतुश्चैव वषट्कारस्तथैव च।
ओङ्कारश्च महातेजास्तमाश्रममुपागमन् ॥ ९ ॥
ते सर्वे हृष्टमनसः परस्परसमागमे।
हितैषिणो बाह्लिपतेः पृथग्वाक्यान्यथाब्रुवन् ॥ १० ॥
कर्दमस्त्वब्रवीद्वाक्यं सुतार्थं परमं हितम्।
द्विजाः शृणुत मद्वाक्यं यच्छ्रेयः पार्थिवस्य हि ॥ ११ ॥
नान्यं पश्यामि भैषज्यमन्तरा वृषभध्वजम्।
नाश्वमेधात् परो यज्ञः प्रियश्चैव महात्मनः ॥ १२ ॥
तस्माद्यजामहे सर्वे पार्थिवार्थे दुरासदम्।
कर्दमेनैवमुक्तास्तु सर्वे एव द्विजर्षभाः ॥ १३ ॥
रोचयन्ति स्म तं यज्ञं रुद्रस्याराधनं प्रति।
संवर्त्तस्य तु राजर्षिः शिष्यः परपुरञ्जयः ॥ १४ ॥

यथाभूतम् ईश्वराज्ञयाऽनुभवसिद्धं स्त्रीपुंसरूपप्रकारद्वयं प्राप्तमेनं जानीत ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

वृषभध्वज एव स्वकृतशापनिवर्त्तनसमर्थस्तत्प्रीतिश्चाश्वमेधेन सर्वदेवताप्रीतिकरेणैवेत्याह,—नान्यमिति। नान्यं भैषज्यं पश्यामि।

मरुत्त इति विख्यातस्तं यज्ञं समुपाहरत् ।
ततो यज्ञो महानासीत् बुधाश्रमसमीपतः ॥ १५ ॥
रुद्रश्च परमं तोषमाजगाम महायशाः ।
अथ यज्ञे समाप्ते तु प्रीतः परमया मुदा ॥ १६ ॥
उमापतिर्द्विजान् सर्वानुवाच इलसन्निधौ ।
प्रीतोऽस्मि हयमेधेन भक्त्या च द्विजसत्तमाः ॥ १७ ॥
अस्य वाह्लिपतेश्चैव किं करोमि प्रियं शुभम् ।
तथा वदति देवेशे द्विजास्ते सुसमाहिताः ॥ १८ ॥
प्रसादयन्ति देवेशं यथास्यात् पुरुषस्त्विला ।
ततः प्रीतो महादेवः पुरुषत्वं ददौ पुनः ॥ १९ ॥

नान्यमित्यतद्विदृशोति । अन्तरा वृषभध्वजम् । नाश्वमेधात् परो यज्ञः । राज्ञां ब्रह्महत्यान्तसर्वपापनिवर्त्तकत्वादिति भावः । नन्वश्वमेधेन कथं वृषभध्वजसन्तोषोऽत आह,—प्रिय एव महात्मनः । यद्यपि प्रजापतिदैवत्यत्वात् प्रजापतिप्रीतिकरः स तथापि हिरण्यगर्भावस्थाविशिष्टस्यैव रुद्रत्वान्न दोषः ॥ १२ ॥ १३ ॥ १४ ॥

तं यज्ञं समुपाहरत् । इलयज्ञापेक्षितसम्भारमुपाहृतवानित्यर्थः ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

देवेशं प्रसादयन्ति स्म पुरुषत्वं विनान्यं वरं वृणोष्वेति पूर्ववद्यथा न वदेत्तथा विशिष्य प्रसन्नमकुर्वन्नित्यर्थः । तदेवोक्तम् । यथास्यादिति ॥ १९ ॥ २० ॥

इलायै सुमहातेजा इला चान्तरधीयत ।
निवृत्ते हयमेधे च गते चादर्शनं हरे ॥ २० ॥
यथागतं द्विजाः सर्वे ते गच्छन् दीर्घदर्शिनः ।
राजा तु बाह्लिमुत्सृज्य मध्यदेशे ह्यनुत्तमम् ॥ २१ ॥
निवेशयामास पुरं प्रतिष्ठानं यशस्करम् ।
शशबिन्दुश्च राजर्षिर्बाह्लिं परपुरञ्जयः ॥ २२ ॥
प्रतिष्ठाने इलो राजा प्रजापतिसुतो बली ।
स काले प्राप्तवान् लोकमिलो ब्राह्ममनुत्तमम् ॥ २३ ॥
ऐलः पुरूरवा राजा प्रतिष्ठानमवाप्तवान् ।
ईदृशो ह्यश्वमेधस्य प्रभावः पुरुषर्षभ ! ॥ २४ ॥
स्त्रीपूर्वः पौरुषं लेभे यच्चान्यदपि दुर्लभम् ॥ २५ ॥

## इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे नवतितमः सर्गः ॥ ९० ॥

बाह्लिमुत्सृज्य । ज्येष्ठपुत्रशशबिन्द्वधिष्ठितमिति शेषः ॥ २१ ॥
बाह्लिम् । अध्युवासेति शेषः ॥ २२ ॥
बली उवासेति शेषः ॥ २३ ॥ २४ ॥
पौरुषं पुरुषत्वम् ॥ २५ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके उत्तरकाण्डे नवतितमः सर्गः ॥ ९० ॥

## एकनवतितमः सर्गः ।



एतदाख्याय काकुत्स्थो भ्रातृभ्याममितप्रभः ।
लक्ष्मणं पुनरेवाह धर्मयुक्तमिदं वचः ॥ १ ॥
वसिष्ठं वामदेवञ्च जाबालिमथ कश्यपम् ।
द्विजांश्च सर्वप्रवरानश्वमेधपुरस्कृतान् ॥ २ ॥
एतान् सर्वान् समानीय मन्त्रयित्वा च लक्ष्मण ! ।
हयं लक्षणसम्पन्नं विमोक्ष्यामि समाधिना ॥ ३ ॥
तद्वाक्यं राघवेणोक्तं श्रुत्वा त्वरितविक्रमः ।
द्विजान् सर्वान् समाहूय दर्शयामास राघवम् ॥ ४ ॥
ते दृष्ट्वा देवसङ्काशं कृतपादाभिवन्दनम् ।
राघवं सुदुराधर्षमाशीर्भिः समपूजयन् ॥ ५ ॥
प्राञ्जलिः स तदा भूत्वा राघवो द्विजसत्तमान् ।
उवाच धर्मसंयुक्तमश्वमेधाश्रितं वचः ॥ ६ ॥

अथाश्वमेधयागाय नैमिषे भरतप्रेषणम् एतदिति । भ्रातृभ्यामिति चतुर्थी ॥ १ ॥

अश्वमेधपुरस्कृतानश्वमेधप्रयोगसमर्थान् ॥ २ ॥

मन्त्रयित्वा विचार्य्य । समाधिना सावधानचित्ततया हयं विमोक्ष्यामि इति लक्ष्मणमाहेति पूर्वेण सम्बन्धः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

तेऽपि रामस्य तच्छ्रुत्वा नमस्कृत्वा वृषध्वजम् ।
अश्वमेधं द्विजाः सर्वे पूजयन्ति स्म सर्वशः ॥ ७ ॥
स तेषां द्विजमुख्यानां वाक्यमद्भुतदर्शनम् ।
अश्वमेधाश्रितं श्रुत्वा भृशं प्रीतोऽभवत्तदा ॥ ८ ॥
विज्ञाय कर्म तत्तेषां रामो लक्ष्मणमब्रवीत् ।
प्रेषयस्व महाबाहो ! सुग्रीवाय महात्मने ॥ ९ ॥
यथा महद्भिर्हरिभिर्बहुभिश्च वनौकसाम् ।
सार्धमागच्छ भद्रं ते अनुभोक्तुं महोत्सवम् ॥ १० ॥
विभीषणश्च रक्षोभिः कामगैर्बहुभिर्वृतः ।
अश्वमेधं महायज्ञमायात्वतुलविक्रमः ॥ ११ ॥
राजानश्च महाभागा ये मे प्रियचिकीर्षवः ।
सानुगाः क्षिप्रमायान्तु यज्ञभूमीनिरीक्षकाः ॥ १२ ॥
देशान्तरगता ये च द्विजा धर्मसमाहिताः ।
आमन्त्रयस्व तान् सर्वानश्वमेधाय लक्ष्मण ! ॥ १३ ॥
ऋषयश्च महाबाहो ! आहूयन्तां तपोधनाः ।
देशान्तरगताः सर्वे सदाराश्च द्विजातयः ॥ १४ ॥

वृषध्वजं रुद्रम् । चेताग्निरूपत्वाद्रुद्रस्य यज्ञनिर्विघ्नार्थं तन्नमस्कारः ॥ ७ ॥ ८ ॥

तत् कर्म विज्ञाय तत् कर्मकरणाङ्गीकारं विज्ञाय ॥ ९ ॥

महद्भिर्हरिभिर्हनुमदादिभिः । बहुभिश्च वनौकसाम् अनुचर-

तथैव तालावचरास्तथैव नटनर्त्तकाः ।
यज्ञवाटश्च सुमहान् गोमत्या नैमिषे वने ॥ १५ ॥
आज्ञाप्यतां महाबाहो ! तद्धि पुण्यमनुत्तमम् ।
शान्तयश्च महाबाहो ! प्रवर्त्तन्तां समन्ततः ॥ १६ ॥
शतशश्चापि धर्मज्ञाः क्रतुमुख्यमनुत्तमम् ।
अनुभूय महायज्ञं नैमिषे रघुनन्दन ! ॥ १७ ॥
तुष्टः पुष्टश्च सर्वोऽसौ मानितश्च यथाविधि ।
प्रतियास्यति धर्मज्ञ ! शीघ्रमामन्त्र्यतां जनः ॥ १८ ॥
शतं वाहसहस्राणां तण्डुलानां वपुष्मताम् ।
अयुतं तिलमुद्गस्य प्रयात्वग्रे महाबल ! ॥ १९ ॥

रूपायां बहुभिः समुदायैरित्यर्थः । अनुभोक्तुं द्रष्टुम् । यथा यथा-कालमागच्छ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

तालं गृहीत्वावचराः तालावचराः । नटाः सूत्रधाराः । गोमत्यास्तीर इति शेषः ॥ १५ ॥

आज्ञाप्यतां कार्य्यताम् । तद्धि नैमिषं वनम् ॥ १६ ॥

शतशोऽनेके धर्मज्ञाः नैमिषे महायज्ञं महान्तोऽङ्गभूता यज्ञा यस्य तं क्रतुमुख्यमनुभूय दृष्ट्वा कृतार्था भवन्त्विति शेषः ॥ १७ ॥

अतः शीघ्रमामन्त्र्यतां जनः । स चास्माभिर्मानितः पूजितः संतुष्टः पुष्टश्च भूत्वा प्रतियास्यति ॥ १८ ॥

वपुष्मतां तण्डुलानाम् । अभग्नस्वरूपाणामित्यर्थः । शतं वाहाना-

चणकानां कुलित्थानां माषाणां लवणस्य च।
अतोऽनुरूपं स्नेहञ्च गन्धं संक्षिप्तमेव च॥ २०॥
सुवर्णकोट्यो बहुला हिरण्यस्य शतोत्तराः।
अग्रतो भरतः कृत्वा गच्छत्वग्रे समाधिना॥ २१॥
अन्तरापणवीथ्यश्च सर्वे च नटनर्त्तकाः।
सूदा नार्य्यश्च बहवो नित्यं यौवनशालिनः॥ २२॥
भरतेन तु सार्द्धं ते यान्तु सैन्यानि चाग्रतः।
नैगमान् बालवृद्धांश्च द्विजांश्च सुसमाहिताः॥ २३॥
कर्मान्तिकान् वर्धकिनः कोशाध्यक्षांश्च नैगमान्।
मम मातृस्तथा सर्वाः कुमारान्तःपुराणि च॥ २४॥

मनेकानि सहस्राणि। अनेकलक्षं बलीवर्दादय इत्यर्थः। अयुतं वाहकं पशवः॥ १८॥

अतोऽनुरूपम् उक्तान्नभोजनीयब्राह्मणभोजनानुरूपं स्नेहम्। घृततैलपयोदध्यादिकमित्यर्थः। संक्षिप्तं गन्धम्। अप्रकृष्टमेवेत्यर्थः॥२०॥

हिरण्यस्य रजतस्य। शतोत्तराः। कोट्य इत्यनुकर्षः। समाधिना सावधानतया॥ २१॥

अन्तरा मार्गमध्ये तत्तत्रापेक्षिता आपणवीथ्यस्तत्प्रवर्त्तका वणिज इत्यर्थः। सर्व इति। दुन्दुभीन् समाघ्नन्ति वीणागाथिनो गायत इत्यादिकल्पसूत्रोक्तप्रयोगापेक्षिताः। यौवनशालिन इति। पुमान् स्त्रियेत्येकशेषः॥ २२॥ २३॥

कर्मान्तिकाः किङ्कराः अन्तःपुराणि भरतादीनाम्॥ २४॥

काञ्चनीं मम पत्नीञ्च दीक्षायां ज्ञांश्च कर्मणि ।
अग्रतो भरतः कृत्वा गच्छत्वग्रे महायशाः ॥ २५ ॥
उपकार्य्यां महार्हांश्च पार्थिवानां महौजसाम् ।
सानुगानां नरश्रेष्ठ ! व्यादिदेश महाबलः ॥ २६ ॥
अन्नपानानि वस्त्राणि अनुगानां महात्मनाम् ।

काञ्चनीं काञ्चनमयीम् । दीक्षायां दीक्षानिमित्तम् । कर्मणि ज्ञान् कर्मविषयज्ञानवत ऋषीन् । सोविद्वान् सोमजोऽपि चेत्यमरः । न च पत्न्या अपि यजमानत्वाद्यज्ञस्वामित्वाच्च स्वामिनो यजमानस्य प्रतिनिधिप्रतिषेधात् कथं पत्न्याः प्रतिनिधिः । स्वामिनोऽग्नेर्देवताया'स्य शब्दात् कर्मणश्च प्रतिनिधिर्निवृत्त इत्यापस्तम्बसूत्रात् । स्वामिना यजमानस्य पत्न्या वा इति चेन्न । यस्य भार्य्यान्यदेशस्था नेष्यते पतिनाथवा । अशक्ता प्रतिकूला वा तस्याः प्रतिनिधिक्रियेत्येवंविधे विषये प्रतिनिधेरनुमतत्वात् । अन्ये कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः । अग्निहोत्रमुपासन्ते यावज्जीवमनुव्रताः । सौवर्णीं वा षोड़शपलैर्मांषकैः षोड़शैरपीति स्मृतेश्च । मृतायामपि भार्य्यायां वैदिकीं न त्यजेत् द्विजः । उपाधिनापि तत् कर्म यावज्जीवं समापयेदिति विष्णुस्मृतेश्च । वस्तुतस्तु एषा सौवर्णी न प्रतिनिधिः । देवताप्रतिमास्विव तत्त्वबुद्धिरेव न तु सादृश्यबुद्धिरत्रेति प्रतिनिधित्वाभावात् । किन्तु भगवत ऋषीणाञ्चावाहनादिसामर्थ्येन घटनाकौशलेन च तत्त्वबुद्धेरेवोत्पादात् । पत्नीकर्मनिर्वाहकत्वञ्च तत एव । अतएव काञ्चनीं मम पत्नीमिति सङ्गच्छते । एतेन काम्येष्वश्वमेधादिषु कथं प्रतिनिधिरिति परास्तमित्याहुः ॥ २५ ॥

भरतः स तदा यातः शत्रुघ्नसहितस्तदा ॥ २७ ॥

वानराश्च महात्मानः सुग्रीवसहितास्तदा ।

विप्राणां प्रवराः सर्वे चक्रुश्च परिवेषणम् ॥ २८ ॥

विभीषणश्च रक्षोभिः स्त्रीभिश्च बहुभिर्वृतः ।

ऋषीणामुग्रतपसां पूजाश्चक्रे महात्मनाम् ॥ २९ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
एकनवतितमः सर्गः ॥ ९१ ॥

उपकार्य्या वासस्थानानि । २६ । २७ ॥ २८ ॥ २९ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे एकनवतितमः सर्गः ॥ ९१ ॥

---

# द्विनवतितमः सर्गः ।



ततस्सर्वमखिलेनाशु प्रस्थाप्य भरताग्रजः ।
हयं लक्षणसम्पन्नं कृष्णसारं मुमोच ह ॥ १ ॥
ऋत्विग्भिर्लक्ष्मणं सार्धमश्वे च विनियुज्य च ।
ततोऽभ्यगच्छत् काकुत्स्थः सह सैन्येन नैमिषम् ॥ २ ॥
यज्ञवाटं महाबाहुर्दृष्ट्वा परममद्भुतम् ।
प्रहर्षमतुलं लेभे श्रीमानिति च सोऽब्रवीत् ॥ ३ ॥
नैमिषे वसतस्तस्य सर्व एव नराधिपाः ।
आनिन्युरुपहारांश्च तान् रामः प्रत्यपूजयत् ॥ ४ ॥
अन्नपानादिवस्त्राणि सर्वोपकरणानि च ।

अथाश्वमेधप्रवृत्तिः । तत् सर्वमिति । यागोपकरणं सर्वमित्यर्थः । अखिलेन अन्यूनतया जनेन वा । कृष्णसारमृगसमानवर्णम् । यद्वा । कृष्णवर्णम् सर्वयज्ञपशुभ्यः सारभूतश्चेत्यर्थः ॥ १ ॥

ऋत्विग्भिरिति । तस्य चतुःशता रक्षन्ति यज्ञस्याघाताय । तथा । शतेन राजपुत्रैः सहाध्वर्युः पुरस्तात् प्रत्यङ्.तिष्ठन् प्रोक्षतीति श्रुतेरिति भावः ॥ २ ॥ ३ ॥

उपहारानुपदाः ॥ ४ ॥

भरतः सह शत्रुघ्नो नियुक्तो राजपूजने ॥ ५ ॥
वानराश्च महात्मानः सुग्रीवसहितास्तदा।
परिवेषणञ्च विप्राणां प्रयताः सम्प्रचक्रिरे ॥ ६ ॥
विभीषणश्च रक्षोभिर्बहुभिः सुसमाहितः।
ऋषीणामुग्रतपसां किङ्करः समपद्यत ॥ ७ ॥
उपकार्य्या महार्हाश्च पार्थिवानां महात्मनाम्।
सानुगानां नरश्रेष्ठो व्यादिदेश महाबलः ॥ ८ ॥
एवं सुविहितो यज्ञो ह्यश्वमेधो ह्यवर्त्तत।
लक्ष्मणेन सुगुप्ता सा हयचर्य्या प्रवर्त्तत ॥ ९ ॥
ईदृशं राजसिंहस्य यज्ञप्रवरमुत्तमम्।
नान्यः शब्दो भवत्तत्र हयमेधे महात्मनः ॥ १० ॥
छन्दतो देहि विस्रब्धो यावत्तुष्यन्ति याचकाः।
तावत् सर्वाणि दत्तानि क्रतुमुख्ये महात्मनः ॥ ११ ॥

तेषामेव स्वरूपकथनमन्नेत्यादि। अथ राजसत्कारे भरतशत्रुघ्ननियोगः सुग्रीवादीनां विप्रपरिवेषणे विभीषणस्य ऋषिसत्कारे विनियोग इत्याह,—भरत इत्यादि ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

हयचर्य्या अश्वमेधयागानुष्ठानमित्यर्थ इति तीर्थकतकौ। हयमार्गगमनमित्यर्थमन्ये ॥ ९ ॥

यज्ञप्रवरमुत्तममभवदिति शेषः। याचका यावत्तुष्यन्ति तावद्देहि देहीति शब्दादन्यः शब्दो नाभवत् ॥ १० ॥ ११ ॥

विविधानि च गौड़ानि खाण्डवानि तथैव च ।
न निःसृतं भवत्योष्ठाद्वचनं यावदर्थिनाम् ॥ १२ ॥
तावद्वानररक्षोभिर्दत्तमेवाभ्यदृश्यत ।
न कश्चिन्मलिनो वापि दीनो वाप्यथवा कृशः ॥ १३ ॥
तस्मिन् यज्ञवरे राज्ञो हृष्टपुष्टजनावृते ।
ये च तत्र महात्मानो मुनयश्चिरजीविनः ॥ १४ ॥
नास्मरंस्तादृशं यज्ञं दानौघसमलङ्कृतम् ।
यः कृत्यवान् सुवर्णेन सुवर्णं लभते स्म सः ॥ १५ ॥
वित्तार्थी लभते वित्तं रत्नार्थी रत्नमेव च ।
हिरण्यानां सुवर्णानां रत्नानामथ वाससाम् ॥ १६ ॥
अनिशं दीयमानानां राशिः समुपदृश्यते ।
न शक्रस्य न सोमस्य यमस्य वरुणस्य च ॥ १७ ॥
ईदृशो दृष्टपूर्वो न एवमूचुस्तपोधनाः ।
सर्वत्र वानरास्तस्थुः सर्वत्रैव च राक्षसाः ॥ १८ ॥

सर्वाणि दत्तानीत्यस्यैव प्रपञ्चो विविधानीति । यावदर्थिमुखा-देशोति वचनं न निःसृतं भवति ॥ १२ ॥

तावद्दत्तमेवाभ्यदृश्यत ॥ १३ ॥ १४ ॥

नास्मरंस्तादृशं यज्ञं न चाप्यासीत् कदाचनेति पाठे तादृशयज्ञ इतः पूर्वं नासीदित्याऊरिति शेषः ॥ १५ ॥ १६ ॥

उक्त एवार्थ आदरादभ्यस्यते । न शक्रस्येति ॥ १७ ॥ १८ ॥

वाजिमेधनामकात्मकामेभ्यः पूर्णहस्ता ददुर्धनम्।
ईदृशो राजसिंहस्य यज्ञः सर्वगुणान्वितः।
संवत्सरमथो साग्रं वर्त्तते न च हीयते॥ १९॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
द्विनवतितमः सर्गः॥ ९२॥

वर्त्तते न च हीयते। संवत्सरात्परमपीति शेषः। पुनःपुनरश्व-
मेधः प्रावर्त्ततेत्यर्थः। तावत्पर्य्यन्तमेकाश्वमेधदीक्षेत्यन्ये॥ १९॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे द्विनवतितमः सर्गः॥ ९२॥

---

## त्रिनवतितमः सर्गः ।



वर्त्तमाने तथाभूते यज्ञे च परमाद्भुते ।
सशिष्य आजगामाशु वाल्मीकिर्भगवानृषिः ॥ १ ॥
स दृष्ट्वा दिव्यसङ्काशं यज्ञमद्भुतदर्शनम् ।
एकान्त ऋषिसङ्घातश्चकार उटजान् शुभान् ॥ २ ॥
शकटांश्च बहून् पूर्णान् फलमूलांश्च शोभनान् ।
वाल्मीकिवाटे रुचिरे स्थापयन्नविदूरतः ॥ ३ ॥
सशिष्यावब्रवीद्धृष्टौ युवां गत्वा समाहितौ ।
कृत्स्नं रामायणं काव्यं गायतां परया मुदा ॥ ४ ॥

अथ यज्ञार्थमागतेन वाल्मीकिना कुशलवयो रामायणगाने नियोगः । वर्त्तमाने इति । तथाभूते उक्तप्रकारे ॥ १ ॥

एकान्ते ऋषिवाटानामिति पाठे समीपे इति शेषः । ऋषिसङ्घात इति पाठे वाल्मीकिना सङ्घातो ऋषिसमूह इत्यर्थः । उटजानिति बहुवचनं बहुशिष्यत्वात् ॥ २ ॥

शकटानन्नादिपूर्णान् फलमूलांश्च शोभनान् सर्वतो रुचिरे वाल्मीकिवाटेऽस्थापयन्नित्यर्थः । रुचिरेऽभूदिति शेष इति कतकव्याख्यानुसारी पाठो मृग्यः क्वचित् । शकटैर्बहुभिः पूर्णैः फलमूलैश्च शोभनैः । वाल्मीकिवाटो रुचिरः शोभयन्निव सर्वत इति पाठः स इत्यन्ये ॥ ३ ॥

शिष्यौ कुशलवौ ॥ ४ ॥

ऋषिवाटेषु पुण्येषु ब्राह्मणावसथेषु च।
रथ्यासु राजमार्गेषु पार्थिवानां गृहेषु च ॥ ५ ॥
रामस्य भवनद्वारि यत्र कर्म च कुर्वते।
ऋत्विजामग्रतश्चैव तत्र गेयं विशेषतः ॥ ६ ॥
इमानि च फलान्यत्र स्वादूनि विविधानि च।
जातानि पर्वताग्रेषु आस्वाद्यास्वाद्य गायताम् ॥ ७ ॥
न यास्यथः श्रमं वत्सौ भक्षयित्वा फलान्यथ।
मूलानि च सुमृष्टानि न रागात् परिहास्यथः ॥ ८ ॥
यदि शब्दापयेद्रामः श्रवणाय महीपतिः।
ऋषीणामुपविष्टानां यथायोगं प्रवर्त्तताम् ॥ ९ ॥
दिवसे विंशतिः सर्गा गेया मधुरया गिरा।

रथ्यास्रूपमार्गेषु ॥ ५ ॥

यत्र कर्म। अश्वमेधयाग इत्यर्थः ॥ ६ ॥

अत्रास्मदाश्रमसमीपपर्वताग्रे विद्यमानानि फलान्यास्वाद्य गायताम्। लोट् प्रथमपुरुष द्विवचनम्। यदा यदाश्रमस्तदा तदा भक्षयतामिति शेषः ॥ ७ ॥

फलानि भुक्त्वा न श्रमं यास्यथो नापि रागात् कण्ठमाधुर्यात्परिहास्यथः। नगरात् बहिर्यास्यथ इति पाठे रात्रिकाले इति शेषः। उदजेष्वित्यर्थः। यास्यथः अवतिष्ठेताम्। यासेरार्षत्वन् परस्मैपदे ॥ ८ ॥

शब्दापयेदाह्वापयेत्। ऋषीणामग्रे इति शेषः ॥ ९ ॥

प्रमाणैर्बहुभिस्तत्र यथोद्दिष्टं मया पुरा ॥ १० ॥
लोभस्यापि न कर्त्तव्यः स्वल्पोऽपि धनवाञ्छया।
किं धनेनाश्रमस्थानां फलमूलाशिनां सदा ॥ ११ ॥
यदि पृच्छेत् स काकुत्स्थो युवां कस्येति दारकौ।
वाल्मीकेरथ शिष्यौ द्वौ ब्रूतमेवं नराधिपम् ॥ १२ ॥
इमास्तन्त्रीः सुमधुराः स्थानं वाऽपूर्वदर्शनम्।
मूर्च्छयित्वा सुमधुरं गायतां विगतज्वरौ ॥ १३ ॥
आदि प्रभृति गेयं स्यान्न चावज्ञाय पार्थिवम्।
पिता हि सर्वभूतानां राजा भवति धर्मतः ॥ १४ ॥
तद्युवां हृष्टमनसौ श्वः प्रभाते समाहितौ।
गायतां मधुरं गेयं तन्त्रीलयसमन्वितम् ॥ १५ ॥

दिवसे इति। तत्र रामायणे बहुभिः प्रमाणैर्नानासंख्यश्लोकैर्यथा पुरा मया सर्गादिष्टास्तेषु सर्गेषु दिवसे दिवसे विंशतिसर्गा गेयाः ॥ १० ॥ ११ ॥

आवां वाल्मीकेः शिष्यौ स्व इत्येवमेव ब्रूतं नामुकदारकाविति ॥ १२ ॥

इमाः तन्त्री वीणा शिरा इत्यर्थः। मधुरा मधुरशब्दाः। अपूर्वदर्शनम् अपूर्वाणां स्वराणां दर्शनं यत्र तादृशं स्थानं षड्जादिस्वरभेदसिद्धये वीणादण्डोपरिकल्पितशिराधारकाष्ठपंक्तिरूपं तत्र मूर्च्छयित्वा तत्रापि नादस्थानि कृत्वा सुमधुरं गायताम् ॥ १३ ॥

इति सन्दिश्य बहुशो मुनिः प्राचेतसस्तदा।
वाल्मीकिः परमोदारस्तूष्णीमासीन्महामुनिः ॥ १६ ॥
सन्दिष्टौ मुनिना तेन तावुभौ मैथिलीसुतौ।
तथैव करवावेति निर्जग्मतुररिन्दमौ ॥ १७ ॥
तामद्भुतां तौ हृदये कुमारौ
निवेश्य वाणीमृषिभाषितां तदा।
समुत्सुकौ तौ सुखमूषतुर्निशां
यथाश्विनौ भार्गवनीतिसंहिताम् ॥ १८ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
त्रिनवतितमः सर्गः ॥ ९३ ॥

आदिप्रभृतिसंक्षेपमारभ्येत्यर्थः। पार्थिवं न चावजाय। स्थाना-न्तरइव तत्समीपे सीतापरित्यागादिकं न कर्त्तव्यमित्यर्थः। तत्र हेतुः। पिता ह्येति ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

भार्गवनीतिसंहितामश्विनाविव तौ तां वाणीं हृदये निवेश्य श्वो गातव्यमित्येवंरूपां गातुं समुत्सुकौ निशामूषिवांसौ सन्तौ ऊषतुः ॥ १८ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे त्रिनवतितमः सर्गः ॥ ९३ ॥

# चतुर्नवतितमः सर्गः ।



तौ रजन्यां प्रभातायां स्नातौ हुतहुताशनौ ।
यथोक्तमृषिणा पूर्वं सर्वं तत्रोपगायताम् ॥ १ ॥
तां स शुश्राव काकुत्स्थः पूर्वाचार्य्यविनिर्मिताम् ।
अपूर्वां पाठ्यजातिञ्च गेयेन समलङ्कृताम् ॥ २ ॥
प्रमाणैर्बहुभिर्बद्धां तन्त्रीलयसमन्विताम् ।
बालाभ्यां राघवः श्रुत्वा कौतूहलपरोऽभवत् ॥ ३ ॥
अथ कर्मान्तरे राजा समाहूय महामुनीन् ।
पार्थिवांश्च नरव्याघ्रः पण्डितान्नैगमांस्तथा ॥ ४ ॥

अथ राघवेण परिषदा सह रामायणश्रवणम् । ताविति ॥ १ ॥

पूर्वाचार्य्यविनिर्मितां गायकानां गानसिद्धये पूर्वाचार्य्येण भरतेन निर्मिताम् । पूर्वचर्य्यां ततस्तत इति पाठे ततस्तेऽयोध्यावनादौ कृतं स्वकीयं पूर्वचरितमित्यर्थः । अपूर्वां प्रागश्रुताम् । पाठ्यजातिं पाठ्यस्य गेयस्य जातिं षड्जादिस्वररूपमिति कतकः । पाठ्यजातमिति पठित्वा पाठ्यं नाम गानाधारस्य केवलवाक्यस्य स्वरूपोच्चारणमात्रमिति तीर्थ आह,—गेयेन गानधर्मेण स्वरविशेषेण समलंकृताम् ॥ २ ॥

प्रमाणैर्ध्वनिपरिच्छेदसाधनैर्द्रुतमध्यविलम्बिताख्यैस्त्रिभिः प्रागुक्तस्थानैर्वा युक्तां तां गीतिं शुश्राव । बालाभ्यां गीतां तां श्रुत्वा कौतूहलपरो विस्मयवानित्यर्थः ॥ ३ ॥

पौराणिकान् शब्दविदो ये वृद्धाश्च द्विजातयः।
स्वराणां लक्षणज्ञांश्च उत्सुकान् द्विजसत्तमान्॥ ५॥
लक्षणज्ञांश्च गान्धर्वान्नैगमांश्च विशेषतः।
पादाक्षरसमासज्ञांश्छन्दःसु परिनिष्ठितान्॥ ६॥
कलामात्राविशेषज्ञान् ज्योतिषे च परं गतान्।
क्रियाकल्पविदश्चैव तथा कार्य्यविशारदान्॥ ७॥
हेतूपचारकुशलान् हैतुकांश्च बहुश्रुतान्।
छन्दोविदः पुराणज्ञान् वैदिकान् द्विजसत्तमान्॥ ८॥

कर्मान्तरे अश्वमेधप्रयोगाणां विरामकाले इत्यर्थः॥ ४॥

स्वराणां षड्जादिस्वराणाम्। उत्सुकान् रामायणश्रवणोत्सुकान्॥ ५॥

लक्षणज्ञान् सामुद्रिकलक्षणज्ञान्। गान्धर्वान् सङ्गीतशास्त्रज्ञान्। नैगमान् पौरान्। पादाक्षराणां गुरुलघुप्रयोगलक्षणं समासं सम्बन्धं जानन्ति तान्। छन्दःसु वेदेषु गायत्र्यादिछन्दःप्रतिपादकशास्त्रेषु॥ ६॥

कलाः स्वरास्तेषां मात्रा एकद्वित्रिलक्षणास्तेषां विभागज्ञान्। परं गतान् अन्तर्ज्ञानवतः। क्रियां तत्प्रतिपादकं कल्पसूत्रञ्च विदन्ति ताम्। कार्य्यविशारदान् आवापोद्धारादिकृत्यविशेषज्ञान्॥ ७॥

हेतूपचारकुशलान् केवलव्यवहारकाले युक्तिप्रयोगसमर्थान्। हैतुकान् तार्किकान्। छन्दो गायत्र्यादि। वैदिकान् वैदिकपादादिलक्षणज्ञान्॥ ८॥

चित्रज्ञान् वृत्तसूत्रज्ञान् गीतनृत्यविशारदान् ।
एतान् सर्वान् समानीय गातारौ समवेशयत् ॥ ९ ॥
तेषां संवदतां तत्र श्रोतॄणां हर्षवर्द्धनम् ।
गेयं प्रचक्रतुस्तत्र तावुभौ मुनिदारकौ ॥ १० ॥
ततः प्रवृत्तं मधुरं गान्धर्वमतिमानुषम् ।
न च तृप्तिं ययुः सर्वे श्रोतारो गेयसम्पदा ॥ ११ ॥
हृष्टा मुनिगणाः सर्वे पार्थिवाश्च महौजसः ।
पिबन्त इव चक्षुर्भिः पश्यन्ति स्म मुहुर्मुहुः ॥ १२ ॥
ऊचुः परस्परञ्चेदं सर्व एव समाहिताः ।
उभौ रामस्य सदृशौ बिम्बात् बिम्बमिवोद्धृतौ ॥ १३ ॥
जटिलौ यदि न स्यातां न वल्कलधरौ यदि ।
विशेषं नाधिगच्छामो गायतो राघवस्य च ॥ १४ ॥
एवं प्रभाषमाणेषु पौरजानपदेषु च ।

चित्रज्ञान् गोमूत्रमुरजादिचित्रश्लोकनिबन्धनचतुरान् । वृत्तज्ञान् धर्मशास्त्रमुखेन सदाचारज्ञान् । सूत्राणि पदवाक्यादिसूत्राणि तज्ज्ञान् । एतानिति । एतेनाशेषविद्याख्यानं रामायणमिति दर्शितम् । समवेशयत सर्वपरिषन्मध्ये गानायेति शेषः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

बिम्बाद्दर्पणबिम्बाद्विबिम्बान्तरमिवोद्धृतौ ॥ १३ ॥

जटिलौ वल्कलधरौ यदि न स्यातां तदा राघवस्य गायतोश्च विशेषं नाधिगच्छाम इत्यूचुः ॥ १४ ॥

प्रवृत्तमादितः पूर्वसर्गं नारददर्शितम् ॥ १५ ॥
ततः प्रभृति सर्गांश्च यावत् विंशत्यगायताम्।
ततोऽपराह्णसमये राघवः समभाषत ॥ १६ ॥
श्रुत्वा विंशतिसर्गांस्तान् भ्रातरं भ्रातृवत्सलः।
अष्टादशसहस्राणि सुवर्णस्य महात्मनोः ॥ १७ ॥
प्रयच्छ शीघ्रं काकुत्स्थ! यदन्यदभिकांक्षितम्।
ददौ स शीघ्रं काकुत्स्थो बालयोर्वै पृथक् पृथक् ॥ १८ ॥
दीयमानं सुवर्णन्तु नागृह्णीतां कुशीलवौ।
ऊचतुश्च महात्मानौ किमनेनेति विस्मितौ ॥ १९ ॥
वन्येन फलमूलेन निरतौ वनवासिनौ।
सुवर्णेन हिरण्येन किं करिष्यावहे वने ॥ २० ॥
तथा तयोः प्रब्रुवतोः कौतूहलसमन्विताः।
श्रोतारश्चैव रामस्य सर्व एव सुविस्मिताः ॥ २१ ॥

तत्र गेये नारददर्शितं पूर्वसर्गमादितः प्रवृत्तं कृत्वा ततः प्रभृति यावत् विंशतिसर्गानगायताम्। अनेन प्रत्यहं संक्षेपरामायणमादितः कृत्वा यावद्रामायणसमाप्तिर्विंशतिसर्गाणां गानमिति बोध्यः ॥ १५ ॥ ॥ १६ ॥ १७ ॥ १८ ॥

कुशीलवौ कुशलवौ। विस्मितौ सहसैव बहुदानतो विस्मयवन्तौ ॥ १९ ॥

किमनेनेतिश्लोपाशयमेव स्पष्टीकुरुतः। वन्येनेति। निरतौ निरता-

तस्य चैवागमं रामः काव्यस्य श्रोतुमुत्सुकः ।
पप्रच्छ तौ महातेजास्तावुभौ मुनिदारकौ ॥ २२ ॥
किं प्रमाणमिदं काव्यं का प्रतिष्ठा महात्मनः ।
कर्त्ता काव्यस्य महतः क्व चासौ मुनिपुङ्गवः ॥ २३ ॥
पृच्छन्तं राघवं वाक्यमूचतुर्मुनिदारकौ ।
वाल्मीकिर्भगवान् कर्त्ता सम्प्राप्तो यज्ञसंविधम् ।
येनेदं चरितं तुभ्यमशेषं सम्प्रदर्शितम् ॥ २४ ॥
सन्निबद्धं हि श्लोकानां चतुर्विंशत् सहस्रकम् ।

हारौ । नियताहाराविति यावत् । सुवर्णेन सुवर्णरूपेण हिरण्येन । इत्येकोत्यर्थः ॥ २० ॥ २१ ॥

आगमं कुशलवयोस्तत्प्राप्तिकारणम् । तौ ताविति वीप्सा ॥ २२ ॥

प्रथमदिवसश्रुतविंशतिसर्गमध्ये श्रुतस्यैव प्रमाणाद्यर्थस्यादरात् प्रश्नः पुनस्ताभ्यां प्रतिपादनं मुनिना च तदीयोत्तरत्वेन तत्प्रतिपादकग्रन्थ-ग्रथनं किं प्रमाणमित्यादि । महात्मनः कवेः का प्रतिष्ठा को विषय इत्यर्थः । महात्मनोरिति पाठे महात्मनोर्भवतोः प्रतिष्ठा आश्रयः क इत्यर्थः । कर्त्ता काव्यस्येत्यत्र क इत्यनुकर्षः । क्व चासौ आस्ते इति शेषः ॥ २३ ॥

येन काव्येनाशेषमिदं तुभ्यं तव चरितं संप्रदर्शितं तस्य काव्यस्य कर्त्ता वाल्मीकिः । क्वास्ते इत्यस्योत्तरं संप्राप्तो यज्ञसंविधम् । अनु-स्वार आर्षः । यज्ञसदःसविधदेशं संप्राप्तस्तत्र तिष्ठतीति भावः संविदमिति वा पाठ इति कश्चित् ॥ २४ ॥

उपाख्यानशतञ्चैव भार्गवेण तपस्विना ॥ २५ ॥
आदिप्रभृति वै राजन् ! पञ्चसर्गशतानि च ।
काण्डानि षट् कृतानीह सोत्तराणि महात्मना ॥ २६ ॥
कृतानि गुरुणास्माकमृषिणा चरितं तव ।
प्रतिष्ठा जीवितं यावत्तावत् सर्वस्य वर्त्तते ॥ २७ ॥
यदि बुद्धिः कृता राजन् ! श्रवणाय महारथ ! ।
कर्मान्तरे क्षणीभूतस्तत् शृणुष्व सहानुजः ॥ २८ ॥
बाढ़मित्यब्रवीद्रामस्तौ चानुज्ञाप्य राघवौ ।
प्रहृष्टौ जग्मतुः स्थानं यत्रास्ते मुनिपुङ्गवः ॥ २९ ॥

चतुर्विंशतिसहस्रकमिति काव्यसंख्या । उपाख्यानशतमित्युपाख्यानान्तम् । भार्गवः कविः । काव्यनिर्माणे तत्तुल्येनेत्यर्थः । यद्वा । प्राचेतसत्वेनास्यापि भार्गवत्वम् । भृगोर्वंशप्रसूतत्वात् । भृगोर्भ्राता भार्गव इत्यर्थ इत्यन्ये ॥ २५ ॥

यानि सोत्तराणि षट्काण्डानीह कृतानि । तत्र सर्गसंख्या पञ्चशतानीति उपलभ्यमानसर्गसंख्याधिक्यन्तु केषाञ्चिदेकैकस्य द्विसर्गत्वकरणेन लेखकप्रमादात् । पञ्चसर्गशतानीति षट्काण्डसंख्या चकारादुत्तरकाण्डसर्गसंख्यासमुच्चय इति कश्चित् ॥ २६ ॥

तव चरितमुद्दिश्यास्माकं गुरुणा कृतानि । प्रतिष्ठा आजीवितमिति च्छेदः । काव्यनायकस्य तव जीवितं यावद्यच्छुभाशुभं कर्म तस्य सर्वस्यात्र प्रतिष्ठा निबन्धनं वर्त्तत इत्यर्थः ॥ २७ ॥

रामोऽपि मुनिभिः सार्द्धं पार्थिवैश्च महात्मभिः ।
श्रुत्वा तद्गीतिमाधुर्य्यं कर्मशालामुपागमत् ॥ ३० ॥

शुश्राव तत्तालवयोपपन्नं
सर्गान्वितं स स्वरशब्दयुक्तम् ।
तन्त्रीलयव्यञ्जनयोगयुक्तं
कुशीलवाभ्यां परिगीयमानम् ॥ ३१ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
चतुर्नवतितमः सर्गः ॥ ९४ ॥

हे राजन्नस्य सर्वस्य श्रवणाय श्रवणं कर्त्तुं यदि बुद्धिः कृता । तदा कर्मान्तरे यागप्रयोगविरामसमये क्षणीभूतः सुखीभूतस्त्वच्छृणु । ॥ २८ ॥ २९ । ३० ॥ ३१ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे चतुर्नवतितमः सर्गः ॥ ९४ ॥

## पञ्चनवतितमः सर्गः ।



रामो बहून्यहान्येव तद्गीतं परमं शुभम् ।
शुश्राव मुनिभिः सार्द्धं पार्थिवैः सह वानरैः ॥ १ ॥
तस्मिन् गीते तु विज्ञाय सीतापुत्रौ कुशीलवौ ।
तस्याः परिषदो मध्ये रामो वचनमब्रवीत् ॥ २ ॥
दूतान् शुद्धसमाचारानाहूयात्ममनीषया ।
मद्वचो ब्रूत गच्छध्वमितो भगवतोऽन्तिके ॥ ३ ॥
यदि शुद्धसमाचारा यदि वा वीतकल्मषा ।
करोत्विहात्मनः शुद्धिमनुमान्य महामुनिम् ॥ ४ ॥
छन्दं मुनेश्च विज्ञाय सीतायाश्च मनोगतम् ।

अथ सीतापरिग्रहेच्छया दूतमुखेन कर्त्तव्यांशप्रतिपादनम् । राम इति ॥ १ ॥

तस्मिन् गीते तस्मिन्नेव प्रबन्धे सीताप्रसववृत्तान्तप्रतिपादककाव्यश्रवणेन कुशीलवौ सीतापुत्राविति ज्ञात्वा । न तु ततः पूर्वं कस्यचिन्मुखादित्यर्थः ॥ २ ॥

हे दूता इतो गच्छध्वम् । भगवतोऽन्तिके गत्वा चैतन्मद्वचो ब्रूत ॥३॥

किं तदित्यत आह,—यदीति । सीतेति शेषः । शुद्धसमाचारा अनुत्पन्नदोषा यदिवेति । तपोवनवासेन विनष्टदोषावेत्यर्थः । महामुनिमनुमान्य । तदनुमतिं गृहीत्वेत्यर्थः ॥ ४ ॥

प्रत्ययं दातुकामायास्ततः शंसत मे लघु ॥ ५ ॥
श्वः प्रभाते तु शपथं मैथिली जनकात्मजा ।
करोतु परिषन्मध्ये शोधनार्थं ममैव च ॥ ६ ॥
श्रुत्वा तु राघवस्यैतद्वचः परममद्भुतम् ।
दूताः सम्प्रययुर्वाटं यत्र वै मुनिपुङ्गवः ॥ ७ ॥
ते प्रणम्य महात्मानं ज्वलन्तममितप्रभम् ।
ऊचुस्ते रामवाक्यानि मृदूनि मधुराणि च ॥ ८ ॥
तेषां तद्भाषितं श्रुत्वा रामस्य च मनोगतम् ।
विज्ञाय सुमहातेजा मुनिर्वाक्यमथाब्रवीत् ॥ ९ ॥
एवं भवतु भद्रं वो यथा वदति राघवः ।
तथा करिष्यते सीता दैवतं हि पतिः स्त्रियः ॥ १० ॥
तथोक्ता मुनिना सर्वे राजदूता महौजसः ।
प्रत्येत्य राघवं सर्वे मुनिवाक्यं बभाषिरे ॥ ११ ॥
ततः प्रहृष्टः काकुत्स्थः श्रुत्वा वाक्यं महात्मनः ।

छन्दमभिप्रायम् । प्रत्ययं दातुकामाया मनोगतं प्रत्ययदानं यदि तदा तद्विज्ञाय ततो लघु शीघ्रं मे शंसत ॥ ५ ॥

यद्यपि सीताशुद्धिर्लङ्कायां ज्ञातपूर्वा तथापीदानीं प्राप्तापवाद-मार्जनेन सर्वलोकपुरतो ममैव स्त्रीसौन्दर्यलुब्ध इति कलङ्कशोधनार्थं शुद्धयापि तया पुनः शपथः कार्य्य इत्याह,—श्वः प्रभात इति ॥ ६ ॥ ७ ॥

मृदूनि अपरुषाणि । मधुराणि मधुराक्षराणि ॥ ८ । ९ । १० ॥

ऋषींस्तत्र समेतांश्च राज्ञश्चैवाभ्यभाषत ॥ १२ ॥
भगवन्तः सशिष्या वै सानुगाश्च नराधिपाः।
पश्यन्तु सीताशपथं यश्चैवान्योऽपि काङ्क्षते ॥ १३ ॥
तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः।
सर्वेषामृषिमुख्यानां साधुवादो महानभूत् ॥ १४ ॥
राजानश्च महात्मानः प्रशंसन्ति स्म राघवम्।
उपपन्नं नरश्रेष्ठ ! त्वय्येव भुवि नान्यतः ॥ १५ ॥
एवं विनिश्चयं कृत्वा श्वो भूत इति राघवः।
विसर्जयामास तदा सर्वांस्ताञ्छत्रुसूदनः ॥ १६ ॥

इति सम्प्रविचार्य्य राजसिंहः
श्वो भूते शपथस्य निश्चयम्।
विससर्ज मुनीन् नृपांश्च सर्वान्
स महात्मा महतो महानुभावः ॥ १७ ॥

## इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे पञ्चनवतितमः सर्गः ॥ ९५ ॥

तथोक्ताः सीता तथैव करिष्यति इत्युक्ताः ॥ ११ । १२ ।
यश्चान्योऽपि सीतायां दोषारोपकर्त्ता योऽपि शपथमाकाङ्क्षते
सोऽपि पश्यत्विन्वयः । १३ ॥ १४ । १५ । १६ । १७ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे पञ्चनवतितमः सर्गः ॥ ९५ ॥

---

## षण्णवतितमः सर्गः ।



तस्यां रजन्यां व्युष्टायां यज्ञवाटङ्गतो नृपः ।
ऋषीन् सर्वान् महातेजाः शब्दापयति राघवः ॥ १ ॥
वसिष्ठो वामदेवश्च जाबालिरथकाश्यपः ।
विश्वामित्रो दीर्घतमा दुर्वासाश्च महातपाः ॥ २ ॥
पुलस्त्योऽपि तथा शक्तिर्भार्गवश्चैव वामनः ।
मार्कण्डेयश्च दीर्घायुर्मौद्गल्यश्च महायशाः ॥ ३ ॥
गर्गश्च च्यवनश्चैव शतानन्दश्च धर्मवित् ।
भरद्वाजश्च तेजस्वी अग्निपुत्रश्च सुप्रभः ॥ ४ ॥
नारदः पर्वतश्चैव गौतमश्च महायशाः ।
एते चान्ये च बहवो मुनयः संशितव्रताः ॥ ५ ॥
कौतूहलसमाविष्टाः सर्वे एव समागताः ।
राक्षसाश्च महावीर्य्या वानराश्च महाबलाः ॥ ६ ॥
सर्वे एव समाजग्मुर्महात्मानः कुतूहलात् ।
क्षत्रिया ये च शूद्राश्च वैश्याश्चैव सहस्रशः ॥ ७ ॥
नानादेशगताश्चैव ब्राह्मणाः संशितव्रताः ।

अथ सम्मिलितनानादेशीयपरिषन्मध्ये सीतया सह वाल्मीकिरागत

सीता शपथवीक्षार्थं सर्व एव समागताः ॥ ८ ॥
तदा समागतं सर्वमश्मभूतमिवाचलम् ।
श्रुत्वा मुनिवरस्तूर्णं ससीतः समुपागमत् ॥ ९ ॥
तमृषिं पृष्ठतः सीता अन्वगच्छदवाङ्मुखी ।
कृताञ्जलिर्बाष्पकला कृत्वा रामं मनोगतम् ॥ १० ॥
तां दृष्ट्वा श्रुतिमायान्तीं ब्रह्माणमनुगामिनीम् ।
वाल्मीकेः पृष्ठतः सीतां साधुवादो महानभूत् ॥ ११ ॥
ततो हलहलाशब्दः सर्वेषामेवमाबभौ ।
दुःखजन्मविशालेन शोकेनाकुलितात्मनाम् ॥ १२ ॥
साधु रामेति केचित्तु साधु सीतेति चापरे ।
उभावेव च तत्रान्ये प्रेक्षकाः सम्प्रचुक्रुशुः ॥ १३ ॥
ततो मध्ये जनौघस्य प्रविश्य मुनिपुङ्गवः ।

तत्त्वभूतार्थप्रत्यभिज्ञापनं करोति । तस्यामिति । शब्दापयति आकारयति स्म । १ ॥ २ ॥ २ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

अश्मभूतमिवाचलं पर्वतवन्निश्चलं कौतुकदर्शनमार्थमिति श्रुत्वा ॥ ९ ॥ ॥ १० ॥

ब्रह्माणमनुगामिनीं श्रुतिमिव वाल्मीकेः पृष्ठतस्तां सीतामायान्तीं दृष्ट्वा । अनयोपमया सीतायाः श्रुतेश्च सकलदोषराहित्येन प्रमाणत्वं दर्शितम् ॥ ११ ॥

एवं वक्ष्यमाणप्रकारेण । दुःखजन्मना दुःखोत्पन्नया । विशालेन विस्तीर्णेन शोकेनाकुलात्मनां क्षुब्धान्तःकरणानाम् ॥ १२ ॥

सीतासहायो वाल्मीकिरितिहोवाच राघवम् ॥ १४ ॥
इयं दाशरथे ! सीता सुव्रता धर्मचारिणी ।
अपवादात् परित्यक्ता ममाश्रमसमीपतः ॥ १५ ॥
लोकापवादभीतस्य तव राम ! महाव्रत ।
प्रत्ययं दास्यते सीता तामनुज्ञातुमर्हसि ॥ १६ ॥
इमौ तु जानकीपुत्रावुभौ च यमजातकौ ।
सुतौ तवैव दुर्धर्षा सत्यमेतत् ब्रवीमि ते ॥ १७ ॥
(प्रचेतसोऽहं दशमः पुत्रो राघवनन्दन ! ।
न स्मराम्यनृतं वाक्यमिमौ तु तव पुत्रकौ ॥ १८ ॥
बहुवर्षसहस्राणि तपश्चर्य्या मया कृता ।
नोपाश्नीयां फलं तस्या दुष्टेयं यदि मैथिली ॥ १९ ॥
मनसा कर्मणा वाचा भूतपूर्वं न किल्बिषम् ।
उभौ सीतारामौ साध्विति प्रचुक्रुशुः ॥ १३ ॥ १४ ॥

अपवादैर्हेतुभिर्ममाश्रमसमीपे त्यक्ता इयं तव प्रत्ययं दास्यते तदनुज्ञातुमर्हसि ॥ १५ ॥ १६ ॥

यमजातकौ यमजतयोत्पन्नौ । यथाहं प्रचेतसो दशम औरसः पुत्रो यद्वा प्रचेतसो दशमः सन्तानपरम्परया पुत्रोऽपत्यमतोऽहमनृतं वाक्यं मनसापि न स्मरामि कथनन्तु दूरे। अत इमौ तव पुत्रकाविति मद्वाक्यं सत्यमेव जानीहीति भावः ॥ १७ ॥ १८ ॥

अथ सीताचारित्रं प्रति मुनिना शपथकरणम् । बहुवर्षेति । यदि मैथिली दुष्टा तदा तपसः फलमहं न प्राप्नुयाम् ॥ १९ ॥

तस्याहं फलमश्नामि अपापा मैथिली यदि ॥ २० ॥
अहं पञ्चसु भूतेषु मनःषष्ठेषु राघव ।
विचिन्त्य सीता शुद्धेति जग्राह वननिर्झरे ॥ २१ ॥
इयं शुद्धसमाचारा अपापा पतिदेवता ।
लोकापवादभीतस्य प्रत्ययं तव दास्यति ॥ २२ ॥

तस्मादियं नरवरात्मज ! शुद्धभावा
दिव्येन दृष्टिविषयेण मया प्रदिष्टा ।
लोकापवादकलुषीकृतचेतसा या
त्यक्ता त्वया प्रियतमा विदितापि शुद्धा ॥ २३ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
षण्णवतितमः सर्गः ॥ ९६ ॥

मन आदिना मम किल्बिषं न भूतपूर्वम्। मया किञ्चिदपि न कृतमित्यर्थः। यद्यपापा मैथिली तदा तस्य किल्बिषामाचरणस्य फलमश्नामि अश्नीयाम्। अनेन सङ्कल्पपूर्वनिषिद्धत्यागोऽपि धर्मायेति सूचितम् ॥ २० ॥

पञ्चसु भूतेषु श्रोत्रादिपञ्चेन्द्रियेषु। जग्राह गृहीतवान् ॥२१।२२॥

दिव्येन दृष्टिविषयेण दिव्यज्ञानेन तव शुद्धा विदितापि त्वया लोकापवादभीतेन त्यक्तेत्यन्वयः ॥ २३ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे षण्णवतितमः सर्गः ॥ ९७ ॥

---

## सप्तनवतितमः सर्गः ।



वाल्मीकिनैवमुक्तस्तु राघवः प्रत्यभाषत ।
प्राञ्जलिर्जगतीमध्ये दृष्ट्वा तां वरवर्णिनीम् ॥ १ ॥
एवमेतन् महाभाग ! यथा वदसि धर्मवित् ।
प्रत्ययस्तु मम ब्रह्मंस्तव वाक्यैरकल्मषैः ॥ २ ॥
प्रत्ययश्च पुरा वृत्तो वैदेह्याः सुरसन्निधौ ।
शपथश्च कृतस्तत्र तेन वेश्म प्रवेशिता ॥ ३ ॥
लोकापवादो बलवान्येन त्यक्ता हि मैथिली ।
सेयं लोकभयात् ब्रह्मन्नपापेत्यभिजानता ॥
परित्यक्ता मया सीता तद्भवान् क्षन्तु मर्हति ॥ ४ ॥

अथ सीतायाः शपथपूर्वं भूमिप्रवेशः । वाल्मीकिनेति । एवमुक्तस्तत्र प्रत्ययं दास्यतीत्युक्तः ॥ १ ॥

एवमेतद्यद्यपि लङ्कायां सुरासुरसन्निधौ प्रत्ययो दत्तस्तव वाक्यैश्च शपथरूपैर्मम प्रत्ययो जात एव तथापि हे महाभाग ब्रह्मन् त्वं यथा वदसि यद्वदसि तदेवमेव प्रत्ययं करोत्वित्यर्थः ॥ २ ॥ ३ ॥

किमर्थं तर्हि पुनः प्रत्ययकरणं तत्राह । लोकेति । येन लोकापवादेन जानकी त्यक्ता स लोकापवादो बलवान् । अतस्तन्निवृत्तये पुनः

जानामि चेमौ पुत्रौ मे यमजातौ कुशीलवौ ।
शुद्धायां जगतीमध्ये मैथिल्यां प्रीतिरस्तु मे ॥ ५ ॥
अभिप्रायन्तु विज्ञाय रामस्य सुरसत्तमाः ।
सीतायाः शपथे तस्मिन् सर्वे एव समागताः ॥ ६ ॥
पितामहं पुरस्कृत्य सर्वे एव समागताः ।
आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ॥ ७ ॥
साध्याश्च देवाः सर्व्वे ते सर्वे च परमर्षयः ।
नागाः सुपर्णाः सिद्धाश्च ते सर्वे हृष्टमानसाः ॥ ८ ॥
दृष्ट्वा देवानृषींश्चैव राघवः पुनरब्रवीत् ।
प्रत्ययो मे नरश्रेष्ठ ! ऋषिवाक्यैरकल्मषैः ॥ ९ ॥
शुद्धायां जगतीमध्ये वैदेह्यां प्रतिरस्तु मे ।
सीता शपथसम्भ्रान्ताः सर्वे एव समागताः ॥ १० ॥
ततो वायुः शुभः पुण्यो दिव्यगन्धो मनोरमः ।

प्रत्ययकरणमिति भावः । तथापि लोकापवादेनाशङ्कास्ति किं तत्र नेत्याह,—सेयमिति । अपापेत्यभिजानतापि मया लोकभयात्त्यक्ता ॥ ४ ॥

इमौ मे पुत्राविति च जानामि अथापि जगतो मध्ये शुद्धायामेव मैथिल्यां मे प्रीतिरस्तु ॥ ५ ॥

सीतायाः शपथे । शपथप्रसङ्गे इत्यर्थः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

शुद्धायामिति । अस्य तथापीत्यादिः । सीता शपथे तद्दर्शने सम्भ्रान्ता इत्यर्थः ॥ १० ॥

तं जनौघं सुरश्रेष्ठो ह्लादयामास सर्वतः ॥ ११ ॥
तदद्भुतमिवाचिन्त्यं निरैक्षन्त समाहिताः ।
मानवाः सर्वराष्ट्रेभ्यः पूर्वं कृतयुगे यथा ॥ १२ ॥
सर्वान् समागतान् दृष्ट्वा सीता काषायवासिनी ।
अब्रवीत् प्राञ्जलिर्वाक्यमधोदृष्टिरवाङ्मुखी ॥ १३ ॥
यथाहं राघवादन्यं मनसापि न चिन्तये ।
तथा मे माधवी देवी विवरं दातुमर्हति ॥ १४ ॥
मनसा कर्मणा वाचा यथा रामं समर्चये ।
तथा मे माधवी देवी विवरं दातुमर्हति ॥ १५ ॥

शुभपुण्यशब्दौ शैत्यमान्द्योपलक्षणौ । दिव्यगन्धः सन्निहितसर्वदेवशरीरवर्त्तिदिव्यचन्दनमाल्यगन्धः । सुरश्रेष्ठः सर्वपुण्यपापसाक्षी । ११ ।

तदद्भुतं दिव्यगन्धवायुवहनं सर्वराष्ट्रेभ्य आगता मानवा निरैक्षन्त । पूर्वं यथा कृतयुगे दिव्यगन्धवायुस्पर्शनं तथा त्रेतायामप्यभूदित्यर्थः । रामसान्निध्यादनाश्चर्य्यमपि साधारणदृष्ट्याश्चर्य्यमितीव शब्दः । १२ ।

ततः सीता चतुर्दशभुवनस्थजनानेकत्र मिलितान् दृष्ट्वा अपवादपरिहाराय शपथव्याजेन स्वपदं प्रवेष्टुकामाह,—सर्वानिति । काषायवासिनी तपस्युचितवासोधारिणी पातिव्रत्योचिताधोदृष्टिर्विवरयाचनाय मही निरीक्षणार्थञ्च अतएवावाङ्मुखी । १३ ।

यथाहं राघवादन्यं मनसापि न चिन्तये न चिन्तयामीति सत्यम् । तथा सत्येन चिरकालविश्लेषेऽपि पातिव्रत्यपरिपालनक्लेशखिन्नाया-

यथैतत् सत्यमुक्तं मे वेद्मि रामात्परं न च ।
तथा मे माधवी देवी विवरं दातुमर्हति ॥ १६ ॥
तथा शपन्त्यां वैदेह्यां प्रादुरासीत् तदद्भुतम् ।
भूतलादुत्थितं दिव्यं सिंहासनमनुत्तमम् ॥ १७ ॥

त्तज्जनितपरमदुःखसमाप्तये पुनरपि भुवं प्रवेष्टुं माधवी देवी माधव-पत्नी भूदेवी विवरं रन्ध्रं दातुमर्हति । एवमग्रेऽपि व्याख्येयम् ॥ १४ ॥ ॥ १५ ॥

अयं स्वपदप्रवेशोद्योगः सीताया भृगुप्रार्थनयोपेन्द्रावतारे मानुषे लोकेऽङ्गीकृतपत्नीवियोगस्य प्रागुक्तासन्नीत्याङ्गीकृततदर्थं वाल्मीकि-शापस्य च रामस्याभिप्रायज्ञानादेववाल्मीक्याश्रमगमनवदिति न राम प्रतिकूलाचरणप्रसक्तिः सीताया इति बोध्यम् । अनन्तरं रामस्य भूमिनाशपर्य्यन्तं कोपोदयस्तु मनुष्यावतारनटनमात्रमित्यदोषः ॥ १६ ॥ शपन्त्याम् एवन्त्विः शपन्त्यान्तदनिर्वाच्यमद्भुतं प्रादुरासीत् । किं तदद्-भुतं तत्राह,—भूतलादुत्थितम् । नागैस्तत्त्वकादिभिः शिरोभिर्ध्रिय-माणं सिंहासनमदृश्यतेति शेषः । दिव्येन वपुषा अमानुषरचना विशेषेणोत्पच्चितम् । दिव्यरत्नभूषितैरनेकैर्दिव्यर्थः । पाद्मे तु ।

नानारत्नमयं पीठं पृष्ठे कृत्वा खगेश्वरः ।
रसातलादाविरभूद्विस्मयं जनयन्नृणाम् ॥
तस्मिन् पीठे महादेवीं हस्ताभ्यां गृह्य मैथिलीम् ।
स्वागतेनाभिनन्द्यैनां सन्निवेश्यतिरोदधे ॥
सा च दिव्याप्सरोभिस्तु पूज्यमाना सनातनी ।
वैनतेयं समारुह्य अर्चिरादिपथाद्गता ॥

ध्रियमाणं शिरोभिस्तु नागैरमितविक्रमैः ।
दिव्यं दिव्येन वपुषा दिव्यरत्नविभूषितैः ॥ १८ ॥
तस्मिंस्तु धरणी देवी बाहुभ्यां गृह्य मैथिलीम् ।
स्वागतेनाभिनन्द्यैनामासने चोपवेशयत् ॥ १९ ॥
तामासनगतां दृष्ट्वा प्रविशन्तीं रसातलम् ।
पुष्पवृष्टिरविच्छिन्ना दिव्या सीतामवाकिरत् ॥ २० ॥
साधुकारश्च सुमहान् देवानां सहसोत्थितः ।
साधुसाध्विति वै सीते ! यस्यास्ते शीलमीदृशम् ॥ २१ ॥
एवम्बहुविधा वाचो ह्यन्तरिक्षगताः सुराः ।
व्याजह्रुर्हृष्टमनसो दृष्ट्वा सीताप्रवेशनम् ॥ २२ ॥
यज्ञवाटगताश्चापि मुनयः सर्व एव ते ।
राजानश्च नरव्याघ्रा विस्मयान्नोपरेमिरे ॥ २३ ॥

दासीगणैः पूर्वभवैः संवृता जगदीश्वरी ।
सम्प्राप्ता परमं धाम योगिगम्यं सनातनम् ॥
रसातलप्रविष्टान्तां दृष्ट्वा सर्वे प्रचुक्रुशुः ॥ इत्युक्तम् ।
नागैर्ध्रियमाणं प्रादुर्भूतं दृष्ट्वा दिव्येन वपुषा गरुडो जग्राहेति-शेषो वाच्यः । रसातलं प्रविशन्तीमित्यस्य अदृश्यां जायमानाया-मित्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥

दिव्या स्वर्गभवा । अतःपरं भगवतोऽप्यागमनं श्रोत्रमिति सम्भो-मया पुष्पवृष्टिः ॥ २० ॥ २१ ॥ २२ ॥

अन्तरिचे च भूमौ च सर्वे स्थावरजङ्गमाः ।
दानवाश्च महाकायाः पाताले पन्नगाधिपाः ॥ २४ ॥
केचिद्विनेदुः संहृष्टाः केचिद्ध्यानपरायणाः ।
केचिद्रामं निरीचन्ते केचित्सीतामचेतसः ॥ २५ ॥
सीताप्रवेशनं दृष्ट्वा तेषामासीत्समागमः ।
तन्मुहूर्त्तमिवात्यर्थं समं सम्मोहितं जगत् ॥ २६ ॥

## इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे सप्तनवतितमः सर्गः ॥ ९७ ॥

विस्मयादाश्चर्यमूलकाभिवन्दनथवशाद्रामेणापरेभिरे नोपरता बभूवुः ॥ २३ ॥

सर्वे स्थावरजङ्गमाश्चेतनाचेतनाः । तत्राचेतना अपि ससंज्ञा भूत्वा सीताया अयशोगतमिति संहृष्टा बभूवुः ॥ २४ ॥

अचेतसो विसंज्ञाः ॥ २५ ॥

सीताप्रवेशनं दृष्ट्वा तेषां मुन्यादीनां समागमः सम्बन्ध आसीत् । हर्षादिभिरिति शेषः । यदेवं तस्मात् समं सर्वं जगत् । मुहूर्त्तमत्यर्थं सम्मोहितमिव सम्मोहितमेवाभूत् ॥ २६ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके उत्तरकाण्डे सप्तनवतितमः सर्गः ॥ ९७ ॥

## अष्टनवतितमः सर्गः।



रसातलं प्रविष्टायां वैदेह्यां सर्वे वानराः।
चुक्रुशुः साधु साध्वीति मुनयो रामसन्निधौ ॥ १ ॥
दण्डकाष्ठमवष्टभ्य बाष्पव्याकुलितेक्षणः।
अवाक्शिरा दीनमना रामोह्यासीत् सुदुःखितः ॥ २ ॥
स रुदित्वा चिरं कालं बहुशो बाष्पमुत्सृजन्।
क्रोधशोकसमाविष्टो रामो वचनमब्रवीत् ॥ ३ ॥
अभूतपूर्वं शोकं मे मनः स्प्रष्टुमिवेच्छति।
पश्यतो मे यथा नष्टा सीता श्रीरिव रूपिणी ॥ ४ ॥
साऽदर्शनं पुरा सीता लङ्कां पारे महोदधेः।
ततश्चापि मया नीता किं पुनर्वसुधातलात् ॥ ५ ॥

अथ रामस्य सीतान्तर्धानजं क्रोधं भगवांस्तत्त्वबोधेन शमयति। रसातलमिति। साधु साध्वीति दीर्घ आर्षः ॥ १ ॥

दण्डरूपं काष्ठं दण्डकाष्ठम्। दीक्षितेन सोमक्रमपर्यन्तं धारणीयमौदुम्बरदण्डमवष्टभ्येत्यर्थः। एतदवष्टम्भः शोकग्लानिवशात् ॥ २ ॥ ३ ॥

पूर्वं रावणेनासन्निधौ सीता नष्टा नाशमदर्शनं प्रापिता। सम्प्रति तु पश्यतो मे पश्यन्तं मामनादृत्य रूपिणी श्रीरिव सीता नष्टा अदर्शनं प्रापिता यथा यतोऽतो मे मनः अभूतपूर्वं शोकं स्प्रष्टुमिवेच्छति ॥ ४ ॥

वसुधे! देवि! भवति! सीता निर्य्यात्यतां मम।
दर्शयिष्यामि वा रोषं यथामामवगच्छसि॥ ६॥
कामं श्वश्रूर्ममैव त्वं त्वत्सकाशात्तु मैथिली।
कर्षता फालहस्तेन जनकेनोद्धृता पुरा॥ ७॥
तस्मान्निर्य्यात्यतां सीता विवरं वा प्रयच्छ मे।
पाताले नाकपृष्ठे वा वसेयं सहितस्तया॥ ८॥
आनय त्वं हि तां सीतां मत्तोहं मैथिलीकृते।
न मे दास्यसि चेत्सीतां यथारूपां महीतले॥ ९॥
सपर्वतवनां कृत्स्नां व्यथयिष्यामि ते स्थितिम्।
नाशयिष्याम्यहं भूमिं सर्वमापो भवन्त्विह॥ १०॥
एवं ब्रुवाणे काकुत्स्थे क्रोधशोकसमन्विते।
ब्रह्मा सुरगणैः सार्धमुवाच रघुनन्दनम्॥ ११॥
राम! राम! न सन्तापं कर्तुमर्हसि सुव्रत!।

महोदधेः पारे लङ्कां गता सा सीताऽदर्शनं प्राप्ता। ततः लङ्कातः॥ ५॥

यथा मामवगच्छसि मद्बलं वराहावतारादौ त्वमेव जानासी-त्यर्थः॥ ६॥ ७॥

विवरं वा प्रयच्छ। प्रविश्य तया सह स्थातुमिति भावः॥ ८॥

अहं मैथिलीकृते मत्तः प्राप्तमोह इत्यर्थः। महीतले। प्रविष्टा-मिति शेषः॥ ९॥ १०॥ ११॥

स्मर त्वं पूर्वकं भावं मन्त्रश्चामित्रकर्शन ! ॥ १२ ॥
न खलु त्वां महाबाहो ! स्मारयेयमनुत्तमम् ।
इमं मुहूर्तं दुर्धर्ष ! स्मर त्वं जन्म वैष्णवम् ॥ १३ ॥
सीता हि विमला साध्वी तव पर्वपरायणा ।

ननु कथमिदानीं सन्तापापगम इति चेत्तस्य स्वतत्त्वाज्ञाननटनादिमूलकत्वात् स्वतत्त्वस्मरणनटनमेव कुर्वित्याह,—स्मर त्वं पूर्वकं भावमिति । वैष्णवमित्यर्थः । आत्मानञ्चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेदिति श्रुतेः । मन्त्रं देवैः सहावतारसमये कृतम् । मानुषभावमूलरावणवधाश्वमेधयागान्तसर्वकृत्यानां निर्वृत्तत्वनेदानीं तत्त्वावरणनाटनेन फलाभाव इति भावः ॥ १२ ॥

ननु किं मां त्वं स्मारयसीत्यत्राह,—नेति । विस्मृततत्त्वमिव स्मरणं कुर्विति न प्रार्थयामि । किन्तु इमं मुहूर्तमस्मिन् काले हे दुर्धर्ष वैष्णवमात्मानम् इह जन्मप्राप्तवन्तं स्मर । ध्यानेन पश्येत्यर्थः । एतावत्पर्यन्तं कार्यनिर्वाहाय मनुष्योऽहमिति ध्यानेन तथाभावं नाटितवानपि इदानीं तत्त्यजेत्यर्थः । न खलु त्वामिति पाठे अनुत्तमं समाभ्यधिकरहितं ब्रह्मस्वरूपं तमुपनिषत्प्रसिद्धं स्मारयेयं स्मरणाय प्रार्थये । किं स्मर्त्तव्यत्वेन प्रार्थयसीत्यत्राह,—इममिति । पूर्ववदेवार्थः । भृङ्गकीटन्यायेन तद्ध्यानतत्तद्भावनाटनमिति भावः । भगवतो रामस्य तथा नाटनाद् ब्रह्मापि स्मारयेयमित्यादिप्रयुक्तवानिति ध्येयम् । नत्वेतावता भगवतो वस्तुतस्तद्भावप्राप्तिरिति ध्येयम् ॥ १३ ॥

नागलोकं सुखं प्रायात् त्वदाश्रयतपोबलात् ॥ १४ ॥
स्वर्गे ते सङ्गमो भूयो भविष्यति न संशयः ।
अस्यास्तु परिषन्मध्ये यद्ब्रवीमि निबोध तत् ॥ १५ ॥
एतदेव हि काव्यन्ते काव्यानामुत्तमं श्रुतम् ।
सर्वं विस्तरतो राम ! व्याख्यास्यति न संशयः ॥ १६ ॥
जन्मप्रभृति ते वीर ! सुखदुःखोपसेवनम् ।
भविष्यदुत्तरञ्चेह सर्वं वाल्मीकिना कृतम् ॥ १७ ॥

मामाश्रिता सीता एवं गतेत्यपि न शोकः कार्य्य इत्याह,—सीतेति । विमला खत एव सर्वापवादशून्या । वस्तुतस्तस्यास्त्वदभिन्नत्वादिति भावः । तव पूर्वपरायणा तव प्रकृतिप्राप्तिसमुत्सुका । त्वदाश्रयस्त्वदाश्रयणां तद्रूपतपोबलात् । नागलोकगमनव्याजेन नागलोकं विष्णुलोकं सुखं प्रायात् । तपःपूर्वपरायणेति पाठे । पूर्वं वेदवतीदेहेऽनुष्ठिततपः-प्रभावानुष्ठानपरायणेत्यर्थ इति कतकः । तदनुष्ठानं रावणवधादिरूप-मेवेति भाति ॥ १४ ॥

अस्याः सङ्गमश्च ते भूयः स्वर्गे परस्वर्गे ब्रह्मलोके भविष्यति नान्यत्र । परिषदिति लुप्तषष्ठ्यन्तम् ॥ १५ ॥

एतत् काव्यमेवोत्तमं श्रुतं सर्वं ज्ञापनीयं विस्तरतो व्याख्यास्यति ज्ञापयिष्यति ॥ १६ ॥

कुत एवं तत्राह,—जन्मेति । सुखदुःखोपसेवनं सुखदुःखोपसेवा-कथनरूपम् । भविष्यदुत्तरञ्चेति । सीतोपसंहारादुत्तरत्र यत्ते चरितं भविष्यति तत्सर्वमिहकाव्ये त्रिकालज्ञेन कृतं कृतनिबन्धनम् ॥ १७ ॥

आदिकाव्यमिदं राम ! त्वयि सर्वं प्रतिष्ठितम्।
न ह्यन्योऽर्हति काव्यानां यशोभाग्राघवादृते ॥ १८ ॥
श्रुतं ते पूर्वमेतद्धि मया सर्वं सुरैः सह।
दिव्यमद्भुतरूपञ्च सत्यवाक्यमनावृतम् ॥ १९ ॥
स त्वं पुरुषशार्दूल ! धर्मेण सुसमाहितः।
शेषं भविष्यं काकुत्स्थ ! काव्यं रामायणं शृणु ॥ २० ॥
उत्तरं नाम काव्यस्य शेषमत्र महायशः !।
तच्छृणुष्व महातेज ! ऋषिभिः सार्धमुत्तमम् ॥ २१ ॥
न खल्वन्येन काकुत्स्थ ! श्रोतव्यमिदमुत्तमम्।

त्वयि त्वच्चरितविषये। त्वत्तो राघवादृतेऽन्यः काव्यानां यशोभाक् काव्यप्रकाश्ययशोभाक्कश्चिदपि नार्हति काव्यनायकतामिति भावः। अन्येषां वर्णनीयगुणशून्यत्वात्सर्वे कवयोऽद्यापि रामचरितमेव प्रायेणाश्रयन्ति ॥ १८ ॥

अस्य काव्यस्य महत्त्वं सर्वंमहता मयैव परिग्रहादित्याह,—श्रुतमिति। ते एतत्त्वत्सम्बन्धीदं काव्यम्। तस्य श्रोतव्यत्वे हेतुः। सत्यवाक्यमिति। अविद्यामूलप्रलापरहितम्। अतएव दिव्यम्। पूर्वं श्रुतं काव्यरूपिण्या देव्या मुखादेवेति शेषः ॥ १९ ॥

भविष्यं भविष्यद्विषयं शेषं शृणु ॥ २० ॥

किं तदाह,—उत्तरं नामेति। उत्तराख्योऽयः काव्यस्य शेषोऽस्ति तच्छृणुष्व। हे महातेजः। ऋषिभिर्ब्रह्मलोकस्थैर्ऋषिभिः ॥ २१ ॥

परमर्षिणा वीर ! त्वयैव रघुनन्दन ! ॥ २२ ॥
एतावदुक्त्वा वचनं ब्रह्मा त्रिभुवनेश्वरः ।
जगाम त्रिदिवं देवो देवैः सह सबान्धवैः ॥ २३ ॥
ये च तत्र महात्मान ऋषयो ब्राह्मलौकिकाः ।
ब्रह्मणा समनुज्ञाता न्यवर्त्तन्त महौजसः ॥ २४ ॥
उत्तरं श्रोतुमनसो भविष्यं यच्च राघवे ।
ततो रामः शुभां वाणीं देवदेवस्य भाषिताम् ॥ २५ ॥
श्रुत्वा परमतेजस्वी वाल्मीकिमिदमब्रवीत् ।
भगवन् ! श्रोतुमनस ऋषयो ब्राह्मलौकिकाः ॥ २६ ॥
भविष्यदुत्तरं यन्मे श्वोभूते सम्प्रवर्त्तताम् ।
एवं विनिश्चयं कृत्वा संप्रगृह्य कुशीलवौ ॥ २७ ॥

अतिरहस्यत्वाच्च नायमंशः सर्वैः श्रोतव्य इत्याह,—नेति । परमर्षिणा परमराजर्षिणा त्वयैव श्रोतव्यम् । नान्येन लक्ष्मणादिनेत्यर्थः । एवं भगवतः परमादरः काव्यस्य स्वावतारविषयत्वादिति बोध्यम् ॥ २२ ॥

सबान्धवैर्देवैः सहेत्यर्थः ॥ २३ ॥

तत्र सदसि । ब्राह्मलौकिका ब्रह्मलोकार्हाः । न्यवर्त्तन्त उत्तरं श्रोतुमिति शेषः । ब्रह्मणा सह चलिता अपि पुनर्निवृत्ता इत्यर्थः ॥ २४ ॥

तदेवाहोत्तरमिति ॥ २५ ॥ २६ ॥ २७ ॥

तं जनौघं विसृज्याथ पर्णशालामुपागमत् ।
तामेव शोचत: सीतां सा व्यतीता च शर्वरी ॥ २८ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
अष्टनवतितमः सर्गः ॥ ९८ ॥

पर्णशालामुपागमदिति पाठे यज्ञावसान एव सीतान्तर्धानात् ततः परं दीक्षितत्वाभावेनान्यत्र गन्तुं शक्यत्वात्पुत्राभ्यां सह वाल्मीकिपर्णशालां रामः प्राप्तवानित्यर्थः। कर्मशालामुपागमदिति पाठान्तरम् ॥ २८ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे अष्टनवतितमः सर्गः ॥ ९८ ॥

---

## एकोनशततमः सर्गः ।



रजन्यान्तु प्रभातायां समानीय महामुनीन् ।
गीयतामविशङ्काभ्यां रामः पुत्रावुवाच ह ॥ १ ॥
ततः समुपविष्टेषु महर्षिषु महात्मसु ।
भविष्यदुत्तरं काव्यं जगतुस्तौ कुशीलवौ ॥ २ ॥
प्रविष्टायान्तु सीतायां भूतलं सत्यसम्पदा ।
तस्यावसाने यज्ञस्य रामः परमदुर्मनाः ॥ ३ ॥
अपश्यमानो वैदेहीं मेने शून्यमिदं जगत् ।
शोकेन परमायस्तो न शान्तिं मनसागमत् ॥ ४ ॥
विसृज्य पार्थिवान् सर्वान् ऋक्षवानरराक्षसान् ।
जनौघं विप्रमुख्यानां वित्तपूर्वं विसृज्य च ॥ ५ ॥
ततो विसृज्य तान् सर्वान् रामो राजीवलोचनः ।

अथ राममातॄणां परलोकप्राप्तिः । रजन्यामिति । गीयतामित्युवाच । अविशङ्काभ्यां मत्पुत्रत्वविषयशङ्कारहिताभ्यां मातृवियोगदुःखरहिताभ्याञ्च ॥ १ ॥ २ ॥

सत्यसम्पदा स्वस्य सत्यवैभवेन । तस्य यज्ञस्यावसाने सीता निर्य्याणोत्तरकाले ॥ ३ ॥ ४ ॥

हृदि कृत्वा सदा सीतामयोध्यां प्रविवेश ह ॥ ६ ॥
न सीतायाः परां भार्य्यां वव्रे स रघुनन्दनः।
यज्ञे यज्ञे च पत्न्यर्थं जानकी काञ्चनी भवत् ॥ ७ ॥
दशवर्षसहस्राणि वाजिमेधानथाकरोत्।
वाजपेयान् दशगुणांस्तथा बहुसुवर्णकान् ॥ ८ ॥
अग्निष्टोमातिरात्राभ्यां गोसवैश्च महाधनैः।
ईजे क्रतुभिरन्यैश्च स श्रीमानाप्तदक्षिणैः ॥ ९ ॥
एवं स कालः सुमहान् राज्यस्थस्य महात्मनः।
धर्मे प्रयतमानस्य व्यतीयाद्राघवस्य च ॥ १० ॥
ऋक्षवानररक्षांसि स्थिता रामस्य शासने।
अनुरज्यन्ति राजानोऽप्यहन्यहनि राघवम् ॥ ११ ॥
काले वर्षति पर्जन्यः सुभिक्षं विमला दिशः।
हृष्टपुष्टजनाकीर्णं पुरं जनपदास्तथा ॥ १२ ॥

वित्तपूर्वं वित्तदानपूर्वम् ॥ ५ ॥ ६ ॥

यज्ञे यज्ञे प्रतियज्ञम्। भवत् अभवत् । ७ ॥

दशवर्षसहस्राणीति यागकालमर्य्यादेयमतु सीतावियोगानन्तरं तावान्यागकाल इति कृतकालश्च सीतावियोगानन्तरं तावतो यागकालत्वेऽपि बाधकमिति चिन्त्यम्। नतु भूमौ सीतागमनोत्तरमिति वक्तुं युक्तम् । ८ । ९ । १० ।

स्थिता स्थितानि । अनुरज्यन्ति अनुरञ्जयन्ति ॥ ११ ॥

नाकाले म्रियते कश्चिन्न व्याधिः प्राणिनां तथा।
नानर्थो विद्यते कश्चिद्रामे राज्यं प्रशासति ॥ १३ ॥
अथ दीर्घस्य कालस्य राममाता यशस्विनी।
पुत्रपौत्रैः परिवृता कालधर्ममुपागमत् ॥ १४ ॥
अन्वियाय सुमित्रा च कैकेयी च यशस्विनी।
धर्मं कृत्वा बहुविधं त्रिदिवे पर्य्यवस्थिता ॥ १५ ॥
सर्वाः प्रमुदिताः स्वर्गे राज्ञा दशरथेन च।
समागता महाभागाः सर्वधर्मं च लेभिरे ॥ १६ ॥
तासां रामो महादानं काले काले प्रयच्छति।
मातॄणामविशेषेण ब्राह्मणेषु तपस्विषु ॥ १७ ॥
पित्र्याणि ब्रह्मरत्नानि यज्ञान् परमदुस्तरान्।
चकार रामो धर्मात्मा पितॄन् देवान् विवर्धयन् ॥ १८ ॥

सुभिक्षमभवदिति शेषः ॥ १२ ॥ १३ ॥

पौत्राः कुशलवाद्याः ॥ १४ ॥

अन्वियाय तस्या अनु पश्चात् इयाय कालधर्ममिति शेषः। बहुविधं नानाप्रकारम् ॥ १५ ॥

सर्वधर्मं सर्वधर्मसाध्यसुखभोगम् ॥ १६ ॥ १७ ॥

पित्र्याणि पितृकर्मापेक्षितानि। ब्रह्मरत्नानि ब्राह्मणदेयोत्तमवस्तूनि प्रयच्छति स्मेत्यनुकर्षः। बहुरत्नानीति पाठान्तरम्। पितॄन् देवान् विवर्धयन् पूजयन्। यज्ञांश्चकारेति। पितृपितृयज्ञाभिकर्षः ॥ १८ ॥

एवं वर्षसहस्राणि बहून्यथ ययुः सुखम् ।
यज्ञैर्बहुविधं धर्मं वर्धयानस्य सर्वदा ॥ १९ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
एकोनशततमः सर्गः ॥ ९९ ॥

वर्धयानस्य वर्धयमानस्य । यज्ञैर्बहुविधैर्देवान् वर्धयानस्येति पाठान्तरम् । यत्तु, एवं प्रशासतस्तस्य राघवस्य महेश्वरि । अन्यया-द्दशसाहस्रं रममाणस्य सीतयेति पाद्मे उक्तम् । तत्र सीतया भूमौ स्थितया स्थितस्य रममाणस्य राज्यं कुर्वत इत्यर्थः । साहस्रमिति स्वार्थेऽण् । अन्यथाद्दर्शसाहस्रमिति पाठे सहस्राणां समूह इत्यर्थकतया-दशसहस्रेत्यर्थकमेव । आयुस्त्वेकादशसहस्रवर्षाणि । १९ ।

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे एकोनशततमः सर्गः ॥ ९९ ॥

---

## शततमः सर्गः ।



कस्यचित्त्वथ कालस्य युधाजित् केकयो नृपः ।
स्वगुरुं प्रेषयामास राघवाय महात्मने ॥ १ ॥
गार्ग्यमङ्गिरसः पुत्रं ब्रह्मर्षिममितप्रभम् ।
दश चाश्वसहस्राणि प्रीतिदानमनुत्तमम् ॥ २ ॥
कम्बलानि च रत्नानि चित्रवस्त्रमथोत्तमम् ।
रामाय प्रददौ राजा शुभान्याभरणानि च ॥ ३ ॥
श्रुत्वा तु राघवो धीमान् महर्षिं गार्ग्यमागतम् ।
मातुलस्याश्वपतिनः प्रहितं तन्महाधनम् ॥ ४ ॥
प्रत्युद्गम्य च काकुत्स्थः क्रोशमात्रं सहानुजः ।
गार्ग्यं संपूजयामास यथा शक्रो बृहस्पतिम् ॥ ५ ॥
तथा संपूज्य तमृषिं तद्धनं प्रतिगृह्य च ।
पृष्ट्वा प्रतिपदं सर्वं कुशलं मातुलस्य च ॥ ६ ॥

अथ रामेण गन्धर्वदेशं प्रति सपुत्रस्य भरतस्य प्रेषणम् । कस्यचिदिति । १ । २ ॥ ३ ।

अश्वपतिनः । नुमार्षः । अश्वपतेरित्यर्थः । ४ । ५ ।

उपविष्टं महाभागं रामः प्रष्टुं प्रचक्रमे।
किमाह मातुलोवाक्यं यदर्थं भगवानिह ॥ ७ ॥
प्राप्तो वाक्यविदां श्रेष्ठः साक्षादिव बृहस्पतिः।
रामस्य भाषितं श्रुत्वा महर्षिः कार्य्यविस्तरम् ॥ ८ ॥
वक्तुमद्भुतसङ्काशं राघवायोपचक्रमे।
मातुलस्ते महाबाहो ! वाक्यमाह नरर्षभः ॥ ९ ॥
युधाजित्प्रीतिसंयुक्तं श्रूयतां यदि रोचते।
अयं गन्धर्वविषयः फलमूलोपशोभितः ॥ १० ॥
सिन्धोरुभयतः पार्श्वे देशः परमशोभनः।
तञ्च रक्षन्ति गन्धर्वाः सायुधा युद्धकोविदाः ॥ ११ ॥
शैलूषस्य सुता वीर ! तिस्रः कोट्यो महाबलाः।
तान्विनिर्जित्य काकुत्स्थ ! गन्धर्वनगरं शुभम् ॥ १२ ॥
निवेशय महाबाहो ! स्वे पुरे सुसमाहिते।

प्रतिपदं प्रत्येकं सर्वं सर्वप्रकारम्। कुशलं पृष्ट्वा मातुलस्य कुशलं पृष्ट्वा। ६ ॥ ७ ॥ ८ । ९ ।

गन्धर्वविषयो गन्धर्वदेशः। १० ।

सिन्धोः सिन्धुनदस्योभयतः पार्श्वे वर्त्तमानः परमशोभनोऽयं देशोऽस्मद्देशसमीपे वर्त्तते। ११ ।

शैलूषो गन्धर्वराजः। गन्धर्वनगरञ्च विनिर्जित्येत्यनुषङ्गः। १२ ।

अन्यस्य न गतिस्तत्र देशः परमशोभनः ॥
रोचतान्ते महाबाहो ! नाहन्त्वामहितं वदे ॥ १३ ॥
तच्छ्रुत्वा राघवः प्रीतो महर्षेर्मातुलस्य च ।
उवाच बाढमित्येव भरतश्चान्ववैक्षत ॥ १४ ॥
सोऽब्रवीद्राघवः प्रीतः साञ्जलिप्रग्रहो द्विजम् ।
इमौ कुमारौ तं देशं ब्रह्मर्षे ! विचरिष्यतः ॥ १५ ॥
भरतस्यात्मजौ वीरौ तक्षः पुष्कल एव च ।
मातुलेन सुगुप्तौ तु धर्मेण सुसमाहितौ ॥ १६ ॥
भरतश्चाग्रतः कृत्वा कुमारौ सबलानुगौ ।
निहत्य गन्धर्वसुतान् द्वे पुरे विभजिष्यतः ॥ १७ ॥
निवेश्य ते पुरवरे आत्मजौ सन्निवेश्य च ।
आगमिष्यति मे भूयः सकाशमतिधार्मिकः ॥ १८ ॥

स्वे पुरे निवेशय। तद्देशे इति शेषः। अन्यस्य तद्व्यतिरिक्तस्य तत्र देशे गतिः प्राप्तिप्रसक्तिर्जयप्रसक्तिश्च नास्ति। एवं तत्साधने को लाभस्तत्राह,—देशः परमशोभन इति ॥ १३ ॥

भरतश्चान्ववैक्षत। तवायमंश इत्यबोधयदित्यर्थः ॥ १४ ॥

अथ राघवो रामो द्विजमब्रवीत् ॥ १५ ॥

तक्ष इत्यकारान्तः। मातुलेन भरतमातुलेन युधाजिता ॥ १६ ॥
॥ १७ ॥

ब्रह्मर्षिमेवमुक्त्वा तु भरतं सबलानुगम्।
आज्ञापयामास तदा कुमारौ चाभ्यषेचयत्॥ १९॥
नक्षत्रेण च सौम्येन पुरस्कृत्याङ्गिरः सुतम्।
भरतः सह सैन्येन कुमाराभ्यां विनिर्ययौ॥ २०॥
सा सेना शक्रयुक्तेव नगरान्निर्ययावथ।
राघवानुगता दूरं दुराधर्षा सुरैरपि॥ २१॥
मांसाशिनश्च ये सत्वा रक्षांसि सुमहान्ति च।
अनुजग्मुर्हि भरतं रुधिरस्य पिपासया॥ २२॥
भूतग्रामाश्च बहवो मांसभक्ष्याः सुदारुणाः।
गन्धर्वपुत्रमांसानि भोक्तुकामाः सहस्रशः॥ २३॥
सिंहव्याघ्रवराहाणां खेचराणाञ्च पक्षिणाम्।
बहूनि वै सहस्राणि सेनाया ययुरग्रतः॥ २४॥
अध्यर्धमासमुषिता पथि सेना निरामया।

पुरवरे निवेश्य निर्मायात्मजौ सन्निवेश्य। तयोः पुरयोरिति शेषः। अतिधार्मिकौ भरतः॥ १८॥ १९॥

अङ्गिरः सुतं गार्ग्यम्॥ २०॥

शक्रयुक्तेव इन्द्रनियुक्ता देवसेनेव राघवानुगता रामानुगताः दूरम् एकदिवासपर्यन्तमित्यर्थः॥ २१॥ २२॥ २३॥ २४॥

सेनाया अग्रतो ययुः। पिशितानामग्रतो यानं सुखकृतम्।

हृष्टपुष्टजनाकीर्णां केकयं समुपागमत्॥ २५॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
शततमः सर्गः॥ १००॥

अभिमुखागमनमेवापशकुनमिति भावः। केकयं केकयदेशं युधाजितम् वा। २५।

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे शततमः सर्गः॥ १००॥

---

## एकोत्तरशततमः सर्गः ।



श्रुत्वा सेनापतिं प्राप्तं भरतं केकयाधिपः ।
युधाजित् गार्ग्यसहितं परां प्रीतिमुपागमत् ॥ १ ॥
स निर्ययौ जनौघेन महता केकयाधिपः ।
त्वरमाणोऽभिचक्राम गन्धर्वान् केकयाधिपः ॥ २ ॥
भरतश्च युधाजिच्च समेतौ लघुविक्रमैः ।
गन्धर्वनगरं प्राप्तौ सबलौ सपदानुगौ ॥ ३ ॥
श्रुत्वा तु भरतं प्राप्तं गन्धर्वास्ते समागताः ।
योद्धुकामा महावीर्या व्यनदंस्ते समन्ततः ॥ ४ ॥
ततः समभवत् युद्धं तुमुलं रोमहर्षणम् ।
सप्तरात्रं महाभीमं न चान्यतरयोर्जयः ॥ ५ ॥

अथ भरतेन गन्धर्वविजयः। श्रुत्वेति। सेनापतिं प्राप्तं युद्धसन्नाहवन्तं समागतं श्रुत्वा ॥ १ । २ ॥

लघुविक्रमैर्योधैरित्यर्थः। सबलौ चतुरङ्गबलसहितौ। सपदानुगौ सूतवैद्याद्यनुचरसहितौ ॥ ३ ॥

व्यनदन् गर्जन्ति स्म ॥ ४ । ५ ॥

खड्गशक्तिधनुर्ग्राहा नद्यः शोणितसंस्रवाः ।
मृतकलेवरवाहिन्यः प्रसृताः सर्वतो दिशम् ॥ ६ ॥
ततो रामानुजः क्रुद्धः कालस्यास्त्रं सुदारुणम् ।
संवर्त्तं नाम भरतो गन्धर्व्वेष्वभ्यचोदयत् ॥ ७ ॥
ते बद्धाः कालपाशेन संवर्त्तेन विदारिताः ।
क्षणेनाभिहतास्तेन तिस्रः कोव्यो महात्मना ॥ ८ ॥
तत् युद्धं तादृशं घोरं न स्मरन्ति दिवौकसः ।
निमेषान्तरमात्रेण तादृशानां महात्मनाम् ॥ ९ ॥
हतेषु तेषु सर्व्वेषु भरतः कैकयीसुतः ।
निवेशयामास तदा समृद्धे द्वे पुरोत्तमे ॥ १० ॥
तक्षं तक्षशिलायान्तु पुष्कलं पुष्कलावते ।
गन्धर्वदेशे रुचिरे गान्धारविषये च सः ॥ ११ ॥

खड्गादिरूपाग्राहा यासु ताः। मृतकलेवराणि वहन्ति ताः ॥ ६ ॥
संवर्त्तं नाम प्रलयकालानलाख्यम् ॥ ७ ॥ ८ ॥
दिवौकसो न स्मरन्ति। निमेषमात्रेण त्रिकोटिगन्धर्वैर्वधोऽसम्भाव्य इति स्मितवन्तः ॥ ९ ॥
द्वे पुरोत्तमे तक्षशिलापुष्कलावताख्ये ॥ १० ॥
गन्धर्वदेशे तक्षशिलायां तक्षं तक्षाख्यं पुरम्। गान्धारदेशे पुष्कलावते नगरे पुष्कलम् ॥ ११ ॥

धनरत्नौघसंकीर्णे काननैरुपशोभिते।
अन्योऽन्यसंघर्षकृते स्पर्धया गुणविस्तरैः॥ १२॥
उभे सुरुचिरप्रख्ये व्यवहारैरकिल्बिषैः।
उद्यानयानसम्पूर्णे सुविभक्तान्तरापणे॥ १३॥
उभे पुरवरे रम्ये विस्तरैरुपशोभिते।
गृहमुख्यैः सुरुचिरैर्विमानैर्बहुभिर्वृते॥ १४॥
शोभिते शोभनीयैश्च देवायतनविस्तरैः।
तालैस्तमालैस्तिलकैर्बकुलैरुपशोभिते॥ १५॥
निवेश्य पञ्चभिर्वर्षैर्भरतो राघवानुजः।
पुनरायान्महाबाहुरयोध्यां केकयीसुतः॥ १६॥
सोऽभिवाद्य महात्मानं साक्षाद्धर्ममिवापरम्।
राघवं भरतः श्रीमान् ब्रह्माणमिव वासवः॥ १७॥

गुणविस्तरैर्हेतुभिरन्योऽन्यस्पर्धया अन्योऽन्यसंघर्षकृते कृतान्योऽन्यसंघर्षे। अहमेव गुणोत्तरमिति कृतान्योऽन्यविवादे इव दृश्यमाने इत्यर्थः॥ १२।
अकिल्बिषैर्धर्मन्यायोपेतैर्व्यवहारैः क्रयविक्रयादिव्यापारैः। १३।
विस्तरैरनुक्तपदार्थविस्तरैरुपशोभिते। सुरुचिरैर्गृहमुख्यैरुपशोभिते। विमानैः सप्तभूमिप्रासादैः। १४।
देवतायतनविस्तरैरित्यर्थः। १५। १६। १७।

शशंस च यथावृत्तं गन्धर्ववधमुत्तमम्।
निवेशनञ्च देशस्य श्रुत्वा प्रीतोऽस्य राघवः॥ १८॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
एकोत्तरशततमः सर्गः॥ १०१॥

तस्मा यथावृत्तं गन्धर्ववधं देशस्य निवेशनञ्च शशंस। अस्य भरतस्य वाक्यं श्रुत्वा राघवो रामः प्रीतो बभूव। १८।

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे एकोत्तरशततमः सर्गः॥ १०१॥



## द्व्युत्तरशततमः सर्गः ।



तत् श्रुत्वा हर्षमापेदे राघवो भ्रातृभिः सह ।
वाक्यञ्चाद्भुतसङ्काशं भ्रातॄन् प्रोवाच राघवः ॥ १ ॥
इमौ कुमारौ सौमित्रे ! तव धर्मविशारदौ ।
अङ्गदश्चन्द्रकेतुश्च राज्यार्थे दृढविक्रमौ ॥ २ ॥
इमौ राज्येऽभिषेक्ष्यामि देशः साधु विधीयताम् ।
रमणीयो ह्यसम्बाधो रमेतां यत्र धन्विनौ ॥ ३ ॥
न राज्ञां यत्र पीड़ा स्यान्नाश्रमाणां विनाशनम् ।
स देशो दृश्यतां सौम्य ! नापराध्यामहे यथा ॥ ४ ॥
तथोक्तवति रामे तु भरतः प्रत्युवाच ह ।
अयं कारुपथो देशो रमणीयो निरामयः ॥ ५ ॥

अथ लक्ष्मणकुमारयो राज्ये निवेशनम् । तदिति । भ्रातृभिरिति बहुवचनं द्वित्वे आर्षम् ॥ १ ॥

हे सौमित्रे तवेमौ कुमारौ राज्यार्थे राज्यरक्षणविषये दृढ़विक्रमौ ॥ २ ॥

अत इमौ राज्येऽभिषेक्ष्यामि । यत्रेमौ रमेतां तादृशो देशः साधु विधीयतां निरीक्ष्यताम् ॥ ३ ॥

नापराध्यामहे यथा कस्यापि भूतस्येति शेषः ॥ ४ ॥

निवेश्यतां तत्र पुरमङ्गदस्य महात्मनः।
चन्द्रकेतोः सुरुचिरं चन्द्रकान्तं निरामयम् ॥ ६ ॥
तद्वाक्यं भरतेनोक्तं प्रतिजग्राह राघवः।
तञ्च कृत्वा वशे देशमङ्गदस्य न्यवेशयत् ॥ ७ ॥
अङ्गदीया पुरी रम्याप्यङ्गदस्य निवेशिता।
रमणीया सुगुप्ता च रामेणाक्लिष्टकर्मणा ॥ ८ ॥
चन्द्रकेतोश्च मल्लस्य मल्लभूम्यां निवेशिता।
चन्द्रकान्तेति विख्याता दिव्या स्वर्गपुरी यथा ॥ ९ ॥
ततो रामः परां प्रीतिं लक्ष्मणो भरतस्तथा।
ययुर्युद्धे दुराधर्षा अभिषेकञ्च चक्रिरे ॥ १० ॥

कारुपथस्तदाख्यः पाश्चात्योदीच्यदेशविशेषः ॥ ५ ॥

तत्र देशेऽङ्गदस्य पुरमङ्गदीयेत्याख्यं निवेश्यताम्। चन्द्रकेतुश्चन्द्रकान्ताख्यं पुरं निवेश्यताम् ॥ ६ ॥

वशे कृत्वा लक्ष्मणभरताभ्यां वशे कारयित्वाङ्गदस्य पुरीं न्यवेशयत् ॥ ७ ॥

तत्र देशेऽङ्गदस्य पुरी रामेण निवेशिता। लक्ष्मणद्वारेति शेषः ॥ ८ ॥

मल्लस्य दृढाङ्गस्य चन्द्रकेतोर्मल्लभूम्यां तदाख्ये कौशरे। अस्यैव चन्द्रकान्तेति। नामान्तरम्। तत्र चन्द्रकान्ताख्या पुरी निवेशिता ॥ ९ ॥

अभिषिच्य कुमारौ द्वा प्रस्थाप्य सुसमाहितौ।
अङ्गदं पश्चिमां भूमिं चन्द्रकेतुमुदङ्मुखम्॥ ११॥
अङ्गदश्चापि सौमित्रिर्लक्ष्मणोऽनुजगाम ह।
चन्द्रकेतोस्तु भरतः पार्ष्णिग्राहो बभूव ह॥ १२॥
लक्ष्मणस्त्वङ्गदीयायां संवत्सरमथोषितः।
पुत्रे स्थिते दुराधर्षे अयोध्यां पुनरागमत्॥ १३॥
भरतोऽपि तथैवोष्य संवत्सरमतोऽधिकम्।
अयोध्यां पुनरागम्य रामपादावुपास्त सः॥ १४॥
उभौ सौमित्रिभरतौ रामपादावनुव्रतौ।
कालङ्गतमपि स्नेहान्न जज्ञातेऽतिधार्मिकौ॥ १५॥
एवं वर्षसहस्राणि दश तेषां ययुस्तदा।
धर्मे प्रयतमानानां पौरकार्य्येषु नित्यदा॥ १६॥
विहृत्य कालं परिपूर्णमानसाः
श्रिया वृता धर्मपुरे च संस्थिताः।

युद्धे दुराधर्षौ रामादयोऽभिषेकञ्चक्रिरे। अङ्गदचन्द्रकेत्वोरिति शेषः॥ १०॥ ११॥ १२॥ १३॥

तथैवोष्य चन्द्रकेतुसमीपे इति शेषः॥ १४॥

न जज्ञाते नावगतवन्तौ। सन्धिरार्षः॥ १५॥

दशसहस्राणि। आयुस्त्वेकादशसहस्राणि इति स्पष्टमेव॥ १६॥

जयः समिद्धाकृतिदीप्ततेजसो
कृताग्रयः साधु महाध्वरे जयः ॥ १७ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
द्युत्तरशततमः सर्गः ॥ १०२ ॥

धर्मपुरे धर्मसाधने पुरे अयोध्यायाम्। अयोध्या मथुरा माया-
काशी काञ्ची अवन्तिका। पुरी द्वारवती चैव सप्तैता मोक्षदायका
ति स्मृतेः ॥ १७ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे द्युत्तरशततमः सर्गः ॥ १०२ ॥

---

## त्र्युत्तरशततमः सर्गः ।



कस्यचित्त्वथ कालस्य रामे धर्मपरे स्थिते ।
कालस्तापसरूपेण राजद्वारमुपागमत् ॥ १ ॥
दूतोऽह्यतिबलस्याहं महर्षेरमितौजसः ।
रामं दिदृक्षुरायातः कार्येण हि महाबलः ॥ २ ॥
तस्य तद्वचनं श्रुत्वा सौमित्रिस्त्वरयान्वितः ।
न्यवेदयत रामाय तापसं तं समागतम् ॥ ३ ॥
जयस्व राजधर्मेण उभौ लोकौ महाद्युते ! ।
दूतस्त्वां द्रष्टुमायातस्तपसा भास्करप्रभः ॥ ४ ॥
तद्वाक्यं लक्ष्मणेनोक्तं वै श्रुत्वा राम उवाच ह ।
प्रवेश्यतां मुनिस्तात ! महौजास्तस्य वाक्यधृक् ॥ ५ ॥

अथ रामाय स्वीयवैष्णवधामागमनकालनिवेदनाय ब्रह्मणो दूतप्रेषणम् । कस्यचिदिति । कस्यचित् कालस्यापगमानन्तरमिति शेषः । रामे धर्मपरे स्थिते कालस्तापसरूपेण राजद्वारमुपागमत् । १ ।

अतिबलस्य महर्षेः । जगत्प्राणरूपत्वाच्चतुर्वेदमुखत्वाच्च सत्यवचस्त्वाच्च ब्रह्मातिबलो महर्षिः । २ । ३ ।

उभौ लोकौ जयस्वेत्यनुज्ञया परलोकप्रवेशकालसूचनम् । ४ ।

सौमित्रिस्तु तथेत्युक्त्वा प्रावेशयत तं मुनिम् ।
ज्वलन्तमिव तेजोभिः प्रदहन्तमिवांशुभिः ॥ ६ ॥
सोऽभिगम्य रघुश्रेष्ठं दीप्यमानं स्वतेजसा ।
ऋषिर्मधुरया वाचा वर्धस्वेत्याह राघवम् ॥ ७ ॥
तस्मै रामो महातेजाः पूजामर्घ्यपुरोगमाम् ।
ददौ कुशलमव्यग्रं प्रष्टुञ्चैवोपचक्रमे ॥ ८ ॥
पृष्टश्च कुशलं तेन रामेण वदताम्बरः ।
आसने काञ्चने दिव्ये निषसाद महायशाः ॥ ९ ॥
तमुवाच ततो रामः स्वागतन्ते महामते ! ।
प्रापयास्य च वाक्यानि यतो दूतस्त्वमागतः ॥ १० ॥
चोदितो राजसिंहेन मुनिर्वाक्यमभाषत ।
द्वन्द्वे ह्येतत्प्रवक्तव्यं हितं वै यद्यवेक्षसे ॥ ११ ॥

तस्य वाक्यहृत् यस्य दूतस्तस्याज्ञाधारीत्यर्थः ॥ ५ ॥

तेजोभिरंशुभिरित्येते पदे शरीरकान्तिकिरणप्रतिपादके इति न पुनरुक्तिः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

अस्य यस्य त्वं दूतस्तस्य वाक्यानि सन्देशवाक्यानि प्रापयस्व निवेदय । तत्र हेतुर्यतो दूत इति ॥ १० ॥

द्वन्द्वे रहसि । हितं वै यद्यवेक्षसे । देवानामिति शेषः । देवगोप्य-गोपने हि देवानां हितं भवतीति भावः ॥ ११ ॥

यः शृणोति निरीक्षेद्वा स वध्यो भविता तव।
भवेद्वै मुनिमुख्यस्य वचनं यद्यवेक्ष्यसे ॥ १२ ॥
तथेति च प्रतिज्ञाय रामो लक्ष्मणमब्रवीत्।
द्वारि तिष्ठ महाबाहो ! प्रतिहारं विसर्जय ॥ १३ ॥
स मे वध्यः खलु भवेद्वाचं द्वन्द्वसमीरितम्।
ऋषेर्मम च सौमित्रे ! पश्येद्वा शृणुयाच्च यः ॥ १४ ॥
ततो निक्षिप्य काकुत्स्थो लक्ष्मणं द्वारि संग्रहम्।
तमुवाच मुने ! वाक्यं कथयस्वेति राघवः ॥ १५ ॥
तत्ते मनोषितं वाक्यं येन वासि समाहितः।

नैतावदेव किं त्वन्यापि प्रतिज्ञा कार्य्येत्याह। य इति। यः शृणो-त्यस्य तद्वचनं निरीक्षेद्वा मन्त्रयिताराविति शेषः। स तव वध्य इति। कथमेवमतिक्रूरा प्रतिज्ञा तत्राह। भवेदिति। तस्य मुनिमुख्यवचन-मेवं वै भवेत्। उक्तसङ्केतपूर्वमेव ब्रूहीत्येवाभवदित्यर्थः। यद्यवेक्ष्यसे तथासङ्केतपरिपालनमिति शेषः॥ १२॥

प्रतिहारं द्वारपालं विसर्जयान्यतोऽपसारय॥ १३॥

किमर्थं तत्राह। स मे इति। सौमित्रे मम ऋषेश्च द्वन्द्वं रहस्यां वाचं यः शृणुयात् यश्च नौ पश्येद्वा स मे मया वध्य इति खलु समी-रितं प्रतिज्ञातम्॥ १४॥

संग्रहं सम्यग्गृहीतार्थग्रहणवन्तम्॥ १५॥

ते मनोषितं येन वा समाहितः प्रेषितस्तस्य मनीषितं कथयस्व।

कथयस्वाविशङ्कस्त्वं ममापि हृदि वर्त्तते ॥ १६ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

ममापि हृदि वर्त्तते। किमेवंविधं रहस्यं तदवश्यं मया श्रोतव्यमिति शेषः। यद्वा त्वया वक्ष्यमाणं वैकुण्ठगमनं ममापि हृदि वर्त्तत इत्यर्थः। १६।

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

## चतुरधिकशततमः सर्गः ।



शृणु राजन् ! महासत्त्व ! यदर्थमहमागतः ।
पितामहेन देवेन प्रेषितोऽस्मि महाबल ! ॥ १ ॥
तवाहं पूर्वके भावे पुत्रः परपुरञ्जय ! ।
मायासम्भावितो वीर ! कालः सर्वसमाहरः ॥ २ ॥

अथ ब्रह्मसन्देशकथनम् । शृणिवति । यत्सन्देशकथनार्थमहमागतस्तं सन्देशं शृणु । किञ्च येन सन्देशः प्रेषितः स भगवान् पितामह एव न केवलं मुनिरेवेत्याह । पितामहेनेति ॥ १ ॥

तत्प्रेषितदूतोऽप्यहं त्वत्सम्बन्ध्येवेत्याह । तवाहं पूर्वके भावे इति । पूर्वावस्थायां हिरण्यगर्भोत्पत्तिसमये हिरण्यगर्भावस्थायां वा । कथमहं पुत्रस्तत्राह । मायासम्भावितः मायया सङ्कल्पेन सम्भावित उत्पादितः सर्वसमाहारः सर्ववस्तुसंहारकर्त्तेति तीर्थः । कतकस्तु तवाहं पूर्वसद्भावे इति पाठः । पूर्वं सृष्टेः प्राक्सद्भावे । स देवसोम्येदमग्र आसीदिति श्रुतेः । सत्तारूपब्रह्मभावे करिष्यमाणाखिलसंसारस्य सृष्टिस्थितिसंहारनियमानुग्रहलक्षणपञ्चकृत्यनिर्वाहकः कालाख्यः क्षणाद्यात्मको रात्रिन्दिवपक्षादिविभागनिर्वाहकः पुत्रो मायासम्भावितत्वादविलक्षणावतारिणाम् इत्यर्थः । शेषं प्राग्वत् । यद्यपि रामो

पितामहश्च भगवानाह लोकपतिः प्रभुः।
समयस्ते कृतः सौम्य! लोकान् सम्परिरक्षितुम् ॥ ३ ॥
संक्षिप्य हि पुरा लोकान् मायया स्वयमेव हि।
महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः ॥ ४ ॥

हिरण्यगर्भांशविष्णोरेवावतारस्तथापि तस्य स्वस्वरूपांशेनाहन्त्वान-
त्वाद्रामदेववदेवं व्यपदेशे न दोष इत्याह। यत्तु कतकेन सद्भावशब्देन
हिरण्यगर्भ उक्तस्तत्तु तुच्छमिति स्पष्टमेवाद्वैतविद्याविदाम् ॥ २ ॥

एवं स्वस्वरूपमुक्त्वा तत् सन्देशमाह। पितामहश्चेति। चतुर्मुखा-
ज्जातानां प्रजापतीनां लोकपितृत्वाच्चतुर्मुखः पितामहः। स लोकानां
भूरादीनां पतिः पालयिता। स यदाह तद्वदामीति शेषः। तदेवाह।
समयस्ते इति। भवन्तु विगतज्वरा इत्यन्तो ब्रह्मसन्देशः। लोकान्
देवमनुष्यादीन् रावणादितो रक्षितुं यः समयः कृतः। दशवर्षसह-
स्राणि दशवर्षशतानि च। वत्स्यामि मानुषे लोके पालयन् पृथिवी-
मिमामित्येवं रूपकालविषयः कृतः स परिपूर्ण इति शेषः ॥ ३ ॥

अथ तत्त्वतो ज्ञातसत्स्वरूपस्य मम कथं मानुषदेहपरिग्रह
इत्यत्र सप्रयोजनं तत्प्रक्रियामाह। संक्षिप्येति। पुरा प्रलयकाले
पूर्वकाले मायया सर्वसंहारसमर्थस्वशक्त्या संक्षिप्य उपसंहृत्य। इती-
नाप्रयासेन सकलसंहारकर्त्तृत्वं ब्रह्मणस्त्वयमुक्तम्। स्वयमेवेत्यनेनास्य
संहारस्य न ब्रह्मादिद्वारकत्वम्। तेषामपि संहार्यत्वेनाधिकारिकत्वादिति
दर्शितम्। एवं संहारं कृत्वा महदहङ्कारपञ्चतन्मात्राधिकरणकिरणं तेषां
तां वृत्तिं कृत्वा तदवस्थे महार्णवे शयान इत्यनेनैवोक्तमधिष्ठितः प्राक्

भोगवन्तं ततो नागमनन्तमुदकेशयम् ।
मायया जनयित्वा त्वं द्वौ च सत्त्वौ महाबलौ ॥ ५ ॥
मधुश्च कैटभश्चैव ययोरस्थिचयैर्वृता ।
इयं पर्वतसम्बाधा मेदिनी चाभवत्तदा ॥ ६ ॥
पद्मे दिव्येऽर्कसङ्काशे नाभ्यामुत्पाद्य मामपि ॥
प्राजापत्यं त्वया कर्म मयि सर्वं निवेशितम् ॥ ७ ॥

पुनरपृक्षिति तदा पृथिवीतत्त्वाद्यभावप्रदर्शनार्थः। मां पूर्वमजीजनः। यो ब्रह्माणं विदधाति पूर्वमिति श्रुतेः। हिरण्यगर्भसृष्टिद्वारा ब्रह्माण्डसृष्टौ क्रियमाणायान्तदण्डाम्भसोद्भव इत्यर्थः ॥ ४ ॥

तदुत्पत्तिप्रकारमाह। भोगवन्तमिति। ततः परं सृष्टये सृष्टभूधरक्षमं भोगवन्तं प्रशस्तभोगम् अनन्ताख्यं नागमुदकेशयं मायया जनयित्वा तत्र च निर्माय स्थापयित्वा तदुरगे शयनवांस्त्वमभूः। अथ कर्दमप्रायभूविग्रहस्थैर्याय महाबलौ द्वौ सत्त्वौ प्राणिनौ अजीजनः ॥ ५ ॥

कौ तौ तत्राह। मधुश्चेति। तत्र मधुर्मेदःप्रधानः। कैटभोऽस्थिप्रधानः। तत्सृष्टिप्रयोजनमाह। ययोरित्यादि। ययोर्वधानन्तरम् इयं निर्मिता भूरस्थिचयैर्वृता सती पर्वतसम्बाधा मेदोयुक्ततया हस्त्यायुत्पत्त्युचितस्निग्धभूप्रदेशयुक्ततया मेदिनीति नाम्नाभूत्। एवञ्च तस्याः प्रजासर्गयोग्यता सिद्धा ॥ ६ ॥

अथ चतुर्मुखसृष्टिः। पद्म इति। ततः स्वर्गनिर्मितैरुरगशयनस्य विग्रहस्य नाभिप्रदेशे अर्कसङ्काशमर्कप्रभं दिव्यं पद्ममुत्पाद्य तस्मिन् दिव्यं

सोऽहं सन्न्यस्तभारो हि त्वामुपास्य जगत्पतिम् ।
रक्षां विधत्स्व भूतेषु मम तेजस्करो भवान् ॥ ८ ॥
ततस्त्वमपि दुर्धर्षात्तस्माद्भावात् सनातनात् ।
रक्षाम्विधास्यन् भूतानां विष्णुत्वमुपजग्मिवान् ॥ ९ ॥
अदित्यां वीर्य्यवान् पुत्रो भ्रातॄणां वीर्य्यवर्धनः ।
समुत्पन्नेषु कृत्येषु तेषां साह्याय कल्पसे ॥ १० ॥
स त्वमुज्जास्यमानासु प्रजासु जगतोवर । ।

पूर्व्वे मात्मतनुं खमुत्पाद्य प्राजापत्यं सृष्टिरूपं कर्म मयि त्वया निवेशित-मित्यन्वर्थं मे प्रजापतिरिति नाम ॥ ७ ॥

ततः सोऽहं त्वया संन्यस्तभारः संन्यस्तसृष्टिभारः सकार्य्यं सृष्टि-कार्य्यं सम्पाद्य तदन्यत्कार्य्यमपश्यन् जगत्पतिं त्वामुपास्य । यतो भवान्मम तेजस्करः सृष्टिसमर्थज्ञानक्रियाशक्तिमयतेजःप्रदोऽभूदतस्त्वमेव भूतेषु रक्षां विधत्स्वेति प्रार्थितवानिति शेषः ॥ ८ ॥

ततो हेतोः रक्षायाः सर्व्वप्रसक्तौ त्वय्येव निवेशितत्वहेतोः । दुर्धर्ष-त्वाद्भावात् अस्यैव भूतानां ज्येष्ठं तेन कोऽर्हति धर्षितुमिति दुर्धर्षत्व-स्वभावात् । सनातनात् सकलसंसारमण्डलरक्षणेन [illegible] । त्रिगुणमहदनन्त्याद्यैर्हिरण्यगर्भभावात् सत्त्वप्रधानेन [illegible] विष्णुत्वं [illegible]-वान् ॥ ९ ॥

ततः अदित्यां वीर्य्यवान् दिव्यज्ञानक्रिया[illegible]-भूत्वं भ्रातृणामदितिपुत्रेन्द्रादीनां वीर्य्यवर्धन [illegible] च तत्तत्कृत्यकाले तेषां साह्याय कल्पसे । १० ॥

रावणस्य वधाकाङ्क्षी मानुषेषु मनोदधाः ॥ ११ ॥
दशवर्षसहस्राणि दशवर्षशतानि च ।
कृत्वा वासस्य नियमं स्वयमेवात्मना पुरा ॥ १२ ॥
स त्वं मनोमयः पुत्रः पूर्णायुर्मानुषेष्विह ।
कालो नरवरश्रेष्ठ ! समीपमुपवर्त्तितुम् ॥ १३ ॥
यदि भूयो महाराज ! प्रजा इच्छस्युपासितुम् ।
वस वा वीर ! भद्रन्ते एवमाह पितामहः ॥ १४ ॥

अतः स त्वं सकलप्रजारक्षणासाधारणक्षम उपेन्द्रः । साम्प्रतं रावणेन प्रजासु उत्त्रास्यमानासु हिंस्यमानासु । हे जगतो वर जगत् श्रेष्ठ स्वयमेव सर्वलोकानुग्रहाय रावणस्य वधाकांक्षी भूत्वा दशवर्षसहस्राणि दशवर्षशतानि च वासस्य नियमं परिच्छेदं पुरात्मना स्वयमेव कृत्वा मानुषेषु मानुषभावेषु मनोऽदधाः ॥ ११ । १२ ।

स त्वं मानुषेषु मनोमयः स्वसङ्कल्पमयः स्वसङ्कल्पादेव कस्यचित् पुत्रो जातः स च तव पूर्णायुः । त्वत्सङ्कल्पितायुषः पूर्णत्वमित्यर्थः । यथा श्रीमदादिपुरोत्तुरीयब्रह्मणो यस्य भासा सर्व्वमिदं विभातीकल्पितमुखसिद्धस्य सङ्कल्पमयो ज्येष्ठपुत्रो हिरण्यगर्भः कार्य्यब्रह्मरूपकार्य्यभिमानभूतब्रह्माण्डसमष्टाभिमानः स्वसङ्कल्पादेव मानुषेष्वपि कस्यचित् पुत्रत्वेनापि पूर्णायुर्जातो यदेवमतो हे नरवरश्रेष्ठायं कालस्ते स्वलोकसमीपमुपवर्त्तितुं विज्ञापयितुं प्रेषित इति शेषः । १३ ।

समयमेवाह । अतःपरं त्वं स्वकीयत्वाद्यदि भूयोऽपि प्रजा उपासितुमिव स्थित्वा रक्षितुमिच्छसि तदा हे वीर रामवस । १४ ।

अथवा विजिगीषा ते सुरलोकाय राघव!।
सनाथा विष्णुना देवा भवन्तु विगतज्वराः ॥ १५ ॥
श्रुत्वा पितामहेनोक्तं वाक्यं कालसमीरितम् ।
राघवः प्रहसन् वाक्यं सर्वसंहारमब्रवीत् ॥ १६ ॥
श्रुत्वा मे देवदेवस्य वाक्यं परममद्भुतम् ।
प्रीतिर्हि महती जाता तवागमनसम्भवा ॥ १७ ॥
त्रयाणामपि लोकानां कार्य्यार्थं मम सम्भवः ।
भद्रन्तेऽस्तु गमिष्यामि यत एवाहमागतः ॥ १८ ॥

अथवा अथचेत् स्वकृतनियममङ्गीकृत्य सुरलोकाय विजिगीषा सुरलोकं पालयितुं यदीच्छा तदापीन्द्ररूपेण विष्णुना देवाः सनाथा विगतज्वरा भवन्त्वित्येवं पितामह आहेत्यन्वयः। १५।

कालसमीरितं दूतरूपकालोक्तम्। प्रहसन्निति। अहमेव स्वकृतमर्य्यादां न त्यक्ष्यामि वृथायं सम्भ्रमः पितामहस्येतिहासः। सर्वसंहारं कालम्। १६।

देवदेवस्य सर्वदेवोपास्यस्य। परममद्भुतं परमं मदभिप्रायप्रकाशकत्वात्। वाक्यं श्रुत्वा महती प्रीतिर्जाता। तवागमनसम्भवा च महती प्रीतिर्जाता। १७।

एवं सन्देशानुमोदनं कृत्वा प्रतिसन्देशमाह। त्रयाणामिति। त्रयाणां भूर्भुवः स्वर्लोकानां कार्य्यार्थं प्रयोजनार्थं मम मनुष्यत्वेन सम्भव इति मयाप्यवगम्यते। यद्वा तत्तद्देवप्रार्थ्यपि [illegible]

अङ्गतोऽस्मि सम्प्राप्तो न मे तत्र विचारणा।
मया हि सर्वकृत्येषु देवानां वशवर्त्तिनाम्।
स्थातव्यं सर्वसंहार यथा ह्याह पितामहः॥ १९ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
चतुरधिकशततमः सर्गः॥ १०४ ॥

व्यवहरन्नपि आत्मानं जानत्येव तदत्सोऽहं यतो यस्माल्लोकादिहागतस्तमेव गमिष्यामि॥ १८॥

हे संहाररूप काल त्वं मे हृद्गत एव प्राप्तोऽसि अतस्तत्र गमने विचारणा नास्ति। हृद्गतो ह्यस्मि सम्प्राप्त इति पाठे यो भावो मम हृद्गतः शुद्धब्रह्मात्मकः प्राप्तव्यत्वेन स मे प्राप्त एवास्ति तत्र मे नविचारणा। ननु तर्हि तदेव प्राप्यतां किमनेनोपेन्द्रादिलोकगमनेन तत्राह। मया होति। वशवर्त्तिनां मद्विधेयानां सर्वकृत्येषु स्थातव्यमतो यथा पितामह आह तथा करिष्यामीति शेषः। वशवर्त्तिनेति तृतीयान्तपाठे देवानां सर्वकृत्येषु पितामहस्य वशवर्त्तिना स्थातव्यमित्यर्थः। प्रजारक्षणोद्देश्यकतपःशालिकमहद्वरप्रदानादिति भावः॥ १९॥

इति रामाभिरामे श्रीरामीये रामायणतिलके उत्तरकाण्डे
चतुरधिकशततमः सर्गः॥ १०४ ॥

## पञ्चोत्तरशततमः सर्गः ।



तथा तयोः संवदतोर्दुर्वासा भगवानृषिः ।
रामस्य दर्शनाकाङ्क्षी राजद्वारमुपागमत् ॥ १ ॥
सोऽभिगम्य तु सौमित्रिमुवाच ऋषिसत्तमः ।
रामं दर्शय मे शीघ्रं पुरा मेऽर्थोऽतिवर्त्तते ॥ २ ॥
मुनेस्तु भाषितं श्रुत्वा लक्ष्मणः परवीरहा ।
अभिवाद्य महात्मानं वाक्यमेतदुवाच ह ।
किं कार्य्यं ब्रूहि भगवन् ! कोऽर्थः किङ्करोम्यहम् ।
व्यग्रो हि राघवो ब्रह्मन् ! मुहूर्त्तं परिपाल्यताम् ॥ ४ ॥
तच्छ्रुत्वा ऋषिशार्दूलः क्रोधेन कलुषीकृतः ।

एवं द्वन्द्वकथासमये कालात्मकभगवत्प्रेरणया दुर्वासा आजगमत् । तथेति ॥ १ ॥

मेऽर्थोऽतिवर्त्ततेऽतिक्रामति अतः पुरा पूर्वमेव शीघ्रं रामं दर्शय ॥ २ ॥ ३ ॥

किं कार्य्यं कर्त्तव्यम् । कोऽर्थः किं प्रयोजनम् । किं करोमि ।

उवाच लक्ष्मणं वाक्यं निर्दहन्निव चक्षुषा ॥ ५ ॥
अस्मिन् क्षणे मां सौमित्रे! रामाय प्रतिवेदय।
विषयन्त्वां पुरञ्चैव शपिष्ये राघवं तथा ॥ ६ ॥
भरतञ्चैव सौमित्रे! युष्माकं या च सन्ततिः।
न हि शक्ष्याम्यहं भूयो मन्युं धारयितुं हृदि ॥ ७ ॥
तच्छ्रुत्वा घोरसङ्काशं वाक्यं तस्य महात्मनः।
चिन्तयामास मनसा तस्य वाक्यस्य निश्चयम् ॥ ८ ॥
एकस्य मरणं मेऽस्तु माभूत् सर्वविनाशनम्।
इति बुद्ध्या विनिश्चित्य राघवाय न्यवेदयत् ॥ ९ ॥
लक्ष्मणस्य वचः श्रुत्वा रामः कालं विसृज्य च।
निःसृत्य त्वरितो राजा अत्रेः पुत्रं ददर्श ह ॥ १० ॥
सोऽभिवाद्य महात्मानं ज्वलन्तमिव तेजसा।
किं कार्य्यमिति काकुत्स्थः कृताञ्जलिरभाषत ॥ ११ ॥
तद्वाक्यं राघवेणोक्तं श्रुत्वा मुनिवरः प्रभुः।
प्रत्याह रामं दुर्वासाः श्रूयतां धर्मवत्सल! ॥ १२ ॥

वर्त्तमानसामीप्ये लट्। किं करिष्ये। कस्तएवं सङ्कटकालस्तत्राह। वयमो ष्टीति ॥ ४ ॥ ५ ॥

रामाय प्रतिवेदय। यदि न प्रतिवेदयेस्तर्हि विषयादिकं शपे इत्यर्थः ॥ ६ ॥ ७ ॥ ८ ॥

अद्य वर्षसहस्रस्य समाप्तिर्मम राघव!।
सोऽहं भोजनमिच्छामि यथासिद्धं तवानघ! ॥ १३ ॥
तच्छ्रुत्वा वचनं राजा राघवः प्रीतमानसः।
भोजनं मुनिमुख्याय यथासिद्धमुपाहरत् ॥ १४ ॥
स तु भुक्त्वा मुनिश्रेष्ठस्तदन्नममृतोपमम्।
साधु रामेति सम्भाष्य स्वमाश्रममुपागमत् ॥ १५ ॥
संस्मृत्य कालवाक्यानि ततो दुःखमुपागमत्।
दुःखेन च सुसन्तप्तः स्मृत्वा तद्घोरदर्शनम् ॥ १६ ॥
अवाङ्मुखो दीनमना व्याहर्तुं न शशाक ह।
ततो बुद्ध्या विनिश्चित्य कालवाक्यानि राघवः ॥ १७ ॥

एकस्य मरणं मेऽस्तु। द्वन्द्वमध्ये पुरुषान्तरसन्दर्शकत्वे यथाप्रतिज्ञं मम वधस्य प्राप्तत्वादिति भावः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

वर्षसहस्रस्य अनशननियमपरिगृहीतवर्षसहस्रस्येत्यर्थः। यथासिद्धं यथोपपन्नम् ॥ १३ ॥

राघवः प्रीतमानसः। मुनिकोपः परिहृत इति प्राप्तसन्तोषः ॥ ॥ १४ ॥ १५ ॥

ततोऽनन्तरं कालवाक्यानि मन्त्रश्रोतृरात्रयोर्मध्ये वधविषयकाणि ॥ १६ ॥

कालवाक्यानि बुद्ध्या निश्चित्य सम्भाव्यभ्रातृवर्गस्योपसंहारः कालप्राप्त उचित एवेति निश्चित्य ॥ १७ ॥

नैतदस्तीति निश्चित्य तूष्णीमासीन्महायशाः ॥ १८ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥

तन्मम भ्रातृभरतादि सर्वं नास्तीति च निश्चित्य तूष्णीमासीत् ॥ १८ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥

---

## षडुत्तरशततमः सर्गः ।

---

अवाङ्मुखमथो दीनं दृष्ट्वा सोममिवाप्लुतम् ।
राघवं लक्ष्मणो वाक्यं हृष्टो मधुरमब्रवीत् ॥ १ ॥
न सन्तापं महाबाहो ! मदर्थं कर्तुमर्हसि ।
पूर्वनिर्माणबद्धा हि कालस्य गतिरीदृशी ॥ २ ॥
जहि मां सौम्य ! विस्रब्धं प्रतिज्ञां परिपालय ।
हीनप्रतिज्ञाः काकुत्स्थ ! प्रयान्ति नरकं नराः ॥ ३ ॥
यदि प्रीतिर्महाराज ! यद्यनुग्राह्यता मयि ।
जहि मां निर्विशङ्कस्त्वं धर्मं वर्धय राघव ! ॥ ४ ॥
लक्ष्मणेन तथोक्तस्तु रामः प्रचलितेन्द्रियः ।

अथ लक्ष्मणविसर्जनम् । अवाङ्मुखमिति । आप्लुतं राहुग्रस्तम् । हृष्टः सुमन्त्रवाक्यतः पूर्वमेव रामकर्तृकस्वपरित्यागस्यावगतत्वाद्विषादरहित इत्यर्थः ॥ १ ॥

तदेवाह । पूर्वेति । पूर्वनिर्माणेन प्रागभवीयकर्मणा बद्धा कल्पिता ईदृशी संयोगा विप्रयोगान्ता मरणान्तश्च जीवितमित्युपदिष्टस्वभाववतीत्यर्थः ॥ २ ॥ ३ ॥ ४ ॥

मन्त्रिणः समुपानीय तथैव च पुरोधसः ॥ ५ ॥
अब्रवीच्च तदा वृत्तं तेषां मध्ये स राघवः ।
दुर्वाससोऽभिगमञ्चैव प्रतिज्ञां तापसस्य च ॥ ६ ॥
तच्छ्रुत्वा मन्त्रिणः सर्वे सोपाध्यायाः समासत ।
वशिष्ठस्तु महातेजा वाक्यमेतदुवाच ह ॥ ७ ॥
दृष्टमेतन्महाबाहो ! क्षयं ते रोमहर्षणम् ।
लक्ष्मणेन वियोगश्च तव राम ! महायशः ! ॥ ८ ॥
त्यजैनं बलवान् कालो मा प्रतिज्ञां वृथा कृथाः ।
प्रतिज्ञायां हि नष्टायां धर्मो हि विलयं व्रजेत् ॥ ९ ॥
ततो धर्मे विनष्टे तु त्रैलोक्यं सचराचरम् ।
सदेवर्षिगणं सर्वं विनश्येत्तु न संशयः ॥ १० ॥
स त्वं पुरुषशार्दूल ! त्रैलोक्यस्याभिपालनात् ।
लक्ष्मणेन विना चाद्य जगत्स्वस्थं कुरुष्व ह ॥ ११ ॥
तेषां तत्समवेतानां वाक्यं धर्मार्थसहितम् ।

प्रचलितेन्द्रियः त्वक्लावाङ्मुखमौनतया प्रवृत्तवाग्व्यापारः ॥ ५ ॥ ६ ॥
समासत तूष्णीं स्थिताः ॥ ७ ॥

दृष्टमेतत् क्षयं क्षय एष दृष्टः । मया तपोबलेनेति शेषः । मां द्रष्टुमागतेन त्वत्पित्रा दृष्टस्य मदाश्रमस्थदुर्वाससो मुखाच्चेति ॥ ८ ॥

त्यजेत्यादिना प्रतिज्ञापालनं धर्मः क्षत्रियस्य विशेषत इति सूचितम् ॥ ९ ॥ १० ॥

श्रुत्वा परिषदो मध्ये रामो लक्ष्मणमब्रवीत् ॥ १२ ॥
विसर्जये त्वां सौमित्रे ! माभूद्धर्मविपर्य्ययः ।
त्यागो वधो वा विहितः साधूनां ह्युभयं समम् ॥ १३ ॥
रामेण भाषिते वाक्ये बाष्पव्याकुलितेन्द्रियः ।
लक्ष्मणस्त्वरितः प्रायात् स्वगृहं न विवेश ह ॥ १४ ॥
स गत्वा सरयूतीरमुपस्पृश्य कृताञ्जलिः ।
निगृह्य सर्वस्रोतांसि निःश्वासं न मुमोच ह ॥ १५ ॥
अनिःश्वसन्तं युक्तन्तं सशक्राः साप्सरोगणाः ।
देवाः सर्षिगणाः सर्वे पुष्पैरभ्यकिरंस्तदा ॥ १६ ॥
अदृश्यं सर्वमनुजैः सशरीरं महाबलम् ।
प्रगृह्य लक्ष्मणं शक्रस्त्रिदिवं संविवेश ह ॥ १७ ॥

अभिपालनादभिरक्षणसिद्धिहेतोः । लक्ष्मणेन विना चाद्य । लक्ष्मण-त्यागपूर्वकमयावस्थानेनेत्यर्थः ॥ ११ ॥ १२ ॥

इष्टस्य त्यागो वा वधो वा तदुभयं साधूनां सममेवेति त्वां विस-र्जये वधप्रतिज्ञापालनायेति भावः ॥ १३ ॥

रामेण भाषित इत्युक्तरीत्येति शेषः । बाष्पव्याकुलितेन्द्रियो राम-वियोगासहिष्णुतया न तु स्वशरीरहानिभयेनेति भावः । तदेवाह । स्वगृहं न प्रविवेश हेति । प्रायात् सरयूतीरमिति शेषः ॥ १४ ॥

सर्वस्रोतांसि सर्वेन्द्रियद्वाराणि ॥ १५ ॥

युक्तं योगयुक्तम् । अभ्यकिरन्नभिवृष्टवन्तः ॥ १६ ॥

अदृश्यं योगबलादन्तर्द्धानमुपगतम् । यद्वादृश्यं यथा तथा सश-

ततो विष्णोश्चतुर्भागमागतं सुरसत्तमाः ।
हृष्टाः प्रमुदिताः सर्वे पूजयन्ति स्म राघवम् ॥ १८ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
षड्त्तरशततमः सर्गः ॥ १०६ ॥

रीरं लक्ष्मणं प्रगृह्य शक्रस्त्रिदिवं संविवेश । अनेन मनुष्यशरीरसंस्थानमेव देवशरीरसंस्थानं प्राप्तं न तु पूर्वशरीरपरित्यागः शरीरान्तरपरिग्रहश्चेति सूचित एव । एतेन जन्मापि तथैवेति च सूचितम् ॥ १७ ॥

चतुर्भागं चतुर्थं भागम् । अत्र कतकः । शेषसुदर्शनविष्वक्सेनैः शेषशायी विष्णुः स्वमूर्त्या चतुर्भागवान् । तत्र शेषांशो लक्ष्मणः । गरुडांशो भरतः । विष्वक्सेनांशः शत्रुघ्न इति । इदं पाद्मविरुद्धम् । तत्र हि भरतशत्रुघ्नौ शङ्खचक्रांशावित्युक्तमिति प्रागुदर्शितम् । गरुडस्य स्वरूपेणैव रामसविधे आगमनमुक्तं युद्धकाण्डे तेन विरुद्धश्च ॥ १८ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे षड्त्तरशततमः सर्गः ॥ १०६ ॥

# सप्तोत्तरशततमः सर्गः ।

विसृज्य लक्ष्मणं रामो दुःखशोकसमन्वितः ।
पुरोधसो मन्त्रिणश्च नैगमांश्चेदमब्रवीत् ॥ १ ॥
अद्य राज्येऽभिषेक्ष्यामि भरतं धर्मवत्सलम् ।
अयोध्यायाः पतिं वीरं ततो यास्याम्यहं वनम् ॥ २ ॥
प्रवेशयत सम्भारान् माभूत् कालात्ययो यथा ।
अद्यैवाहं गमिष्यामि लक्ष्मणेन गतां गतिम् ॥ ३ ॥
तच्छ्रुत्वा राघवेणोक्तं सर्वाः प्रकृतयो भृशम् ।
मूर्धभिः प्रणता भूमौ गतसत्वा इवाभवन् ॥ ४ ॥
भरतश्च विसंज्ञोऽभूच्छ्रुत्वा राघवभाषितम् ।
राज्यं विगर्हयामास वचनञ्चेदमब्रवीत् ॥ ५ ॥

अथ भरतवचनेन कुशलवयो राज्याभिषेकपूर्वं प्रस्थापनं शत्रुघ्नाय दूतप्रेषणञ्च । विसृज्येति । १ ।

भरतमयोध्यायाः पतिमभिषेक्ष्यामीति मनोरथं करोमि ततोऽहं वनं यास्यामि । महाप्रस्थानविधिनेति शेषः । २ ।

सम्भारान् भरताभिषेकार्थान् । ३ । ४ । ५ ।

सत्येनाहं शपे राजन् ! स्वर्गभोगेन चैव हि ।
न कामये यथा राज्यं त्वां विना रघुनन्दन ! ॥ ६ ॥
इमौ कुशीलवौ राजन्नभिषिच्य नराधिप ! ।
कोशलेषु कुशं वीरं उत्तरेषु तथा लवम् ॥ ७ ॥
शत्रुघ्नस्य च गच्छन्तु दूतास्त्वरितविक्रमाः ।
इदं गमनमस्माकं शीघ्रमाख्यातु माचिरम् ॥ ८ ॥
तच्छ्रुत्वा भरतेनोक्तं दृष्ट्वा चापि ह्यधोमुखान् ।
पौरान् दुःखेन सन्तप्तान् वसिष्ठो वाक्यमब्रवीत् ॥ ९ ॥
वत्स ! राम ! इमाः पश्य धरणीं प्रकृतीर्गताः ।
ज्ञात्वैषामीप्सितं कार्य्यं मा चैषां विप्रियं कृथाः ॥ १० ॥
वसिष्ठस्य तु वाक्येन उत्थाप्य प्रकृतीजनम् ।

त्वां विना यथा राज्यञ्च त्वदाज्ञया यथानुक्रमप्राप्तमयोध्याराज्यं न कामये। त्वां विना प्राप्येन स्वर्गभोगेन च न कामये। सुखभोगमिति शेषः। हे राजन्निममर्थं सत्येन शपे ॥ ६ ॥

तर्हि किं राज्यं शून्यमेवास्तु तत्राह,—इमाविति। उत्तरेषु उत्तरकोशलेषु ॥ ७ ॥

इदमस्माकं प्रवर्त्तमानं गमनं गमनोद्योगं शत्रुघ्नस्य शीघ्रमाख्यातुं कथयितुं माचिरम् अविलम्बं यथा भवति तथा दूता गच्छन्तु। आख्यातु माचिरमित्यत्र आनुस्वारलोप आर्षः ॥ ८। ९ ॥

एषा मीप्सितं ज्ञात्वा यत्कार्य्यं यत्कारयाहं तत्कर्त्तव्यम् ॥ १० ॥

किं करोमीति काकुत्स्थः सर्वान् वचनमब्रवीत् ॥ ११ ॥
ततः सर्वाः प्रकृतयो रामं वचनमब्रुवन्।
गच्छन्तमनुगच्छामो यत्र राम ! गमिष्यसि ॥ १२ ॥
पौरेषु यदि ते प्रीतिर्यदि स्नेहो ह्यनुत्तमः।
सपुत्रदाराः काकुत्स्थ ! समं गच्छाम सत्पथम् ॥ १३ ॥
तपोवनं वा दुर्गं वा नदीमम्भोनिधिं तथा।
वयन्ते यदि न त्याज्याः सर्वान्नो नय ईश्वर ! ॥ १४ ॥
एषा नः परमा प्रीतिरेष नः परमो वरः।
हृद्गता नः सदा प्रीतिस्तवानुगमने नृप ! ॥ १५ ॥
पौराणां दृढभक्तिञ्च बाढमित्येव सोऽब्रवीत्।
स्वकृतान्तं चान्ववेक्ष्य तस्मिन्नहनि राघवः ॥ १६ ॥
कोशलेषु कुशं वीरमुत्तरेषु तथा लवम्।

प्रकृतीजनमित्यत्र दीर्घ आर्षः । ११ ।

हे राम यत्र त्वं गमिष्यसि तत्र गच्छन्तन्त्वामनुगच्छामः । १२ ।

सत्पथं त्वया गम्यमानं स्वर्गमार्गमित्यर्थः । १३ ।

वयं त्वदेकशरणा यदि ते न त्याज्यास्तदागम्यमानतपोवनादिस्थानमं ततु नः सर्वान्नय । तत्र हेतुरीश्वरेति । भगवदवतारत्वात् सर्वस्वभक्तलोकनयनसमर्थो यतस्त्वमित्यर्थः ॥ १४ । १५ ।

पौराणामनुगमनविषयां दृढभक्तिमन्ववेक्ष्य स्वकृतान्तं स्वकार्यसिद्धान्तं चान्ववेक्ष्य बाढमित्यब्रवीत् । १६ ।

अभिषिच्य महात्मानावुभौ रामः कुशीलवौ । १७ ॥
अभिषिक्तौ सुतावङ्के प्रतिष्ठाप्य पुरे ततः ।
रथानान्तु सहस्राणि नागानामयुतानि च ।
दश चाश्वसहस्राणि एकैकस्य धनं ददौ ॥ १८ ॥
बहुरत्नौ बहुधनौ हृष्टपुष्टजनाश्रयौ ।
स्वे पुरे प्रेषयामास भ्रातरौ तौ कुशीलवौ ॥ १९ ॥
अभिषिच्य ततो वीरौ प्रस्थाप्य स्वपुरे तदा ।
दूतान् संप्रेषयामास शत्रुघ्नाय महात्मने ॥ २० ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

अभिषिच्य प्रस्थापयामासेति शेषः ॥ १७ ॥
पुरेऽयोध्यायां स्वसमीपे कोशलद्वयराज्यार्थमभिषिक्तौ सुतावङ्के प्रतिष्ठाप्य परिष्वज्य मूर्ध्न्युपाघ्राय च रथादिकं ददौ । १८ ॥ १९ ॥२०॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

---

## अष्टोत्तरशततमः सर्गः ।

---

ते दूता रामवाक्येन चोदिता लघुविक्रमाः ।
प्रजग्मुर्मधुरां शीघ्रं चक्रुर्वासं न चाध्वनि ॥ १ ॥
ततस्त्रिभिरहोरात्रैः संप्राप्य मधुरामथ ।
शत्रुघ्नाय यथातत्त्वमाचख्युः सर्वं एव तत् ॥ २ ॥
लक्ष्मणस्य परित्यागं प्रतिज्ञां राघवस्य च ।
पुत्रयोरभिषेकञ्च पौरानुगमनं तथा ॥ ३ ॥
कुशस्य नगरी रम्या विन्ध्यपर्वतरोधसि ।
कुशावतीति नाम्ना सा कृता रामेण धीमता ॥ ४ ॥
श्रावस्तीति पुरी रम्या श्राविता च लवस्य ह ।
अयोध्यां विजनां कृत्वा राघवो भरतस्तथा ॥ ५ ॥

अथानुगमनायागतानां शत्रुघ्नसुग्रीवविभीषणादीनामनुगमनाव-स्थानव्यवस्था । ते दूता इति ॥ १ ॥ २ ॥

राघवस्य प्रतिज्ञां कालपुरुषं प्रति अन्यलोकागमनप्रतिज्ञाम् । पौरानुगमनं पौरानुगमनानुमतिम् ॥ ३ ॥

कुशस्य कुशावतीति नाम्ना पुरी रामेण कृता ॥ ४ ॥

स्वर्गस्य गमनोद्योगं कृतवन्तौ महारथौ ।
एवं सर्वं निवेद्याशु शत्रुघ्नाय महात्मने ॥ ६ ॥
विरेमुस्ते ततो दूतास्त्वर राजेति चाब्रुवन् ।
तच्छ्रुत्वा घोरसङ्काशं कुलक्षयमुपस्थितम् ॥ ७ ॥
प्रकृतीस्तु समानीय काञ्चनञ्च पुरोधसम् ।
तेषां सर्वं यथावृत्तमब्रवीद्रघुनन्दनः ॥ ८ ॥
आत्मनश्च विपर्य्यासं भविष्यं भ्रातृभिः सह ।
ततः पुत्रद्वयं वीरः सोऽभ्यषिञ्चन्नराधिपः ॥ ९ ॥
सुबाहुर्मधुरां लेभे शत्रुघाती च वैदिशम् ।
द्विधा कृत्वा तु तां सेनां माधुरीं पुत्रयोर्द्वयोः ॥
धनञ्च युक्तं कृत्वा वै स्थापयामास पार्थिवः ॥ १० ॥
सुबाहुं मधुरायाञ्च वैदिशे शत्रुघातिनम् ।
ययौ स्थाप्य तदायोध्यां रथेनैकेन राघवः ॥ ११ ॥

लवस्य च पुरी श्रावस्तीति नाम्ना भाविता लोके प्रसिद्धिं प्रापिता । ५ । ६ ।

त्वर गमनाय त्वरितो भवेति । राजेति राजन्नित्यर्थः । ७ ।

काञ्चनं काञ्चनाख्यम् । यथावृत्तमब्रवीत् । लक्ष्मणत्यागस्य निर्द्देतु-कत्वप्रख्यापनार्थमिति भावः । ८ ।

विपर्य्यासन्देहवियोगम् । भविष्यं भविष्यन्तम् । ततः एतत्कथा-नन्तरम् । ९ ।

स ददर्श महात्मानं ज्वलन्तमिव पावकम्।
सूक्ष्मक्षौमाम्बरधरं मुनिभिः सार्धमच्युतैः॥ १२॥
सोऽभिवाद्य ततो रामं प्राञ्जलिः प्रयतेन्द्रियः।
उवाच वाक्यं धर्मज्ञं धर्ममेवानुचिन्तयन्॥ १३॥
कृत्वाभिषेकं सुतयोर्द्वयो राघवनन्दन!।
तवानुगमने राजन्विद्धि मां कृतनिश्चयम्॥ १४॥
न चान्यदद्य वक्तव्यमतो वीर! न शासनम्।
विहन्यमानमिच्छामि मद्विधेन विशेषतः॥ १५॥
तस्य तां बुद्धिमक्लीवां विज्ञाय रघुनन्दनः।
बाढमित्येव शत्रुघ्नं रामोवाक्यमुवाच ह॥ १६॥
तस्य वाक्यस्य वाक्यान्ते वानराः कामरूपिणः।

वैदिशन्तदाख्यं नगरम्। धनञ्च युक्तं कृत्वा किञ्चिदधिकं ज्येष्ठाय कनिष्ठाय च समविभागं दत्वा॥ १०॥ ११॥

मुनिभिः सार्धमासीनमिति शेषः॥ १२॥ १३॥ १४॥

अन्यदद्य न वक्तव्यम्। मां मानुगच्छेति न वक्तव्यमित्यर्थः। अतोऽस्मात् वाक्यादधिकं हे वीर शासनं दद्यामेत्यर्थः। विलोक्यमानमिच्छामि त्वद्विधेन विशेषत इति पाठे त्वद्विधेन परमानुग्रहसमर्थेन विलोक्यमानमनुगृह्यमाणमेवेच्छामि आत्मानमिति शेषः इत्यर्थः। विहन्यमानमिच्छामि मद्विधेन विशेषत इति पाठे हे वीर तव शासनं मद्विधेन विहन्यमानं नेच्छामीति सम्बन्धः॥ १५॥ १६॥

ऋचराश्चसंघाश्च समापेतुरनेकशः ॥ १७ ॥
सुग्रीवस्ते पुरस्कृत्य सर्वे एव समागताः ।
तं रामं द्रष्टुमनघः स्वर्गायाभिमुखं स्थितम् ॥ १८ ॥
देवपुत्रा ऋषिसुता गन्धर्वाणां सुतास्तथा ।
रामक्षयं विदित्वा ते सर्वएव समागताः ॥ १९ ॥
तवानुगमने राजन् ! संप्राप्ताः स्म समागताः ।
यदि राम ! विनास्माभिर्गच्छेस्त्वं पुरुषोत्तम ! ॥ २० ॥
यमदण्डमिवोद्यम्य त्वया स्म विनिपातिताः ।
एतस्मिन्नन्तरे रामं सुग्रीवोऽपि महाबलः ॥ २१ ॥
प्रणम्य विधिवद्वीरं विज्ञापयितुमुद्यतः ॥ २२ ॥
अभिषिच्याङ्गदं वीरमागतोऽस्मि नरेश्वर ! ।
तवानुगमने राजन्विद्धि मां कृतनिश्चयम् ॥ २३ ॥
तैरेवमुक्तः काकुत्स्थो बाढ़मित्यब्रवीत् स्मयन् ।
विभीषणमथोवाच राक्षसेन्द्रं महायशाः ॥ २४ ॥

तस्य वाक्यस्य वाक्यान्ते उच्चारणान्ते इत्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥
समागता मिलिताः ॥ २० ॥
यमदण्डमुद्यम्येव त्वया निपातिताः स्म हताः स्मेत्यर्थः ॥२१॥२२॥२३॥
एवन्तेषामनुगमनवचः श्रुत्वा मह्याज्ञापरिपालनाय व्यवस्थामाह,—
विभीषणमिति ॥ २४ ॥

यावत्प्रजा धरिष्यन्ति तावत्त्वं वै विभीषण!।
राक्षसेन्द्र! महावीर्य्य! लङ्कास्थः स्वं धरिष्यसि॥ २५॥
यावच्चन्द्रश्च सूर्य्यश्च यावत्तिष्ठति मेदिनी।
यावच्च मत्कथा लोके तावद्राज्यं तवास्त्विह॥ २६॥
शासितश्च सखित्वेन कार्य्यन्ते मम शासनम्।
प्रजाः संरक्ष धर्मेण नोत्तरं वक्तुमर्हसि॥ २७॥
किञ्चान्यद्वक्तुमिच्छामि राक्षसेन्द्र महाबल!।
आराधय जगन्नाथमिक्ष्वाकुकुलदैवतम्॥
राजा राक्षसमुख्यानां राघवाज्ञामनुस्मरन्॥ २८॥
तमेवमुक्त्वा काकुत्स्थो हनूमन्तमथाब्रवीत्।
जीविते क्रतबुद्धिस्त्वं मा प्रतिज्ञां वृथा क्रथाः॥ २९॥

तत्र विभीषणस्य ब्रह्मणाऽमरत्वप्रदानादिहावस्थानमेव शास्ति। यावदिति। प्रजा धरिष्यन्ति स्थास्यन्ति तावत्त्वं स्वं स्वीयं देहं धरिष्यसि॥ २५। २६।

शासितः आज्ञप्तः। २७॥

अत्र स्थाने पाद्मे विशेषः। तावन्मम स्वराज्यस्थः काले मम पदं व्रज। इत्युक्त्वा प्रददौ तस्मै स्वविश्लेषासहिष्णवे। श्रीरङ्गशायिनं स्वार्च्चामिक्ष्वाकुकुलदैवतम्। रङ्गं विमानमादाय लङ्कां प्रायाद्विभीषण इति तदाह,—किञ्चेति। इदं श्लोकद्वयं प्रक्षिप्तमित्यन्ये॥ २८॥

अथ हनूमतोऽपि ब्रह्मदत्तामरत्वात् यावद्रामकथाप्रचारं भूलोके

मत्कथाः प्रचरिष्यन्ति यावल्लोके हरीश्वर ! ।
तावद्रमस्व सुप्रीतो मद्वाक्यमनुपालयन् ॥ ३० ॥
एवमुक्तस्तु हनुमान् राघवेण महात्मना ।
वाक्यं विज्ञापयामास परं हर्षमवाप च ॥ ३१ ॥
यावत्तव कथा लोके विचरिष्यति पावनी ।
तावत्स्थास्यामि मेदिन्यां तवाज्ञामनुपालयन् ॥ ३२ ॥
जाम्बवन्तं तथोक्त्वा तु वृद्धं ब्रह्मसुतं तदा ।
मैन्दश्च द्विविदश्चैव पञ्च जाम्बवता सह ॥ ३३ ॥
यावत्कलिश्च संप्राप्तस्तावज्जीवत सर्वदा ॥ ३४ ॥

तच्छ्रवणस्य प्रार्थितत्वात् तथा रामेणानुज्ञातत्वाच्च तं स्थापयति। जीवित इति। जीवदवस्थाने कृतबुद्धिः कृतनिश्चयः। अतः स्वकृतां प्रतिज्ञां मा वृथा कृथाः। मा विलोमयेत्यर्थः ॥ २९ ॥

उक्तमेवार्थं स्पष्टयति। मत्कथा इति ॥ ३० ॥ ३१ ॥ ३२ ॥

एवं जाम्बवतोऽपि ब्रह्मपुत्रत्वाद्ब्रह्मणैव दत्तामरत्वात् स्थापनम्। तथा मैन्दद्विविदयोरपि तत्पित्राश्विनीकुमारानुग्रहेणामृतप्राशनात् स्थापनम्। जाम्बवन्तमिति। ब्रह्मसुतं वृद्धं जाम्बवन्तं मैन्दद्विविदं तथोक्त्वा प्राणान् धारयतेत्युक्त्वा तेषां देहत्यागकाले तत्संख्याह,— पञ्चेति। जाम्बवता सहिते पञ्च विभीषणहनूमज्जाम्बवन्मैन्दद्विविदा अमरास्ते- यूयं यावत्कलिः प्रलयरूपोमायः कलियुगश्च तावत्कालं जीवत। तत्र हनूमद्विभीषणयोः प्रलये इतरेषान्तु कल्पौ कृष्णावतारे नाश इति बोध्यम् ॥ ३३ ॥ ३४ ॥

तदेवमुक्त्वा काकुत्स्थः सर्वांस्तान् ऋक्षवानरान्।
उवाच बाढ़ं गच्छध्वं मया सार्धं यथोदितम्॥ ३५॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
अष्टोत्तरशततमः सर्गः॥ १०८॥

तदिति। विभीषणादीन् प्रति एवमुक्त्वा इतरान् प्रति गमनानुज्ञामाहेत्यर्थः। सर्वांस्तान् पूर्वोक्तपञ्चव्यतिरिक्तान्॥ ३५॥

इति रामाभिरामे श्रीरामीये रामायणतिलके
उत्तरकाण्डे अष्टोत्तरशततमः सर्गः॥ १०८॥

---

## नवाधिकशततमः सर्गः ।

प्रभातायान्तु शर्व्वर्य्यां पृथुवक्षा महायशाः ।
रामः कमलपत्राक्षः पुरोधसमथाब्रवीत् ॥ १ ॥
अग्निहोत्रं व्रजत्वग्रे दीप्यमानं सह द्विजैः ।
वाजपेयातपत्रञ्च शोभमानं महापथे ॥ २ ॥
ततो वसिष्ठस्तेजस्वी सर्व्वं निरवशेषतः ।
चकार विधिवद्धर्म्मं माहाप्रस्थानिकं विधिम् ॥ ३ ॥
ततः सूक्ष्माम्बरधरो ब्रह्ममावर्त्तयन् परम् ।
कुशान् गृहीत्वा पाणिभ्यां सरयूं प्रययावथ ॥ ४ ॥

अथ महाप्रस्थानविधिना भगवति निर्य्याते सर्व्वेषां तदनुगमनम् । प्रभातायामिति ॥ १ ॥

वाजपेयातपत्रम् । तस्यैव धर्मानुष्ठाने साधनत्वात् । राजचिह्नस्य च संत्यक्तत्वादिति भावः ॥ २ ॥

महाप्रस्थानं नाम परलोकगमनाय सङ्कल्पपूर्व्वकं प्रस्थानं तदर्हति माहाप्रस्थानिकं विधिमुद्दिश्य यो धर्म्मः कर्त्तव्यस्तं धर्म्मं विधिवच्चकार ॥३॥

ब्रह्ममावर्त्तयन्नित्यकारान्तत्वमार्षम् । परं ब्रह्मेत्यर्थः । प्रागगस्त्योपदिष्टं ब्रह्मसिद्धान्तप्रधानमहामन्त्रसर्व्वस्वं श्रीमद्ब्रह्महृदयमावर्त्तयन् सम्यक्मनोवाग्वृत्तिभ्यामनुसन्धान इत्यर्थ इति कतकः । ब्रह्मप्रति-

अव्याहरन् क्वचित् किञ्चिन्निश्चेष्टो निःसुखः पथि ।
निर्जगाम गृहात्तस्माद्दीप्यमानो यथांशुमान् ॥ ५ ॥
रामस्य दक्षिणे पार्श्वे पद्मा श्रीः समुपाश्रिता ।
सव्येऽपि च मही देवी व्यवसायस्तथाग्रतः ॥ ६ ॥
शरा नानाविधाश्चापि धनुरायतमुत्तमम् ।
तथायुधाश्च ते सर्वे ययुः पुरुषविग्रहाः ॥ ७ ॥
वेदा ब्राह्मणरूपेण गायत्री सर्वरक्षिणी ।
ओङ्कारोऽथ वषट्कारः सर्वे राममनुव्रताः ॥ ८ ॥

पादकोपनिषद आवर्त्तयन्नित्यर्थ इत्यन्ये । कुशान् गृहीत्वा अङ्गुलिविवरप्रसक्तान् कृत्वा प्रययौ । वक्ष्यमाणलक्षणमहाप्रस्थानविधिनेति शेषः ॥ ४ ॥

तदेवाहाव्याहरन्निति । निश्चेष्टः किञ्चित्पदार्थदर्शनादिविषयकेन्द्रियचेष्टारहितः । निःसुखः पथि पादुकासुखमप्युपेक्ष्य शर्कराकण्टकादिदुःखसहिष्णुः ॥ ५ ॥

पद्मा पद्महस्ता श्रीर्लक्ष्मीः । महीदेवी । ह्रीश्चते लक्ष्मीश्च पत्न्याविति श्रुतेः । श्रुतौ ह्रीर्मही । व्यवसायो व्यवसायशक्तिः संहारशक्तिः ॥ ६ ॥

तथा संहारशक्तिसहकारिणामपि मूर्त्तत्वेनोपासकत्वमाह,—शरा इति । एवं रौद्रशक्तिसेवा दर्शिता ॥ ७ ॥

अथ हैरण्यगर्भशक्तिसेवां दर्शयति । वेदा इति । गायत्री सर्वरक्षिणी सर्ववेदतन्मूलप्रणवाधिकृतानिखिलजगद्रक्षिका । तथा अपि

ऋषयश्च महात्मानः सर्वएव महीसुराः ।
अन्वगच्छन् महात्मानं स्वर्गद्वारमपावृतम् ॥ ९ ॥
तं यान्तमनुगच्छन्ति ह्यन्तःपुरचराः स्त्रियः ।
सवृद्धबालदासीकाः सवर्षवरकिङ्कराः ॥ १० ॥
सान्तःपुरश्च भरतः शत्रुघ्नसहितो ययौ ।
रामं गतिमुपागम्य साग्निहोत्रमनुव्रतः ॥ ११ ॥
ते च सर्वे महात्मानः साग्निहोत्राः समागताः ।
सपुत्रदाराः काकुत्स्थ ! मनुजग्मुर्महामतिम् ॥ १२ ॥
मन्त्रिणो भृत्यवर्गाश्च सपुत्रपशुबान्धवाः ।
सर्वे सहानुगा राममन्वगच्छन् प्रहृष्टवत् ॥ १३ ॥

मूलश्चोङ्कारोऽप्यनुगतः । अनेन सर्वज्ञानयोगो दर्शितः । वषट्कारः कर्मयोगः ॥ ८ ॥

स्वर्गद्वारमपावृतं परस्वर्गस्य ब्रह्मलोकस्य द्वारमपावृतमनावृतम् । रामेण सहोपेन्द्रलोकगमनद्वारा रामेण सहागतानां सर्वजन्तूनां ब्रह्मलोकस्यैव प्राप्तेरिति बोध्यम् । अतएव बहुशः प्रागुक्तम् । रामोराज्यमुपासित्वा ब्रह्मलोकं गमिष्यतीति । रामस्थितिलोकस्यैव ब्रह्मलोकत्वाच्च ॥ ९ ॥

वर्षवराः षण्ढाः ॥ १० ॥

सान्तःपुरः अन्तःपुरस्त्रीसहितः । गतिं सर्वलोकगतिदं उपागम्य समीपमागत्यानुव्रतः । पश्चाच्चलित इत्यर्थः ॥ ११ ॥

महात्मानो ब्राह्मणाः ॥ १२ ॥

ततः सर्वाः प्रकृतयो हृष्टपुष्टजनावृताः ।
गच्छन्तमनुगच्छन्ति राघवं गुणरञ्जिताः ॥ १४ ॥
ततः सस्त्रीपुमांसस्ते सपक्षिपशुबान्धवाः ।
राघवस्यानुगाः सर्वे हृष्टा विगतकल्मषाः ॥ १५ ॥
स्नाताः प्रमुदिताः सर्वे हृष्टपुष्टाश्च वानराः ।
दृढं किलकिलाशब्दैः सर्वं राममनुव्रतम् ॥ १६ ॥
न तत्र कश्चिद्दीनो वा व्रीडितो वापि दुःखितः ।
हृष्टं समुदितं सर्वं बभूव परमाद्भुतम् ॥ १७ ॥
द्रष्टुकामोथ निर्यान्तं रामं जानपदो जनः ।
यः प्राप्तः सोऽपि दृष्ट्वैव स्वर्गायानुगतो जनः ॥ १८ ॥
ऋक्षवानररक्षांसि जनाश्च पुरवासिनः ।
आगच्छन् परया भक्त्या पृष्ठतः सुसमाहिताः ॥ १९ ॥

प्रहृष्टवत् देहविसर्जने समीपावस्थानलाभजः प्रहर्षः । पुष्टैस्तु तल्लब्धमिति ॥ १३ ॥ १४ ॥ १५ ॥

दृढं दृढानुगमननिश्चयं किलकिलाशब्देरुपलक्षितं सर्वं वानरबलमिति शेषः ॥ १६ ॥

दीनो दीनाकृतिः । व्रीडितः । गते रामे कथमहन्तिष्ठामीति लज्जावशात् रामानुगमनं किन्तु सन्तोषेणैवेत्यर्थः । समुदितं मिलितं सर्वं परमाद्भुतं परलोकगमनायैवम्बिधहर्षयुक्तमित्याश्चर्यकरमभूदित्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥

यानि भूतानि नगरेऽप्यन्तर्धानगतानि च ।
राघवन्तान्यनुययुः स्वर्गाय समुपस्थितम् ॥ २० ॥
यानि पश्यन्ति काकुत्स्थं स्थावराणि चराणि च ।
सर्वाणि रामगमने अनुजग्मुर्हि तान्यपि ॥ २१ ॥
नोच्छ्वसत्तदयोध्यायां सुसूक्ष्ममपि दृश्यते ।
तिर्य्यग्योनिगताश्चैव सर्वे राममनुव्रताः ॥ २२ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
नवाधिकशततमः सर्गः ॥ १०९ ॥

अन्तर्धानगतानि भूतप्रेतपिशाचादीनि भद्रकाल्यादीनि च ॥ २० ॥

स्थावराणीति । स्थावराणामनुगमनं भगवता रामस्य सदयावलोकनेन तदानीं ज्ञानक्रियाशक्त्युद्भवादुपपद्यते ॥ २१ ॥

उच्छ्वसत्प्राणिमात्रमित्यर्थः । सुसूक्ष्ममपि न दृश्यते । अननुयातमिति शेषः ॥ २२ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके उत्तरकाण्डे
नवाधिकशततमः सर्गः ॥ १०९ ॥

## दशाधिकशततमः सर्गः ।

अध्यर्द्धं योजनं गत्वा नदीं पश्चान्मुखाश्रिताम् ।
सरयूं पुण्यसलिलां ददर्श रघुनन्दनः ॥ १ ॥
तां नदीमाकुलावर्त्तां सर्व्वत्रानुसरन्नृपः ।
आगतः सप्रजो रामस्तन्देशं रघुनन्दनः ॥ २ ॥
अथ तस्मिन् मुहूर्त्ते तु ब्रह्मा लोकपितामहः ।
सर्व्वैः परिवृतो देवैर्ऋषिभिश्च महात्मभिः ॥ ३ ॥
आययौ यत्र काकुत्स्थः स्वर्गाय समुपस्थितः ।
विमानशतकोटीभिर्दिव्याभिरभिसंवृतः ॥ ४ ॥
दिव्यतेजोवृतं व्योम ज्योतिर्भूतमनुत्तमम् ।
स्वयं प्रभैः स्वतेजोभिः स्वर्गिभिः पुण्यकर्मभिः ॥ ५ ॥

अथ रामेण स्वस्वरूपं प्राप्य पश्चात्सर्वजन्तूनां पितामहानुमत्या ब्रह्मलोकसमे सन्तानकलोके प्रापणम् । अध्यर्धेति । अर्धाधिकं योजनं गत्वेत्यर्थः । पश्चान्मुखाश्रितां पश्चान्मुखेन स्वेन स्वेनाश्रिताम् ॥ १ ॥

तं देशं स्वर्गप्रापकं देशम् ॥ २ ॥

तस्मिन् मुहूर्त्ते लोकपितामहो ब्रह्मा आययौ इत्युत्तरेणान्वयः । रामपरिकरस्य यथोचितलोकप्रापणार्थमिति शेषः ॥ ३ ॥

स्वर्गाय स्वर्गं गन्तुम् ॥ ४ ॥

पुण्या वाता ववुश्चैव गन्धवन्तः सुखप्रदाः ।
पपात पुष्पवृष्टिश्च देवैर्मुक्ता महौघवत् ॥ ६ ॥
तस्मिंस्तूर्य्यशतैः कीर्णे गन्धर्वाप्सरसंकुले ।
सरयूसलिलं रामः पद्भ्यां समुपचक्रमे ॥ ७ ॥
ततः पितामहोवाणी त्वन्तरिक्षादभाषत ।
आगच्छ विष्णो ! भद्रन्ते दिष्ट्या प्राप्तोषि राघव ! ॥ ८ ॥
भ्रातृभिः सह देवाभैः प्रविशस्व स्विकान्तनुम् ।
यामिच्छसि महाबाहो ! तां तनुं प्रविश स्विकाम् ॥ ९ ॥

प्रथमतो दिव्यतेजसा व्याप्तं व्योम स्वयम्भुभिः स्वयमेव प्रकाशान्तरनैरपेक्ष्येण प्रकाशमानैः स्वर्गिभिः स्वतेजोभिः किरणैरनुत्तममतिशयेन ज्योतिर्भूतं ज्योतिर्मयमभूदित्यर्थः ॥ ५ ॥

महौघवत् महासमृद्धिमतीत्यर्थः ॥ ६ ॥

तूर्य्यशतैः संकीर्णे तस्मिन् काले इत्यर्थः । गन्धर्वाप्सरसङ्कुले गन्धर्वाप्सरः सङ्कुल इति यावत् । पद्भ्यां समुपचक्रमे । गन्तुमिति शेषः ॥ ७ ॥

अन्तरिक्षात् समीपमागत्याभाषतेत्यर्थः । हे विष्णो लोकानुग्रहाय गृहीतविष्णुशरीर ब्रह्मन् राघव दिष्ट्या प्राप्तोसि मायागृहीतदुःखमयनटनयोग्यमनुष्यशरीरविसर्जनकालं प्राप्तोसि । ते भद्रमस्तु कल्याणमस्तु । अथागच्छ । यतीतोलोकान् मनुष्यलोकं गतस्त्वं लोकमित्यर्थः ॥ ८ ॥

तदर्थं देवाभैः देवसदृशैः तव सदृशैर्भ्रातृभिः सह स्विकां तनुं स्वतनु-

वैष्णवीन्तां महातेजो यद्वाकाशं सनातनम् ।
त्वं हि लोकगतिर्देव न त्वां केचित्प्रजानते ॥ १० ॥

वदत्यन्तप्रियं लोकं प्रविश। अत्र भ्रातृभिरिति बहुवचनेन लक्ष्मणस्यापि तदानीं तत्रागमनं सूचयतीति तीर्थः। कतकस्तु यद्यपि शत्रुघ्न एक एव सह गच्छति तथापि पुरोगतस्य सह गच्छतः पश्चादागमिष्यतस्य भ्रातुस्तत्र प्रवेशः सामान्येनायतन प्रवेश इत्युच्यते इति न विरोध इति व्याचख्यौ। भरतानुगमनं भगवद्देहविसर्जनदर्शनपर्य्यन्तमिति च पूर्वसर्गे सान्तःपुरश्च भरतः शत्रुघ्नसहितो ययाविति पाठे व्याख्याति स्म च। तत्र भरतस्य पश्चाद्गमने मूलमन्वेष्टव्यम्। पूजायां बहुवचनमित्यन्ये। ननु मदीयतनूनामनेकत्वात् क्वचित्प्रविशेत्युच्यते तत्राह,—यामिति ॥ ९ ॥

तदेव विशदयति। वैष्णवीमिति। हे महातेजः वैष्णवीम् श्रीपेन्द्रीम्। यतो मनुष्यदेहस्तां वा प्रविश। यद्वाकाशं सनातनम्। यद्वा सनातनमाकाशं शुद्धब्रह्मरूपं वा प्रविश। तद्रूपेण वा तिष्ठेत्यर्थः। आकाशशब्दो हि ब्रह्मणि तत्र तत्र श्रुतिषु प्रसिद्धः। कतकस्तु वैष्णवीं तां महातेजः स्वां तनुं प्रविश स्वयमिति पांक्तः पाठः। यामिच्छसीति एतत्पाक्तनमर्धञ्च प्रामादिकमित्याह,—अग्रे च पितामह वच इति श्लोक इति तत् स्वरसः। तीर्थस्तु। यद्वाकाशं सनातनमिति व्याख्यायातःपरं ब्रह्मा स्तौति। त्वं हीति। लोकगतिः लोकानां स्वर्गादिकं गमयिता लोकैर्गम्यश्च त्वमेवेत्यर्थः। त्वां केचिदतिशयिततपः सम्पन्ना अपि न प्रजानते ॥ १० ॥

एते मायां विशालाक्षीं तव पूर्वपरिग्रहाम्।
त्वामचिन्त्यं महद्भूतमक्षयञ्चाजरं तथा॥
यामिच्छसि महातेजस्तान्तनुं प्रविश स्वयम्॥ ११॥
पितामहवचः श्रुत्वा विनिश्चित्य महामतिः।
विवेश वैष्णवं तेजः सशरीरः सहानुजः॥ १२॥

तर्हि किमन्ये एव सर्वथेत्याह,—एते इति। मायां ज्ञानशक्तिरूपां विनाऽन्ये न जानन्तीत्यर्थः। विशालाक्षीमित्यनेन तस्याः सर्वविषयता सूचिता। पूर्वपरिग्रहाम्। तेन सहजत्वं सूचितम्। श्रवणमननिदिध्यासनादिना ईदृशी ज्ञानशक्तिर्येषां प्रादुर्भवति तएव त्वां जानन्तीति तात्पर्य्यम्। तत्र तादृशज्ञानविषयं स्वरूपमाह,—त्वामिति। अचिन्त्यं देशतः परिच्छेदशून्यम्। अतएव महद्भूतं प्राप्तम्। अविशेषात्सर्ववस्तुभिरिति शेषः। तेन वस्तुपरिच्छेदशून्यम्। अक्षयं कालपरिच्छेदशून्यम्। अजरं अविकारिणम्। एवं स्तुत्वा प्रकृतिं विज्ञापयति। यामिति॥ ११॥

अथ स्वसालोक्यकाङ्क्षिणो जनान् सन्तानपरम्परायं स्वलोकं प्रापय्य क्रमेण परमं पदन्नेतुकामोदयालुर्भगवान् स्वतोप्यस्मानुत्तमं लोकं प्रापितवानिति तत्तोषायैवैन्द्रं लोकमेव गच्छति स्मेत्याह,—पितामहेति। महामतिः सर्वज्ञो भगवान्विनिश्चित्य प्रागुक्तं निश्चयं कृत्वा सशरीरो वैष्णवं तेजो यत्तज्ज्वालावत्तेजोमयमैन्द्रं विवेश। अनेन तेजोमय एव देहोमायया मनुष्यदेहादिभिर्मनुष्यदेहत्वेन गृहीत इति ध्वनितम्। तेजःप्रवेशे जघे जलवदविवेकेनाग्रहात् सहानुज इत्यनेना-

ततो विष्णुमयं देवं पूजयन्ति स्म देवता: ।
साध्या मरुद्गणाश्चैव सेन्द्राः साग्निपुरोगमा: ॥ १३ ॥
ये च दिव्या ऋषिगणा गन्धर्वाप्सरसश्च या: ।
सुपर्णनागयक्षाश्च दैत्यदानवराक्षसा: ॥ १४ ॥
सर्वं पुष्टं प्रमुदितं सुसम्पूर्णमनोरथम् ।
साधु साध्विति तैर्देवैस्त्रिदिवं गतकल्मषम् ॥ १५ ॥
अथ विष्णुर्महातेजा: पितामहमुवाच ह ।
एषां लोकं जनौघानां दातुमर्हसि सुव्रत ! ॥ १६ ॥
इमे हि सर्वे स्नेहान् मामनुयाता यशस्विन: ।
भक्ता हि भजितव्याश्च त्यक्तात्मानश्च मत्कृते ॥ १७ ॥

नुजशरीराणामपि तथैव तेजोमयत्वं सूचितम्। सशरीरशब्दबोधित-स्वसाहचर्य्येण तेषामपि सशरीरप्रवेशबोधनात्। १२ ॥

ततस्तत्प्रवेशात्। विष्णुमयम् उपेन्द्राभेदमापन्नं देवं देवताः पूजयन्ति स्म। कास्ता देवतास्तत्राह,—साध्या इत्यादि। १३। १४।

सर्वमिति। त्वय्यनागते सर्वमिदं त्रिदिवस्थजनजातं पुष्टं प्रमुदितं सुसम्पूर्णमनोरथं गतकल्मषञ्च जातमिति तैर्देवैः साधु साध्विति भाषितम्। १५।

अथ विष्णुः विष्णुशरीरसंक्रान्तशरीरो महातेजा रामः पितामहमुवाच तदाह,—एषां लोकमिति। तल्लोकप्राप्तिद्वारा प्रतिसञ्चरे त्वया सह मोक्षप्रापकं लोकम् एषां दातुमर्हसि। १६।

तच्छ्रुत्वा विष्णुवचनं ब्रह्मा लोकगुरुः प्रभुः।
लोकान् सन्तानकान्नाम यास्यन्तीमे समागताः॥ १८॥
यच्च तिर्य्यग्गतं किञ्चित् त्वामेव मनुचिन्तयत्।
प्राणांस्त्यक्ष्यति भक्त्या तत्सन्तानेषु निवत्स्यति॥ १९॥
सर्व्वैर्ब्रह्मगुणैर्युक्ते ब्रह्मलोकादनन्तरे।

किमर्थमेव मेतन्मुक्तये यत्नस्तत्राह,—इमे हीति। यतो मम-स्नेहादेते मामनुयाता अनुगमनं प्राप्ताः। भक्ताः अतएव मे भजितव्या भजनीयाः। मत्कृते मद्वियोगासहिष्णुतया त्यक्तात्मानस्त्यक्त-शरीराः। अत एषां तादृशलोकदानमुचितमिति भावः। भक्ता हि भाषितव्या मे इति पाठे यत इमे भक्ता अत इमे भाषितव्याः। एतत्-प्रयोजनार्थं भवन्तं प्रत्यवश्यं मया वक्तव्या इत्यर्थः। १७॥

लोकगुरुः सर्व्वजगत्कर्त्ता वेदादिसर्व्वविद्योपदेष्टा च। प्रभुः नित्य-नैमित्तिकविहितनिषिद्धकर्म्मणां फलप्रापणे समर्थः। इमे त्वया सह-समागताः सन्तानकान्नाम लोकान् क्रमेण ब्रह्मलोकप्राप्तिद्वारा मुक्ति-जनकान्यास्यन्ति॥ १८॥

ननु कथं ब्रह्मविद्भ्यो ब्रह्मलोको वानरप्राप्यस्तत्राह,—यच्चेति। तिर्य्यग्गतमपि यत्किञ्चिदत्र क्वापि पदार्थं त्वामेवं विष्णुमिति चिन्तयत् यत्किञ्चित्पदार्थं विष्णुत्वेन भावयत् त्वयि विष्णौ भक्त्या युक्तं प्राणां-स्त्यक्ष्यति तत्सन्तानकनामकलोकेषु वत्स्यति। किं पुनर्वक्तव्यं य एते त्वदनुरागेण त्वदनुगमनपूर्व्वं प्राणांस्त्यजन्ति ते सन्तानेषु वत्स्य-न्तीति। १९।

वानराश्च स्विकां योनिमृक्षाश्चैव तथा ययुः ॥ २० ॥
येभ्यो विनिःसृताः सर्वे सुरेभ्यः सुरसम्भवाः।
तेषु प्रविविशे चैव सुग्रीवः सूर्य्यमण्डलम् ॥ २१ ॥
पश्यतां सर्वदेवानां स्वान् पितॄन् प्रतिपेदिरे।
तथा ब्रुवति देवेशे गोप्रतारमुपागताः ॥ २२ ॥
भेजिरे सरयूं सर्वे हर्षपूर्णाश्रुविक्लवाः।
अवगाह्याप्सु योयो वै प्राणांस्त्यक्त्वा प्रहृष्टवत् ॥ २३ ॥
मानुषं देहमुत्सृज्य विमानं सोऽध्यरोहत।
तिर्य्यग्योनिगतानाञ्च शतानि सरयूजलम् ॥ २४ ॥
संप्राप्य त्रिदिवं जग्मुः प्रभासुरवपूंषि तु।
दिव्यादिव्येन वपुषा देवा दीप्ता इवाभवन् ॥ २५ ॥

कोऽसौ सन्तानकलोकस्तत्राह,—सर्वैर्गुणैः सत्यसंकल्पत्वादि ब्रह्मगुणैर्युक्ते। ब्रह्मलोकादनन्तरे तत्समीपस्थे। अनेन तत्र स्थितानामपि क्रमेण ब्रह्मलोकप्राप्त्या ब्रह्मणा सह मुक्तिः सूचिता। एवं सामान्यतो वानराणां सान्तानिकलोकप्राप्तिमुपदिश्य देवांशानां सुग्रीवादीनां तत्तद्देवादिस्वरूपप्राप्तिमाह,—वानराश्चेति। वानराः सुग्रीवादयः। ऋक्षाः जाम्बवदतिरिक्ताः स्विकां स्वीयां योनिं देवयोनिं स्वस्वदेवरूपं ययुः ॥ २० ॥

उक्तमेवार्थं स्पष्टयति।• येभ्य इति। सुरेभ्य इत्युपलक्षणम्। येभ्यो देवर्ष्यादिभ्यो ये विनिःसृतास्ते सुरसम्भवा स्वपितॄन् प्रतिपेदिरे।

गत्वा तु सरयूतोयं स्थावराणि चराणि च ।
प्राप्य तत्तोयविक्लेदं देवलोकमुपागमन् ॥ २६ ॥
तस्मिन्नेऽपि समापन्ना ऋक्षवानरराक्षसाः ।
तेऽपि स्वर्गं प्रविविशुर्देहान्निक्षिप्य चाम्भसि ॥ २७ ॥
ततः समागतान् सर्वान् स्थाप्य लोकगुरुर्दिवि ।

तेषु मध्ये सुग्रीवः सूर्य्यमण्डलं प्रविविशे । अत्र ययुः प्रतिपेदिरे इति निर्देशो भविष्यदर्थे । अवतीर्य्य समीकृत्य स्वांशान् स्वीकुर्वते पुनरिति शास्त्रात् । उक्तार्थमुपसंहरति । तथेति । देवेश पितामह तथेत्युक्त-वति । आगच्छ प्रविश स्विकान्तनमित्युक्तवति इत्यर्थः । गोप्रतारं गोप्रताराख्यं तीर्थं सारवमुपागताः सन्तः सर्वे हर्षपर्य्याश्रुविक्लवाः आनन्दजाश्रुपूर्णतया विक्लवबीक्षणाः सरयूं भेजिरे । अथ यो यः प्राणी तदा सरयूजलमवगाह्य हृष्टवद्धष्ट आसीत् स मानुषं देहमुत्-सृज्य विमानमध्यरोहत । तिर्य्यग्योनिगतानां शतानि अनेकानि सरयजलं तदवगाह्यं प्राप्य प्रभासुराणि वपूंसि येषां तादृशानि भूत्वा त्रिदिवं जग्मुः । दिव्यादिव्यवपुषः सन्तो दिव्येन वपुषा दीप्ता देवा इवाभवन् ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

अथ स्थावराणि चराणि च पश्वादीनि सरयूतोयं गत्वा तत्तोय-विक्लेदं प्राप्य तत्तोयमज्जनं प्राप्य देवलोकमुपागमन् । कल्पवृक्षका-मगव्यादिस्वरूपं प्राप्नवन्तीत्यर्थः ॥ २६ ॥

तस्मिन् सरयूजले समापन्नास्त्यक्तदेहास्तेऽपि सर्वे स्वतान् देहा-नम्भसि निक्षिप्य स्वर्गं सन्तानकलोकरूपं विविशुः ॥ २७ ॥

हृष्टैः प्रमुदितैर्देवैर्जगाम त्रिदिवं महत् ॥ २८ ॥

इत्यार्षे रामायणे वाल्मीकीये उत्तरकाण्डे
दशाधिकशततमः सर्गः ॥ ११० ॥

ततः समागतान् दिव्यैर्देहैरन्तरिक्षे स्वसमीपं प्राप्तान् दिवि तत्तदुचितस्वर्गे स्थापयित्वा स्वयं भगवदागमनाद्धृष्टैर्देवैः सह महत् त्रिदिवं स्वलोकं जगाम । २८ ।

इति रामाभिरामे श्रीरामीये रामायणतिलके उत्तरकाण्डे
दशाधिकशततमः सर्गः ॥ ११० ॥

---

# एकादशोत्तरशततमः सर्गः ।

एतावदेतदाख्यानं सोत्तरं ब्रह्मपूजितम् ।
रामायणमिति ख्यातं मुख्यं वाल्मीकिना कृतम् ॥ १ ॥
ततः प्रतिष्ठितो विष्णुः स्वर्गलोके यथा पुरा ।
येन व्याप्तमिदं सर्वं त्रैलोक्यं सचराचरम् ॥ २ ॥

अथ तत्काव्यफलोपदेशः । एतावदिति । सोत्तरम् उत्तरकाण्डसहितम् । ब्रह्मणा चतुर्मुखेन भगवदवतारचरितविषयत्वात् पूजितम् । किञ्च ब्रह्मभिर्ब्रह्मर्षिभिः पूजितम् । ब्रह्मणा स्वयं प्रवर्त्य वाल्मीकिना कारितत्वात् सर्वाख्यानेभ्यः प्रशस्तं रामायणमिति ख्यातम् ।

परानन्दमयो रामो अयते श्रवणादिभिः ।
अतोऽस्य अभिधा पुण्या रामायणमितीरिता ॥

वाल्मीकिना कृतमेतदाख्यानमेतावदेव एतावत् श्लोकसर्गकाण्डसंख्याकमेव नन्यूनमाधिकमित्यर्थः । १ ।

अथ पूर्वसर्गवृत्तानुवादपूर्वं काव्यस्यापवर्गान्तसाधकत्वेन श्रोतव्यार्थत्वप्रतिपादनम् । तत इति । ततो भक्तजनस्य स्वर्गप्रापणानन्तरं स्वयमपि विष्णुरूपेणोपेन्द्रत्वं प्राप्तः । स्वर्गलोके उपेन्द्रलोके यथा पुरा यथा पूर्वं प्रतिष्ठितः । एवं तर्हि सपरिच्छेदः किं स नेत्याह,—येनेति ।

ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
नित्यं शृण्वन्ति संहृष्टाः काव्यं रामायणन्दिवि ॥ ३ ॥
इदमाख्यानमायुष्यं सौभाग्यं पापनाशनम् ।
रामायणं वेदसमं श्राद्धेषु श्रावयेद्बुधः ॥ ४ ॥
अपुत्रो लभते पुत्रमधनो लभते धनम् ।
सर्वपापैः प्रमुच्येत पादमप्यस्य यः पठेत् ॥ ५ ॥
पापान्यपि च यः कुर्य्यादहन्यहनि मानवः ।
पठत्येकमपि श्लोकं पापात्सपरिमुच्यते ॥ ६ ॥
वाचकाय च दातव्यं वस्त्रं धेनु हिरण्यकम् ।
वाचके परितुष्टे तु तुष्टाः स्युः सर्व्वदेवताः ॥ ७ ॥
एतदाख्यानमायुष्यं पठन् रामायणं नरः ।
सपुत्रपौत्रो लोकेऽस्मिन् प्रेत्य चेह महीयते ॥ ८ ॥
रामायणं गोविसर्गे मध्याह्ने वा समाहितः ।

येन सचराचरं सर्वं त्रैलोक्यं जगदुपादानत्वेन व्याप्तम् । स्वर्गप्रतिष्ठितत्वन्तु मनुष्यदेहधारणावस्थायिकमिति भावः ॥ २ ॥

ततः अस्य काव्यस्य जगदुपादानकारणावतारचरिताख्यानत्वात् । देवादयोऽपि दिव्यं रामायणन्दिवि शृण्वन्ति ॥ ३ ॥

यत एवमत इदमाख्यानमायुष्यमिति । श्रुतं पठितञ्च सदायुर्वर्द्धनमित्यर्थः । सौभाग्यं सौभाग्यवर्द्धनम् । वेदसमं वेदवद्ब्रह्मविषयत्वेऽपि पौरुषेयत्वेन वेदतः किञ्चिन्न्यूनमित्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

श्रायाङ्के वा पराङ्के च वाचयन्नावसीदति ॥ ९ ॥
अयोध्यापि पुरी रम्या शून्या वर्षगणान् बहून्।
ऋषभं प्राप्य राजानं निवासमुपयास्यति ॥ १० ॥
एतदाख्यानमायुष्यं सभविष्यं सहोत्तरम्।

लोकेऽस्मिन् महीयते इत्यर्थः। प्रेत्य मरणोत्तरमपि। इह च चात्परलोके इहलोके च महीयते। इहलोके पूजा च कीर्त्यविच्छे-दात्। ८ ॥ ९ ॥

ततः परमयोध्या केन रूपेण स्थितेति शङ्कानिवृत्तये भविष्यद्-वृत्तान्तान्तरमाहायोध्यापीति। रम्या अयोध्यापुर्यपि बहून् वर्षगणान् शून्या सती कालान्तरे ऋषभं राजानमवाप्य निवासं जनाश्रयत्वमुपया-स्यति। अत्र कतकः। एवञ्चायोध्याविषयेऽभिषिक्तेन भरतेनायोध्या-देशो नन्दिग्रामे स्थित्वैव रक्षित इति द्रष्टव्यमिति। तच्च मानश्चिन्त्यम्।
सत्येन च शपे राजन् स्वर्गलाभेन चैव हि।
न कामये यथा राज्यं त्वां विना रघुनन्दनेति पूर्वं भरतोक्त्याविरुद्धत्वं। तथा।
भरतस्यापि शत्रुघ्नस्य योर्दारा उभे शुभे।
राघवस्यानुगमने निश्चितार्थाः समाययुः।
राघवस्तु चतुर्बाहुरभूत्तस्य कराङ्गयोः।
उभौ भरतशत्रुघ्नौ शङ्खचक्रौ बभूवतुरिति पाद्मविरुद्धत्वेत्यन्ये ॥ १० ॥

एतदिति। सभविष्यं भगवद्यानानन्तरं भगवदयोध्यावृत्तान्त-कथनसहितम्। सहोत्तरम् एतावदेतदाख्यानमित्यतः प्राक्तनोत्तर-काण्डसहितम्। प्रचेतसः पुत्रो वाल्मीकिः। एतन्नामायणाख्यानम्।

कृतवान् प्रचेतसः पुत्रस्तद्ब्रह्माप्यन्वमन्यत ॥ ११ ॥

इत्यार्षे श्रीमद्रामायणे चतुर्विंशतिसहस्रसंहितायां श्रीवाल्मीकीये उत्तरकाण्डे स्वर्गारोहणं नामैकादशोत्तरशततमः सर्गः ॥ १११ ॥

कृतवान्। प्रचेतसः पुत्र इत्यक्षराधिक्यमार्षत्वात्। तद्ब्रह्मा हिरण्यगर्भोऽप्यन्वमन्यत सत्यशब्दतया वेदोपबृंहणतया सर्वार्थसाधकतयाऽङ्गीकृतवानिति सर्वत्रसिद्धिः ॥ ११ ॥

इति रामाभिरामे श्रीरामीये रामायणतिलके उत्तरकाण्डे एकादशोत्तरशततमः सर्गः ॥ १११ ॥

निर्मलं कतकक्षोदादपि रामायणाम्बुधिम् ।
अत्यन्तं निर्मलं चक्रे रामः स्वमतिवाससा ॥ १ ॥
रामो रामायणाम्भोधौ सेतुं कृत्वा सुविस्तृतम् ।
पाखण्डिरक्षो वक्त्राणि ध्वस्तवान् साधुतोषकः ॥ २ ॥
उत्तरान्तैः सुवर्णिते निबंधावधिके परे ।
सप्तमे राघवे रामे रतिरस्तु चिदात्मके ॥ ३ ॥

अथ रामायणश्रवणविधिर्लिख्यते ।

रामायणे श्रुते दद्याद्रथं हेममयं सुधीः ।
चतुर्भिर्वाजिभिर्युक्तं तथा क्षौमपताकया ॥ १ ॥
रत्नैश्च विविधैर्युक्तं किङ्किणीनादनादितम् ।
सम्पादिते रथे सम्यग्धेनुं दद्यात्पयस्विनीम् ॥ २ ॥
ब्राह्मणान् भोजयेत्पश्चाच्छतमष्टोत्तरं सुधीः ।
एवं कृते विधाने च महाकाव्यं फलप्रदम् ।
रामायणं भवेन्नूनं नात्र कार्या विचारणा ॥ ३ ॥

इति रामायणविधानम् ।

श्रुत्वा रामायणं पुण्यं दद्याद्व्यासाय दक्षिणाम् ।
सुवर्णं धेनुसंयुक्तं वासांसि विविधानि च ॥ १ ॥
कर्णयोः कुण्डले दद्यादङ्गुलीयकमेव च ।
शय्यासनं तथा छत्रमुपानत्कारकं तथा ॥ २ ॥
भूमिदानं तथान्नस्य दानं ताम्बूलमेव च ।
भक्ष्यं भोज्यञ्च विविधं लेह्यं चोष्यं सदर्द्धिमत् ॥ ३ ॥
अश्वमेधसहस्रस्य वाजपेयशतस्य च ।
लभते श्रवणादेवाध्यायस्यैकस्य मानवः ॥ ४ ॥

प्रयागादीनि तीर्थानि गङ्गाद्याः सरितस्तथा ।
नैमिषादीन्यरण्यानि कुरुक्षेत्रादिकान्यपि ॥ ५ ॥
गतानि तेन लोकेऽस्मिन्येन रामायणं श्रुतम् ।
हेमभारं कुरुक्षेत्रे ग्रहे भानौ प्रयच्छति ॥ ६ ॥
यश्च रामायणं लोके शृणोति सम एव सः ।
सम्यक् श्रद्धासमायुक्तो लभते राघवीं कथाम् ॥ ७ ॥
सर्वपापात्प्रमुच्येत विष्णुलोकं स गच्छति ।
आदिकाव्यमिदं सर्वं पुरा वाल्मीकिना कृतम् ॥ ८ ॥
यः शृणोति सदा भक्त्या स गच्छेद्वैष्णवीं गतिम् ।
पुत्रदाराश्च वर्धन्ते सम्पदः सन्ततिस्तथा ॥
सत्यमेतद्विदित्वा तु श्रोतव्यं नियतात्मभिः ॥ १० ॥

इति रामायणश्रवणविधिः ।

रामं रामानुजं सीतां भरतं भरतानुजम् ।
सुग्रीवं वायुसूनुञ्च प्रणमामि पुनः पुनः ॥ १ ॥
यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
वाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ २ ॥
रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥ ३ ॥
मङ्गलं लेखकानाञ्च पाठकानाञ्च मङ्गलम् ।
मङ्गलं सर्वलोकानां भूमौ भूपतिमङ्गलम् ॥ ४ ॥